नेरिति किम् ? प्रविशति। 'यदागमास्तद्ग्रहणेन गृह्यन्ते' (प० ११), तेनाटा नास्ति व्यवधानम्। न्यविशत। नेरुपसर्गस्य ग्रहणम्—'अर्थवद्ग्रहणे नानर्थकस्य ग्रहणम्' (व्या० प० १) इति, तस्मादिह न भवति—मधुनि विशन्ति भ्रमराः॥

**१६६. परिव्यवेभ्यः क्रियः॥ [illegible]॥ (२६८४)**

'डुक्रीञ् द्रव्यविनिमये' (धा० पा० १४७४) ञित्त्वात्कर्त्रभिप्राये क्रियाफले सिद्धमात्मनेपदम्। अकर्त्र-

**न्यासः**

**न्यविशतेति**। अडागमेन व्यवधानमित्यात्मनेपदेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात् अतस्तान्निराकर्तुमाह—**अडागम इत्यादि**। **मधुनि विशन्तीति**। अत्र नेः परस्य विशतेरात्मनेपदं प्राप्नोति, तत् कस्मान्न भवतीत्याह—**नेरुपसर्गस्येत्यादि**। मधुशब्दस्य सप्तम्येकवचने 'इकोऽचि विभक्तौ' इति नुमि कृते मधुनीति रूपं भवति, तस्य चावयवो निशब्दोऽनर्थकः॥ १७॥

**परिव्यवेभ्यः क्रियः॥ परिक्रीणीते इति**। 'ई हल्यघोः' इतीत्त्वम्। **पर्यादय उपसर्गा गृह्यन्त इति**। कथम् ? क्रिय इति सम्बन्धलक्षणा षष्ठी, न पञ्चमी—क्रियो ये सम्बन्धिनः पर्यादय इति। अर्थद्वारकश्च तेषां

**पदमञ्जरी**

**विधीयत इति**। यद्यपि तिबादिसूत्रापेक्षया सर्वस्यैव प्रकरणस्य नियमार्थत्वम्, 'अनुदात्तङित आत्मनेपदम्' 'भावकर्मणोः' इति सूत्रद्वयापेक्षया तु विध्यर्थत्वमपि सम्भवतीति मत्वैवमुक्तम्। एवं सर्वत्र द्रष्टव्यम्।

**न्यविशतेत्यत्र** लङि निविश् ल् इति स्थिते लादेशो लकारमात्रापेक्षत्वाद् अन्तरङ्गः, अडागमस्तु लुङादिविशेषापेक्षत्वाद्बहिरङ्ग इति पूर्वं लादेशे विकरणश्च प्राप्नोति अडागमश्च, नित्यत्वाद्विकरणः। अडागमो हि विकरणे कृते तदन्तमेव लङि परतोऽङ्गम् तदादिग्रहणस्य स्यादिनुमर्थत्वादिति तस्यैव प्राप्नोति, अकृते विकरण धातुमात्रस्येति शब्दान्तरप्राप्तेरनित्यः; ततश्च विकरणान्तस्य विधीयमानोऽडागमो धातुमात्रं प्रत्यभक्त इति नेश्च धातोश्च व्यवधायक इत्यात्मनेपदं न प्राप्नोतीत्यत आह—**यदागमा इत्यादि**। एवं मन्यते—बाह्योपसर्ग-सम्बन्धापेक्षत्वादयं विधिर्बहिरङ्गः, अस्मिंश्चाप्रवृत्ते लादेशोऽप्यप्रवृत्त एव, अपवादविषयपरिहारेण हि तेन प्रवर्तितव्यम्। अनिर्वृत्तश्च लादेशो विकरणोत्पत्तौ न निमित्तम्, तेन लावस्थायामेवाड् भवन् धातुमात्रस्यैव भवति, ततश्च, तदवयवत्वान्न तस्यैव व्यवधायक इति। कथं तर्ह्युक्तम्—व्यवधानेऽपि भवतीति ? श्रुतिमात्रा-पेक्षया। क्वचित्तु—**अटा नास्ति व्यवधानमित्येव पाठः**। **मधुनि विशन्तीति** अङ्गभक्तो नुम् ङेरनवयव इति निशब्दस्यानर्थक्यम्। क्वचित्तु **मधूनि निविशन्ति भ्रमरा इति** शसन्तं पठ्यते॥ १७॥

**परिव्यवेभ्यः क्रियः॥** पर्यादय उपसर्गा गृह्यन्त इति कथं 'क्रियः' इति षष्ठी, उपसर्गैरेव पर्यादिभिरर्थ-द्वारको विशेषणविशेष्यभावलक्षणसम्बन्धः, न च क्रियो ये उपसर्गास्तेभ्यः परं धात्वन्तरं सम्भवतीति क्रीणा-

**भावबोधिनी**

नेः [नि से परे]—यह किस लिये है ? प्रविशति। [यहाँ नहीं होता है।] 'जिसका आगम होता है, उसी के ग्रहण से आगम का भी ग्रहण होता है' अतः अट् से व्यवधान नहीं होता है—'न्यविशत'। 'नि' उपसर्ग का ही ग्रहण है, क्योंकि 'अर्थवान् के ग्रहण में अनर्थक का ग्रहण नहीं होता है।' इस कारण यहाँ [आत्मनेपद] नहीं होता है—मधुनि विशन्ति भ्रमराः [मधु में भौंरे प्रवेश कर रहे हैं। यह 'नि' प्रत्ययावयव है उपसर्ग नहीं।]॥ १७॥

डुक्रीञ् द्रव्यविनिमय (खरीदना) अर्थ में है, ञित् होने से कर्तृगामी क्रियाफल रहने पर आत्मनेपद सिद्ध है। क्रियाफल के कर्तृगामी न रहने पर आत्मनेपद करने के लिये यह सूत्र बनाया गया है। परि, वि, अव—इनके

भिप्रायार्थोऽयमारम्भः। परिव्यवेभ्य उत्तरस्मात् क्रीणातेरात्मनेपदं भवति। परिक्रीणीते, विक्रीणीते, अवक्रीणीते।

पर्यादय उपसर्गा गृह्यन्ते, तेनेह न भवति—बहुवि क्रीणाति वनम् ॥

**१६७. विपराभ्यां जेः ॥ १९ ॥ (२६८५)**

'शेषात्कर्त्तरि परस्मैपदम्' (१.३.७८) इत्यस्यापवादः। विपरापूर्वाज्जयतेर्धातोरात्मनेपदं भवति। विजयते, पराजयते। विपराशब्दावुपसर्गौ गृह्येते; साहचर्यात्। तेनेह न भवति—बहुवि जयति वनम्। परा जयति सेनेति (म० भा० १.३.१९)॥

**न्यासः**

सम्बन्धो विशेषणविशेष्यभावलक्षणः। स चोपसर्गैरेव पर्यादिभिः सम्भवति, नान्यैरिति सामर्थ्यादुपसर्गग्रहणं भवति। **बहुवि क्रीणातीति**। बहवो वयो यस्मिन्निति बहुव्रीहिः। विशब्दोऽत्र पक्षिणि वर्त्तते ॥ १८ ॥

**विपराभ्यां जेः ॥ साहचर्यादिति**। उपसर्गग्रहणे हेतुः 'नेर्विशः' इत्यत्र नेरुपसर्गस्य ग्रहणम्। अनन्तर-सूत्रेऽपि पर्यादीनामुपसर्गाणामेव ग्रहणम्। अतः प्रकरणसाहचर्याद् विपराशब्दावुपसर्गौ गृह्येते—इत्येके।

अपरे तु वर्णयन्ति—साहचर्यं प्रत्यासत्त्युपलक्षणम्। येषां साहचर्यं तेषां नियोगतः प्रत्यासत्त्या भवितव्यमिति। अतः साहचर्यस्य प्रत्यासत्त्याऽविनाभावित्वात् तेन प्रत्यासत्तिर्लभ्यते। तदेतदुक्तं भवति—प्रत्यासत्तेर्विपराशब्दावुपसर्गौ गृह्येते इति। प्रत्यासत्तिश्च जयतेर्विपराशब्दाभ्यामुपसर्गाभ्यामेव, नानुपसर्गाभ्याम्। तथा हि—ताभ्यामेव जयत्यर्थो विशिष्यते, नेतराभ्यामिति ॥ १९ ॥

**पदमञ्जरी**

तेरेवात्मनेपदं भवतीति। यद्वा—पर्यादिविशेषणाय षष्ठीमनुभूयात्मनेपदसम्बन्धे 'क्रियः' इति पञ्चमी सम्पद्यते, तदाह—**इत्येतेभ्य उत्तरस्मात् क्रीणातेरिति**।

**बहुवीति**। बहवो वयः पक्षिणोऽस्मिन्निति बहुव्रीहिः, कर्मपदं चैतत्, पक्षिवाचिनो विशब्दस्य नपुंसकत्वाभावाद् विभक्त्यास्य व्यवधानात्केवलो नोदाहृतः। ननु बहुव्रीहावपि जहत्स्वार्थायां वृत्तौ वेरानर्थक्यम्, अजहत्स्वार्थायामपि तदर्थस्योपसर्जनत्वमिति न भविष्यति ? एवं तर्ह्युदाहरणदिगियं दर्शिता। इदं तत्रोदाहरणम्—वे क्रीणासि, अत्रैकदेशविकृतस्यानन्यत्वात्प्रसङ्गः; वी क्रीणीतः—अत्रैकादेशस्य पूर्वं प्रत्यन्तवद्भावात्प्रसङ्गः ॥ १८ ॥

**विपराभ्यां जेः ॥ साहचर्यादिति**। द्वयोर्दृष्टापचारत्वेऽपि परस्परसाहचर्यादित्यर्थः। 'नेर्विशः' इत्यादि-प्रकरणसाहचर्याद्वा। **बहुवीति**। अत्रापि वे जयसि, वी जयत इत्युदाहार्यम्। परा उत्कृष्टा। अथ कथं जेरेति निर्देशः, यावता प्रकृतिवदनुकरणं भवतीति 'अचि श्नुधातु' इत्यादिनेयङादेशेन भवितव्यम्, न च दीर्घेषु सावकाशमियङं परत्वाद् 'घेर्ङिति' इति गुणो बाधत इति युक्तम्; ह्रस्वेष्वपि पूर्वविप्रतिषेधेन इयङ इष्टत्वात्, तथा च 'क्षियः' इति निर्देशः ? उच्यते; धातुत्वं तावदर्थाश्रयम्—क्रियावचनो धातुरिति, इह वा विवक्षितार्थं रूपमात्रमनुकृतमिति। अनुकार्यस्यापि धातुत्वं नास्ति, प्रागेवानुकरणस्य ॥ १९ ॥

**भावबोधिनी**

बाद आने वाली √क्री धातु से आत्मनेपद होता है। उदाहरण—परिक्रीणीते [खरीदता है], विक्रीणीते [बेचता है], अवक्रीणीते [सस्ता खरीदता है]।

परि आदि उपसर्ग ही लिये जाते हैं। अतः यहाँ आत्मनेपद नहीं होता है—बहुवि क्रीणाति वनम्। [बहवः वयः= पक्षिणः यस्मिन् तत्, यहाँ 'बहुवि' यह वनम् का विशेषण है। उपसर्ग 'वि' नहीं है। अतः आत्मनेपद नहीं होता है] ॥१८॥

'शेषात् कर्तरि' (पा० सू० १.३.७८) का अपवाद यह है। 'वि और परा' उपसर्गों से युक्त जि धातु से आत्मनेपद होता है। उदाहरण—विजयते, पराजयते [जीतता है। हारता है।] साहचर्य के कारण वि और परा ये दोनों

## १६८. आङो दोऽनास्यविहरणे ॥ २० ॥ (२६८६)

**अकर्त्रभिप्रायार्थोऽयमारम्भः । आङ्पूर्वाद्ददातेरनास्यविहरणे वर्तमानादात्मनेपदं भवति । विद्यामादत्ते ।**

**अनास्यविहरण इति किम् ? आस्यं व्याददाति ।**

***आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः (म० भा० १.३.२०)* । विपादिकां व्याददाति । कूलं व्याददाति (म० भा० १.३.२०) ।**

### न्यासः

**आङो दोऽनास्यविहरणे ॥** ददातेरेवास्यविहरणे वृत्तिः सम्भवति, नान्येषां दारूपाणां धातूनामिति । अतस्तत्प्रतिषेधेन तस्यैव ग्रहणं विज्ञायत इत्यत आह—**आङ्पूर्वाद्दाञ इति । आदत्ते इति ।** पूर्ववदाकारलोपः, 'खरि च' इति चर्त्वम् ।

**'आस्यविहरणसमानक्रियादपि प्रतिषेधो वक्तव्यः'** इत्युसंख्यानव्याजेनास्यविहरणविषयं दर्शयति । कथम् ? विहरणग्रहणं न कर्त्तव्यम्, इहा 'आङो दोऽनास्ये' इत्येतद्वक्तव्यम्, तत्रास्ये दाञो वृत्तिर्न सम्भवतीति सामर्थ्यादास्यसमवायिन्यां क्रियायां वृत्तिर्विज्ञास्यते, तत्रैव प्रतिषेधः, तत् किं विहरणग्रहणेन ? ननु च 'आङो दोऽनास्ये' इत्येतावत्युच्यमाने, स्वं मुखमादत्ते देवदत्त इत्यत्रापि प्रतिषेधः स्यात्, नैष दोषः; या ह्यास्यविषयैव क्रिया तस्यां वर्त्तमानो ददातिरास्यवृत्तिर्भवति, विहरणमेवास्यविषयम्, ग्रहणं त्वास्यविषयं ग्रहीतृविषयञ्च । तदेवं विहरणमन्तरेणापि सिद्धे यद्विहरणग्रहणं क्रियते तस्यैतत् प्रयोजनम्—आस्यविहरणसमानक्रियादपि प्रतिषेधोऽयं यथा स्यादित्येवमित्येके । 'इतरेतरान्योऽन्योपपदाच्च' इत्यतश्चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः । तेनास्यविहरणसमानक्रियादपि प्रतिषेधो भवतीत्यपरे ।

### पदमञ्जरी

**आङो दोऽनास्यविहरणे ॥** यथैवावत्सा धेनुरानीयतामित्युक्ते सम्भवद्वत्ससम्बन्धा गोधेनुरेवानीयते, न महिष्यादिधेनुः; तथेहापि सम्भवदास्यविहरणस्य 'डुदाञ् दाने' इत्यस्यैव ग्रहणम्, न तु 'गामादाग्रहणेष्वविशेषः' इति सर्वेषां दारूपाणामित्याह—**आङ्पूर्वाद्दाञ इति ॥ आदत्त इति ।** श्लौ द्विर्वचनम्, पूर्ववदाकारलोपः, दकारस्य चर्त्वम् । क्वचिद्—**आङो ङिद्विशिष्टस्य ग्रहणं किम् ? भिक्षामाददातीति** पठ्यते, तत्र स्मृतावाकारः ।

**आस्यविहरणसमानक्रियादपीति ।** कथमिह 'आङो दोऽनास्ये' इतीयता सिद्धं द्रव्ये धातोर्वृत्त्यसम्भवादास्यसमवायिन्यां क्रियायां वर्तमानस्य समुदायस्य निषेधो विज्ञायते, नचैवं स्वं मुखमादत्त इत्यत्रापि मुखविषयत्वादादानस्य प्रतिषेधप्रसङ्गः, ग्राह्यास्य एव समवेता क्रिया, तस्यां वर्तमानो ददातिरास्ये वृत्तिर्भवति, ग्रहणन्तु ग्राह्यग्राहिणोरुभयोरपि समवेतम् । अनास्य इति पर्युदासः, आस्यानास्यसमुदायश्चास्यादन्य इति विधिरेव भविष्यति । एवं सिद्धे विहरणग्रहणं विहरणविशेषोपलक्षार्थम्, तेनासत्यप्यास्ये तादृशे विहरणे भविष्यति यादृशमास्यविहरणम् आस्यव्यादानम् । **विपादिकेति ।** पादस्फोटः = विपादिका ।

### भावबोधिनी

उपसर्ग ही लिये जाते हैं । इसलिये 'वहुवि जयति वनम्' [वहुत पक्षियों वाले वन की जय होती है ।] परा जयति सेना [परा = उत्कृष्ट सेना जीतती है]—यहाँ नहीं होता है ॥ १९ ॥

अकर्तृगामी क्रियाफल के विषय में आत्मनेपद की सिद्धि के लिये यह सूत्र बनाया जा रहा है । अनास्यविहरण [मुख का न खोलना] अर्थ में विद्यमान आङ् पूर्वक दा धातु से आत्मनेपद होता है । उदाहरण—विद्याम् आदत्ते [विद्या ग्रहण करता है ।]

अनास्यविहरणे—इसका क्या फल है—आस्यं व्याददाति । [मुख खोलता है । यहाँ आत्मनेपद न हो ।]

*स्वाङ्गकर्मकाच्चेति (म० भा० १.३.२० वा० २)*। इह मा भूत्–व्याददते पिपीलिकाः पतङ्गस्य मुखम् (म० भा० १.३.२०)॥

**१६९. क्रीडोऽनुसंपरिभ्यश्च ॥ २१ ॥ (२[illegible])**

'क्रीड़ विहारे' (धा० पा० ३५०)–एतस्माद् अनु, [illegible], परि–इत्येवंपूर्वाद् आङ्पूर्वाच्च आत्मनेपदं भवति। अनुक्रीडते, संक्रीडते, परिक्रीडते। आङः खल्वपि–आक्रीडते।

समासाहचर्यादन्वादिरुपसर्गो गृह्यते, तेनेह कर्मप्रवचनीयप्रयोगे न भवति–माणवकमनु क्रीडति (म० भा० १.३.२१)।

*समोऽकूजने इति वक्तव्यम् (म० भा० १.३.२१ वा० २)*। इह मा भूत्[1]–संक्रीडन्ति शकटानि।

**न्यासः**

**स्वाङ्गकर्मकाच्चेति**। वक्तव्यमिति शेषः। न चात्राद्रवमूर्तिमल्लक्षणं पारिभाषिकं स्वाङ्गं विवक्षितम्, किं तर्हि? स्वमङ्गं स्वाङ्गमिति। तत् कर्म यस्य स स्वाङ्गकर्मकः, तस्मात् स्वाङ्गकर्मकात् प्रतिषेधो भवतीत्येतदर्थरूपं वक्तव्यमित्यर्थः। तेन परसम्बन्धिना मुखेन यदा सकर्मको भवति तदा भवत्येवात्मनेपदम्—व्याददते पिपीलिकाः पतङ्गस्य मुखमिति। वक्तव्यशब्दस्य व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—कर्त्तरीति वर्त्तते, आस्यमिति च सम्बन्धिशब्दः, तत्रैवं विज्ञायते—'यस्मिन् कर्त्तर्येवात्मनेपदं भवति तस्य चेदास्यम्, इति। 'आङः' इति योगविभागः क्रियते—आगमयस्व तावन्माणवकम्, आनुते श्रृगालः, आपृच्छते गुरूनित्येवमर्थः तेन 'आगमेः क्षमायाम्' इति 'आङि नुप्रच्छ्योः' इति च नोपसंख्येयं भवति ॥ २० ॥

**क्रीडोऽनुसंपरिभ्यश्च ॥ समा साहचर्यादिति**। यद्यप्यन्वादिरुपसर्गत्वं व्यभिचरति, सम्शब्दस्तु न व्यभिचरति, अतस्तत्साहचर्यादन्वादिरुपसर्ग एव गृह्यते। **माणवकमनुक्रीडतीति**। माणवकेन सह क्रीडनीत्यर्थः। 'तृतीयार्थं' इत्यनुशब्दस्य कर्मप्रवचनीयसंज्ञा।

**पदमञ्जरी**

**स्वाङ्गकर्मकाच्चेति**। स्वमङ्गं स्वाङ्गम्, न तु पारिभाषिकमद्रवादिलक्षणम्। एतच्च न्यायसिद्धमेवोक्तम्, कथम्? कर्तरीति वर्तते, आस्यशब्दश्चायं सम्बन्धिशब्दः, कस्यास्यमित्यपेक्षायां यस्मिन् कर्तर्यात्मनेपदं तस्य चेत्तदास्यमिति विज्ञाते तेन परकीयास्यविहरणे विधिरेव भवति ॥ २० ॥

**क्रीडोऽनुसंपरिभ्यश्च ॥ माणवकमनुक्रीडतीति**। माणवकेन सह क्रीडतीत्यर्थः। 'तृतीयार्थं' इत्यनुः कर्मप्रवचनीसंज्ञकः। **आगमेरिति** ण्यन्तस्येदं ग्रहणम्। **आगमयस्व तावदिति**। सहस्व कञ्चित्कालं मा त्वरिष्ठा इत्यर्थः।

**भावबोधिनी**

*'मुख फैलाना के समान क्रियावाचक से भी आत्मनेपद का प्रतिषेध कहना चाहिये' *उदाहरण—विपादिकां व्याददाति [पैर की बिवाई को खोलता है।] कूलं व्याददाति [किनारे को काटता है।]

*'अपना अङ्ग कर्म हो ऐसी आङ् पूर्वक दा धातु से होता है—यह कहना चाहिये।' *उदाहरण—व्याददते पिपीलिकाः पतङ्गस्य मुखम् [चींटी पतंगे का मुख खोलती हैं]—यहाँ पर न हो ॥ २० ॥

√क्रीड़ विहारे-खेलना अर्थवाली क्रीड धातु से पहले—अनु, सम् और परि तथा आङ् उपसर्ग रहने पर उससे आत्मनेपद होता है। उदाहरण—अनुक्रीडते, संक्रीडते, परिक्रीडते। आङ् पूर्वक से भी होता है—आक्रीडते [खेलता है।]

सम् इसके साहचर्य के कारण अनु तथा परि उपसर्ग ही लिये जाते हैं अतः 'माणवकम् अनु क्रीडति [माणवक के साथ खेलता है]—यहाँ कर्मप्रवचनीय के योग में आत्मनेपद नहीं होता है।

---

१. सम्पादकैरनवधानतया परित्यक्तोऽयमंशः। अर्थसंगतेः भाष्ये दर्शनाच्च संयोजित।

*आगमेः क्षमायामात्मनेपदं वक्तव्यम् (म० भा० १.३.२१ वा० ३)* । क्षमा=उपेक्षा, कालहरणमिति यावत् । आगमयस्व तावन्माणवकम् ।

*शिक्षेर्जिज्ञासायाम् (म० भा० १.३.२१ वा० ४)* । विद्यासु शिक्षते (म० भा० १.३.२१) ।

*आशिषि नाथः (म० भा० १.३.२१ वा० ७)* । सर्पिषो नाथते । मधुनो नाथते (म० भा० १.३.२१) । आशिषीति किम् ? माणवकमनु नाथति ।

### न्यासः

आगमेरिति । आङ्पूर्वस्य गमेर्ण्यन्तस्य ग्रहणम् । क्षमा उपेक्षा कालहरणमिति । कालप्रतिपालनं प्रतीक्षणमित्यर्थः । आगमयस्वेति । 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञायाम्, 'मितां ह्रस्वः' इति ह्रस्वत्वम् । लोण्मध्यमपुरुषैकवचनम्, 'थासः से', 'सवाभ्यां वामौ' इति वादेशः ।

शिक्षेरिति । शकिः सन्नन्तो गृह्यते । विद्यासु शिक्षत इति । विद्यां जिज्ञासितुं घटत इत्यर्थः । शकेः सन्, 'सनि मीमाघुरभलभ' इत्यादिनेस्भावः । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासस्य लोपः । 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः, शिक्ष इति स्थिते लट् । यस्तु 'शिक्ष विद्योपादाने' इति पठ्यते, ततोऽनुदात्तेत्त्वादात्मनेपदं सिद्धमेव ।

आशिषि नाथ इति । 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' इत्यनुदात्तेत् पठ्यते । अनुदात्तेत्त्वादात्मनेपदे सिद्धे 'आशिष्येव नाथतेरात्मनेपदं भवति, याच्ञादिषु मा भूत्' इति नियमार्थमेतत् । सर्पिष इति । 'आशिषि नाथः' इति कर्मणि षष्ठी ।

### पदमञ्जरी

शिक्षेरिति । 'शिक्ष विद्योपादने' इत्यस्यानुदात्तेत्त्वादेव सिद्धमिति शकेः सन्नन्तस्य ग्रहणम् । शिक्षत इति । 'सनि मीमाघु' इत्यच इस्, स्कोः 'स्कोः संयोगाद्योः' इति सलोपः, 'अत्र लोपोऽभ्यासस्य' धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः । क्रियाविषयो हि शकेः प्रयोगः—भोक्तुं शक्नोति, गन्तुं शक्नोतीति । तदिह ज्ञानं विषयः, आत्मनेपदेनैव ज्ञानविषयत्वस्य गमितत्वाज्ज्ञानमिति न प्रयुज्यते ।

आशिषि नाथ इति । 'नाथृ नाधृ याच्ञोपतापैश्वर्याशीःषु' अनुदात्तेत् । नियमार्थं तु वचनम्—आशिष्येव यथा स्याद् याच्ञादिषु मा भूदिति । अनुदात्तेत्त्वं युजर्थम् । सर्पिषो नाथ इति । 'आशिषि नाथः' इति कर्मणि षष्ठी, सर्पिर्मे भूयादित्याशास्त इत्यर्थः । हरतेरिति । गतिः प्रकारः । पैतृकमिति । पितुरागतं प्रकारं सततं शीलयन्तीत्यर्थः । 'ऋतष्ठञ्', 'इसुसुक्तान्तात्कः' । प्रत्युदाहरणे सादृश्यमात्रं विवक्षितम्, न प्रकारताच्छील्यम् ।

### भावबोधिनी

*'कूजन से भिन्न अर्थ में सम् उपसर्ग के साथ क्रीड से आत्मनेपद होता है' । *यहाँ न हो–प्रत्युदाहरण—संक्रीडन्ति शकटानि । गाड़ियाँ आवाज करती हैं । *'क्षमा अर्थ में आङ् पूर्वक गमि धातु से आत्मनेपद होता है' । *क्षमा = उपेक्षा, समय बिताना । उदाहरण–आगमयस्व तावन्माणवकम् [कुछ देर तक छात्र की प्रतीक्षा कर लीजिये] । *शिक्ष से जिज्ञासा अर्थ में आत्मनेपद होता है' *विद्यासु शिक्षते । [यहाँ शक् धातु का सन्नन्त रूप है क्योंकि शिक्ष तो स्वतः आत्मनेपदी है । विद्या जानने के लिये समर्थ होना चाहता है ।] *'आशीर्वाद अर्थ में नाथ से आत्मनेपद होता है' । *'सर्पिषो नाथते' मधुनो नाथते । [घृत हो–इसका आशीर्वाद देता है, मधु हो—इसका आशीर्वाद देता है 'आशिषि नाथः' वार्तिक से कर्म में षष्ठी है ।] 'आशिषि' इसका क्या फल है ? माणवकमनुनाथति [माणवक को माँगता है । यहाँ नहीं होता है ।]

*हरतेर्गतताच्छील्ये[1] (म० भा० १.३.२१ वा० ६)*। **पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्ते** (म० भा० १.३.२१ वा० ६)। **गतताच्छील्य इति किम्? मातुरनुहरति। [पितुरनुहरति।]**

*किरतेर्हर्षजीविकाकुलायकरणेष्विति वक्तव्यम् (म० भा० १.३.२१ वा० ५)*। **अपस्किरते वृषभो हृष्टः। जीविकायाम्—अपस्किरते कुक्कुटो भक्षार्थी। कुलायकरणे—अपस्किरते श्वाऽऽश्रयार्थी** (म० भा० १.३.२१ वा० ५)। **हर्षादिष्विति किम्? अपकिरति कुसुमम्।**

*आङि नुप्रच्छ्योरुपसंख्यानम् (म० भा० १.३.२१ वा० ८)*। **आनुते शृगालः, आपृच्छते गुरुम्।**

*शप उपलम्भन इति वक्तव्यम् (म० भा० १.३.२१ वा० ९)*। **वाचा शरीरस्पर्शनम्=उपलम्भनम्। देवदत्ताय शपते, यज्ञदत्ताय शपते** (म० भा० १.३.२१)। **उपलम्भने इति किम्? शपति॥**

### न्यासः

**हरतेर्गतिताच्छील्य इति।** गतेस्ताच्छील्यं गतिताच्छील्यम्, ताच्छील्यम् = तत्स्वभावता। **पैतृकमश्वा अनुहरन्ते, मातृकं गावोऽनुहरन्त इति।** पितृवन् मातृवद् गमनमेषां स्वभाव इत्यर्थः। **मातुरनुहरति, पितुरनुहरतीति।** मातुराकारं पितुराकारमनुकरोतीत्यर्थः। मातृसदृशः, पितृसदृश इत्यर्थः। पैतृकमिति पितुरागतमिति 'ऋतष्ठञ्', 'इसुसुक्तान्तात् कः'। मातुरनुहरतीत्यत्र गतिताच्छील्यं न विवक्षितम्।

**किरतेरित्यादि।** 'कॄ विक्षेपे' अस्य विक्षेप एवार्थः। हर्षादयस्तस्य विषयभूताः। अत्र हर्षो विक्षेपस्य कारणम्, जीविकाकुलायकरणञ्च तत्फलम्। एतेष्वेवार्थेषु किरतेरात्मनेपदं भवति। **अपस्किरत इति।** 'अपाच्चतुष्पाच्छकुनिष्वालेखने' सुट्।

**आनुते इति।** 'णु स्तुतौ', अदादिः। अयञ्चात्रोत्कण्ठापूर्वकशब्दने वर्तते। **आपृच्छत इति।** 'प्रच्छ ज्ञीप्सायाम्' तौदादिकः, ग्रह्यादिना संप्रसारणम्।

**वाचा शरीरस्पर्शनमुपलम्भनमिति।** शपथविशेषः। तथा हि—देवदत्तस्य शरीरं स्पृशामीति शपथं कुर्वाणो देवदत्ताय शपत इति प्रयुज्यते। 'श्लाघह्नुङ्स्थाशपाम्' इत्यादिना सम्प्रदानसंज्ञायाम्, देवदत्तायेति सम्प्रदाने चतुर्थी। शपतीत्याक्रोशतीत्यर्थः। 'समोऽकूजने' इत्यादिग्रन्थस्य शप उपलम्भनपर्यन्तस्य योऽर्थः स इह चकारेणानुक्तसमुच्चयार्थेनोपात्तः, तस्यैवार्थस्य चकारोपात्तस्य स्पष्टीकरणायास्य ग्रन्थस्योपन्यासः कृतः॥ २१॥

### पदमञ्जरी

**किरतेरिति।** विक्षेपार्थः किरतिः, हर्षादयस्तु विषयत्वेनोपात्ताः। तत्र हर्षो विक्षेपस्य कारणम्। जीविकाकुलायकरणे तु फलम्। एतेष्वर्थेषु अपाच्चतुष्पात्' इति सुड्विधीयते। **आनुत इति।** उत्कण्ठापूर्वं शब्दं करोतीत्यर्थः। 'णु स्तुतौ' अदादिः। **आपृच्छत इति।** 'प्रच्छ ज्ञीप्सायाम्' तुदादिः, ग्रहीत्यादिना सम्प्रसारणम्। **वाचा शरीरस्पर्शनमिति।** 'त्वत्पादौ स्पृशामि, नैतन्मया कृतम्' इत्येवंरूपः शपथविशेषः। **देवदत्तायेति।** 'श्लाघह्नुङ्स्थाशपाम्' इति सम्प्रदानसंज्ञा॥ २१॥

### भावबोधिनी

'गतताच्छील्य = गमन आदि स्वभाव वाला होना अर्थ होने पर हृ धातु से आत्मनेपद होता है। उदाहरण—पैतृकम् अश्वा अनुहरन्ते, मातृकं गावः अनुहरन्ते [घोड़े पिता की चाल आदि स्वभाव का और बैल या गाय माता आदि के स्वभाव=चाल का अनुहरण करते हैं।]

-'गतताच्छील्ये' [गमनादिस्वभावता] यह किसलिये है? मातुः अनुहरति, [पितुः अनुहरति] माता के आकार का और पिता के आकार का अनुकरण करता है, उनके समान है।]

---

१. गति—इति न्यासपदमञ्जरीसम्मतः पाठः, मूलस्थः भाष्यसम्मतः।

## १७०. समवप्रविभ्यः स्थः ॥ २२॥ (२६८६)

समृ, अव, प्र, वि–इत्येवं पूर्वात् तिष्ठतेरात्मनेपदं भवति। सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते ॥

*आङः स्थः प्रतिज्ञाने इति वक्तव्यम्(वा० म० भा० १.३.२२ वा० १)* । अस्ति सकारमात्रमातिष्ठते। आगमौ गुणवृद्धी आतिष्ठते (म० भा०) ॥

### न्यासः

**समवप्रविभ्यः स्थः ॥ सन्तिष्ठते इति।** पाघ्रादिसूत्रेण तिष्ठादेशः।

**अस्ति सकारमातिष्ठत इति।** सकारमात्रमस्ति धातुम् **आपिशलिराचार्यः** प्रतिजानीते। तथा हि— न तस्य पाणिनेरिव 'अस भुवि' इति गणपाठः, किं तर्हि ? 'स भुवि' इति स पठति। **आगमौ गुणवृद्धी आतिष्ठत इति।** स त्वागमौ गुणवृद्धी आतिष्ठते। एवं हि स[1] प्रतिजानीत इत्यर्थः ॥ २२ ॥

### पदमञ्जरी

**समवप्रविभ्यः स्थः ॥ सन्तिष्ठत इति।** पाघ्रादिसूत्रेण तिष्ठादेशः। अत्राप्युपसर्गग्रहणादिह न भवति— वे तिष्ठसि, वी तिष्ठत इति।

**अस्ति सकारमिति।** "स्तः सन्तीत्यादौ सकारमात्रस्य दर्शनात् 'स भुवि' इत्येव धातुः पाठ्यः, अस्तीत्यादौ पिति सार्वधातुके अडागमो विधेयः, आस्ताम् आसन्नित्यादौ आडागमः स्यात्" इति **आपिशला** मन्यन्ते। **आगमौ गुणवृद्धी इति।** वैयाकरणाः, सौवश्व इत्यादौ वृद्धेरागमत्वमित्याहुः। गुणस्य त्वागमत्वे उदाहरणं मृग्यम् ॥ २२ ॥

### भावबोधिनी

*हर्ष, जीविका और कुलायकरण [घोसला बनाना] इन अर्थों में कृ धातु से आत्मनेपद होता है*। उदाहरण— अपस्किरते वृषभो हृष्टः। जीविका अर्थ में—अपस्किरते कुक्कुटो भक्षार्थी। कुलायकरण में—अपस्किरते श्वा आश्रयार्थी।

हर्ष आदि अर्थों में—इसका क्या फल है ? अपकिरति कुसुमम् [फूल को बिखेरता है]।

*'आङ् उपसर्ग साथ में रहने पर √'नु' और √पृच्छ धातुओं से आत्मनेपद कहना चाहिये।'* उदाहरण— आनुते शृगालः, आपृच्छते शृगालः।

*'शप से उपलम्भन=उलाहना अर्थ में आत्मनेपद कहना चाहिये।'* वाणी के साथ शरीर को छूना उपलम्भन है। उदाहरण—देवदत्ताय शपते, यज्ञदत्ताय शपते। 'उपलम्भन में हो' इसका क्या फल है ? शपति ॥ २१ ॥

सम्, अव, प्र और वि—इन उपसर्गों के साथ √स्था धातु से आत्मनेपद होता है। उदाहरण—सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते।

*'प्रतिज्ञान अर्थ में आङ् पूर्वक स्था धातु से आत्मनेपद होता है।'* उदा० अस् धातु को [आपिशलि आचार्य] केवल 'स्' ही प्रतिज्ञात [स्वीकार] करते हैं। गुण और वृद्धि को आगम की प्रतिज्ञा करते हैं, स्वीकार करते हैं ॥ २२ ॥

---

१. स इति आपिशलिराचार्य इत्यर्थः। आपिशलिमते-सकारमात्रस्यासधातोः स्तः स्थः सन्तीत्यादीन्युदाहरणानि। अस्ति, आसीदित्यादिसिद्धये तु सोऽडाटावागमौ प्रतिजानीते। तावडाटाव्रेव पाणिनीयशास्त्रेऽकाराकारस्वरूपत्वाद् गुणवृद्धी इति; अतः स गुणवृद्धी आगमौ प्रतिजानीत इति न्यासकारस्याभिप्राय इति बोध्यम्।

## १७१. प्रकाशनस्थेयाख्ययोश्च ॥ २३ ॥ (२६९०)

स्वाभिप्रायकथनं प्रकाशनम्। स्थेयस्याख्या स्थेयाख्या। तिष्ठन्त्यस्मिन्निति स्थेयः, विवादपदनिर्णेता लोके स्थेय इति प्रसिद्धः, तस्य प्रतिपत्त्यर्थमाख्याग्रहणम्। [illegible]शने स्थेयाख्यायां च तिष्ठतेरात्मनेपदं भवति। प्रकाशने तावत्–तिष्ठते कन्या छात्रेभ्यः। तिष्ठते वृषली ग्रामपुत्रेभ्यः। प्रकाशयत्यात्मानमित्यर्थः। स्थेयाख्यायाम्–त्वयि तिष्ठते, मयि तिष्ठते 'संशय्य कर्णादिषु तिष्ठते यः' (कि० ३.१४)॥

## १७२. उदोऽनूर्ध्वकर्मणि ॥ २४ ॥ (२६९१)

### न्यासः

**प्रकाशनस्थेयाख्ययोश्च ॥ तिष्ठन्त्यस्मिन्निति स्थेय इति।** 'कृत्यल्युटो बहुलम्' इत्यधिकरणे 'अचो यत्'। 'ईद् यति' इतीत्वम्। गुणः। **विवाद इति।** सन्देहविषये। **निर्णेतेति।** निश्चेता, प्रमाणभूत इत्यर्थः। कथं पुनः स्थेयशब्दात् तस्य प्रतीतिर्भवति, यावता स्थेयशब्दो भावसाधनोऽप्यस्ति गतिनिवृत्तिवचन इत्याह—**तस्येत्यादि।** यस्य 'स्थेय' इत्याख्या, लोके तस्य प्रतीतिर्यथा स्यादित्येवमर्थमाख्याग्रहणम्। तेनाख्याग्रहणेन तस्य प्रतीतिर्भवतीति दर्शयितुमाख्याग्रहणं कृतम्। **तिष्ठते कन्या छात्रेभ्य इति।** पूर्ववत् संप्रदानसंज्ञायां सत्यां छात्रेभ्य इति चतुर्थी। **प्रकाशयत्यात्मनमित्यर्थ इति।** अनेकार्थत्वाद्धातूनां तिष्ठतिरत्र प्रकाशने वर्त्तते। **संशय्येति।**

जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।
असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि ॥ (किरात० ३.१४)

इत्यस्य श्लोकस्यायमेकदेश इहोपन्यस्तः। संशय्येति विवादपदभूते वस्तुनि संशयितो भूत्वा कर्णादिषु तिष्ठत इति। कर्णशकुनिप्रभृतिषु निर्णेतृत्वेनाभिमतेषु सत्सु पक्षान्तरं परित्यज्य तिष्ठते; तदुपदर्शितस्यैव पक्षस्याश्रयणात् ॥ २३ ॥

**उदोऽनूर्ध्वकर्मणि ॥** अनूर्ध्वकर्मणि वर्त्तमानादित्युक्ते, यश्चोदयति—'ननु च तिष्ठतेरकर्मकक्रियावचन-

### पदमञ्जरी

**प्रकाशनस्थेयाख्ययोश्च ॥ स्वाभिप्रायकथनमिति।** कथनमाविष्करणमात्रं न तु शब्देनैव, तेनाभाषमाणायामपि कन्यकायां भवति। **तिष्ठत्यस्मिन्निति।** प्रकरणादिनात्र विवादपदनिर्णेतुः प्रतीतिः, न तु शाब्दीति विग्रहवाक्ये आत्मनेपदं न कृतम्। **संशय्य कर्णादिष्वति।** संशयस्थानेषु कर्णादीन् निर्णेतृत्वेनाश्रयतीत्यर्थः ॥ २३ ॥

**उदोऽनूर्ध्वकर्म्मणि ॥ कर्मशब्दः क्रियावाचीति।** साधनकर्मणि धातोर्वृत्त्यसम्भवादिति भावः।

### भावबोधिनी

अपना अभिप्राय कहना = प्रकाशन है। स्थेय की आख्या = कथन—स्थेयाख्या है। 'तिष्ठन्ति यस्मिन्' जिस पर लोग निर्भर करें; विवादों का निर्णय करने वाला व्यक्ति लोक में 'स्थेय' इस रूप में प्रसिद्ध है। इसकी प्रतीति कराने के लिये आख्या का ग्रहण है। प्रकाशन में और स्थेयाख्या अर्थ में विद्यमान स्था धातु से आत्मनेपद होता है। प्रकाशन अर्थ में उदाहरण—तिष्ठते कन्या छात्रेभ्यः। तिष्ठते वृषली ग्रामपुत्रेभ्यः। अपने को प्रकाशित करती है—यह अर्थ है। स्थेयाख्या = निर्णायकत्व कथन में—त्वयि तिष्ठते, मयि तिष्ठते, संशय्य कर्णादिषु तिष्ठते यः [तुझ पर निर्णय छोड़ता है, मुझ पर निर्णय छोड़ता है, जो सन्देह स्थलों पर कर्ण को निर्णायक रूप से मानता है] ॥ २३ ॥

अनूर्ध्वकर्म [ ऊपर उठना अर्थ न ] होने पर उद् से परे 'स्था' धातु से आत्मनेपद होता है। कर्मशब्द क्रियावाची है। अनूर्ध्वकर्मविशिष्ट क्रियावाचक स्था धातु से आत्मनेपद होता है। उदाहरण—गेहे उत्तिष्ठते,

**उत्पूर्वात्तिष्ठतेरनूर्ध्वकर्मणि वर्त्तमानादात्मनेपदं भवति। कर्मशब्दः क्रियावाची। अनूर्ध्वकर्मविशिष्टात् क्रियावचनात्तिष्ठतेरात्मनेपदं भवति। गेहे उत्तिष्ठते। कुटुम्बे उत्तिष्ठते। तदर्थं यतते इत्यर्थः।**

***उद ईहायामिति वक्तव्यम् (म० भा० १.३.२४ वा० १)*। इह मा भूत्—अस्माद् ग्रामात् शतमुत्तिष्ठति। शतमुत्पद्यते इत्यर्थः। ईहाग्रहणमनूर्ध्व[कर्मण]ा एव विशेषणम्, नापवादः।**

**अनूर्ध्वकर्मणीति किम्? आसनादुत्तिष्ठति॥**

## १७३. उपान्मन्त्रकरणे॥ २५॥ (२६९२)

### न्यासः

त्वान्न कर्मणि वृत्तिरुपपद्यते। तत् किमुच्यते—'अनूर्ध्वकर्मणि वर्त्तमानात्' इति, तं प्रत्याह—**क्रियावाचीति।** यदुक्तम्—अनूर्ध्वकर्मणि वर्त्तमानादिति, तस्यार्थं विस्पष्टीकर्तुमाह—**अनूर्ध्वकर्मविशिष्टात् क्रियावचनादिति।**

**उद ईहायामिति वक्तव्यमिति।** उत्पूर्वात् तिष्ठतेरीहायां परिस्पन्दने वर्त्तमानादात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—अन्तरेणापि कर्मग्रहणं क्रियामात्रवृत्तित्वे तिष्ठतेः सिद्धे यत् कर्मग्रहणं तल्लोके या क्रिया कर्मत्वेन प्रसिद्धा तस्याः प्रतिपत्त्यर्थं कृतम्, सा तु परिस्पन्दनात्मिकैव घटनभ्रमणादिका, तथा हि—तां कुर्वाणः 'सक्रियः' इत्युच्यते। स्थानासनादिकां त्वपरिस्पन्दनात्मिकां कुर्वाणोऽपि 'निष्क्रियः' इति। तस्मादात्मनेपदमिदं कर्मग्रहणादीहायामेव वर्त्तमानाद् भविष्यति। उद ईहायामित्युक्ते, ईहाग्रहणमनूर्ध्वकर्मणोऽपवाद इति कस्यचित् भ्रान्तिः स्यात्, अतस्तान्निराकर्तुमाह—**ईहाग्रहणमित्यादि।** विशेषणं व्यक्तीकरणमिहाभिप्रेतम्। एतदुक्तम् भवति—यदिदमुक्तम् 'उद ईहायामिति वक्तव्यम्' इति, तत्र यदीहाग्रहणं तदनूर्ध्वकर्मण एव विशेषणं सूत्रोपात्तस्य व्यक्तीकरणार्थम्। ईहात्मकमिहानूर्ध्वकर्म विवक्षितमिति प्रतिपादनार्थमित्यर्थः॥ २४॥

**उपान्मन्त्रकरणे॥ मन्त्रकरण इति।** मन्त्रः करणं = साधकतमं यस्य धात्वर्थस्य स तथोक्तः। **उपादित्यादि।** अत्र वक्तव्यशब्दस्य व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—उत्तरसूत्रे चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः; तेन उपपूर्वात्तिष्ठतेर्देवपूजादिष्वर्थेष्वप्यात्मनेपदं भवति।

### पदमञ्जरी

**उद ईहायामिति।** ईहा = परिस्पन्दः। **ईहाग्रहणमित्यादि।** ईहात्मकं यदनूर्ध्वकर्म इत्येवमनूर्ध्वकर्मण एव विशेषणमीहाग्रहणम्, न पुनरनूर्ध्वकर्मग्रहणमपनीय ईहाग्रहणं कर्त्तव्यमित्युच्यते इत्यर्थः। तथा हि सत्यासनादुत्तिष्ठतीत्यत्रापि स्यात्, परिस्पन्दरूपत्वादुत्थानस्येति भावः। उद ईहायामित्येतत्कर्मग्रहणात् सिद्धमित्याहुः। कथम्? 'ईहाऽनूर्ध्वं' इत्येतावताऽनूर्ध्वताविशिष्टं क्रियावाचित्वं सिद्धम्, धातोः क्रियावाचित्वात्। एवं सिद्धे कर्मग्रहणाल्लोकप्रसिद्धं परिस्पन्दात्मकं कर्म गृह्यत इति॥ २४॥

**उपान्मन्त्रकरणे॥** पारिभाषिकमत्र करणं गृह्यते, मन्त्रः करणं यस्यार्थस्य तस्मिन्वर्तमानादित्यर्थः।

### भावबोधिनी

**कुटुम्बे उत्तिष्ठते,** [घर में उन्नति करता है] कुटुम्ब के लिये यत्न करता है। 'उत् से परे स्था धातु से ईहा अर्थ में आत्मनेपद कहना चाहिये'। यहाँ न हो—अस्मात् ग्रामात् शतमुत्तिष्ठति। इस गाँव से सौ रुपये उत्पन्न होते हैं। ईहाग्रहण अनूर्ध्वकर्म का ही विशेषण है, अपवाद नहीं।

**अनूर्ध्वकर्मणि** = [ऊपर उठना कर्म न हो] इसका क्या फल है? आसनात् उत्तिष्ठति। [आसन से उठता है। यहाँ नहीं होता है]॥ २४॥

मन्त्रकरण [मन्त्र द्वारा अनुष्ठानादि] अर्थ में वर्तमान, उपपूर्वक स्था धातु से आत्मनेपद होता है। उदाहरण—ऐन्द्रया गार्हपत्यमुपतिष्ठते [इन्द्रदेवता-सम्बन्धी ऋचा से गार्हपत्य अग्नि का उपस्थान = समीप

उपपूर्वात्तिष्ठतेर्मन्त्रकरणेऽर्थे वर्त्तमानादात्मनेपदं भवति। ऐन्द्रचा गार्हपत्यमुपतिष्ठते। आग्नेय्याऽऽग्नीध्रमुपतिष्ठते।

मन्त्रकरण इति किम् ? भर्तारमुपतिष्ठति यौवनेन।

*उपाद्देवपूजासंगतिकरणमित्रकरणपथिष्विति वाच्यम् (म० भा० १.३.२५ वा० १)*। देवपूजायाम्—आदित्यमुपतिष्ठते। सङ्गतिकरणे—रथिकानुपतिष्ठते। मित्रकरणे—महामात्रानुपतिष्ठते। मित्रकरणसंगतिकरणयोः को विशेषः ? संगतिकरणमुपश्लेषः, तद्यथा—गङ्गा यमुनामुपतिष्ठते; मित्रकरणं तु विनाप्युपश्लेषेण मैत्रीसम्बन्धः। पथि—अयं पन्थाः स्रुघ्नमुपतिष्ठते।

*वा लिप्सायामिति वक्तव्यम् (म० भा० १.३.२५ वा० २)*। भिक्षुको ब्राह्मणकुलमुपतिष्ठते, उपतिष्ठतीति वा (म० भा० १.३.२५)॥

## १७४. अकर्मकाच्च ॥ २६ ॥ (२६९३)

**न्यासः**

**वा लिप्सायामिति**। लब्धुमिच्छा = लिप्सा। लिप्सायां गम्यमानायामित्येषोऽर्थो वेदितव्यः, न तु तत्र वर्त्तमानात् तिष्ठतेरिति न लिप्सा तिष्ठतेरर्थः। तथा हि—**भिक्षुको ब्राह्मणकुलमुपतिष्ठते** इत्यत्र तिष्ठतिरुपसंक्रमणे वर्त्तते। लिप्सा तूपसंक्रमणस्य हेतुभूता गम्यते। लिप्सायां हेतुभूतायां ब्राह्मणकुलमुपसंक्रामतीत्यर्थः ॥ २५ ॥

**अकर्मकाच्च ॥ अकर्मकादिति**। नास्य कर्मास्तीति बहुव्रीहिः। 'डुकृञ् करणे', 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्, धातोर्गुणः, 'शेषाद् विभाषा' इति कप्। ननु धातोः क्रियावचनादकर्मकत्वं न सम्भवतीति तस्माद-

**पदमञ्जरी**

**उपादित्यादि**। अमन्त्रकरणार्थमिदम्। **सङ्गतकरणमुपश्लेष इति**। विनापि मैत्रीसम्बन्धात्। **स्रुघ्नमुपतिष्ठते इति**। प्राप्नोतीत्यर्थः।

**भिक्षुक इति**। लिप्सया हेतुभूतया ब्राह्मणकुलमुपगच्छतीत्यर्थः ॥ २५ ॥

**अकर्मकाच्च**॥ अत्रासम्भवात् क्रिया कर्म न गृह्यते, न ह्यस्ति सम्भवः = धातुश्च भवत्यक्रियावचनश्चेति। ननु च साधनकर्मणाप्यकर्मकत्वमव्यभिचारादविशेषणम्, न हि शब्दात्मकस्य धातोः कर्मणा योग-

**भावबोधिनी**

गमन करता है।] आग्नेय्याऽऽग्नीध्रमुपतिष्ठते। [अग्नि देवता-सम्बन्धी ऋचा के द्वारा आग्नीध्र का उपस्थान = समीप गमन करता है।]

मन्त्रकरणे—इसका क्या फल है ? भर्तारमुपतिष्ठति यौवनेन। [यहाँ नहीं होता है।]

'देवपूजा, संगतिकरण, मित्रकरण और मार्ग-अर्थों में उप से परे स्था धातु से आत्मनेपद होता है। देवपूजा अर्थ में—आदित्यमुपतिष्ठते। संगतिकरण में—रथिकानुपतिष्ठते [रथिकों से मिल जाता है]। मित्रकरण अर्थ में—महामात्रान् उपतिष्ठते [महामात्रों को मित्र बनाता है।] मित्रकरण और संगतिकरण में क्या भेद है ? संगतिकरण = उपश्लेष = परस्पर मिल जाना, जैसे—गङ्गा यमुनामुपतिष्ठते [गङ्गा यमुना से मिलती है।] मित्रकरण तो उपश्लेष [परस्पर मिलना] के बिना भी मैत्री सम्बन्ध है। पन्था अर्थ में—अयं पन्थाः स्रुघ्नमुपतिष्ठते। 'यह रास्ता' स्रुघ्न को प्राप्त करता है]।

'लिप्सा अर्थ में विकल्प होता है।' भिक्षुकः ब्राह्मणकुलमुपतिष्ठते उपतिष्ठति वा ॥ २५ ॥

'उपात्' इसकी अनुवृत्ति होती है। अकर्मक क्रियावाचक, उपपूर्वक स्था धातु से आत्मनेपद होता है। उदाहरण—यावद्भुक्तम् उपतिष्ठते। [भोजन के समय आ जाता है] प्रत्येक भोजन में समीप आ

'उपात्' इति वर्त्तते। उपपूर्वात् तिष्ठतेरकर्मकात् = अकर्मकक्रियावचनादात्मनेपदं भवति। यावद्भुक्तमुपतिष्ठते। यावदोदनमुपतिष्ठते। भुक्तम् इति भावे क्त प्रत्ययः। भोजने भोजने सन्निधीयते इत्यर्थः।

अकर्मकादिति किम्? राजानमुपतिष्ठति॥

**१७५. उद्विभ्यां तपः॥ २७॥ (२६९४)**

'अकर्मकात्' इति वर्त्तते। उत्, वि-इत्येवं पूर्वात् तपतेरकर्मकक्रियावचनादात्मनेपदं भवति। उत्तपते, वितपते। दीप्यत इत्यर्थः। अकर्मकादित्येव। [इह मा भूत्] उत्तपति सुवर्णं सुवर्णकारः। वितपति पृष्ठं सविता।

न्यासः

युक्तमकर्मकादिति विशेषणम्, व्यच्छेद्याभावादित्यत आह—अकर्मकक्रियावचनादिति। अकर्मिका चासौ क्रिया चेत्यकर्मकक्रिया, तस्या वचनो यः, तां वक्ति सोऽकर्मकक्रियावचनः। एतेनार्थद्वारकं विशेषणमिदं दर्शयति—अकर्मको यो धात्वर्थस्तत्साहचर्यादभिधेयधर्मस्याभिधान उपचारात् धातुरकर्मक इति। अर्थस्य च युक्तमेतद् विशेषणम्, तस्य सकर्मकत्वाकर्मकत्वसम्भवात्। यावद्भुक्तमिति। यावच्छब्दो निपातोऽव्ययम्, तस्य यथार्थे वीप्सायामव्ययीभावः, सप्तम्यन्तश्चैतद्। अत एवाह—भोजने भोजने सन्निधीयत इति। भावे क्त इति। 'नपुंसके भावे क्तः' इत्यनेन॥ २६॥

उद्विभ्यां तपः॥ स्वाङ्गकर्मकाच्चेति वक्तव्यमिति। स्वाङ्गं कर्म यस्य तस्मात् तपतेरात्मनेपदं भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पूर्वसूत्राच्चकारोऽनुवर्त्तते, तस्यानुक्तसमुच्चयार्थत्वात्

पदमञ्जरी

वियोगौ सम्भवतः, साधनयोगस्य क्रियाधर्मत्वादत आह—अकर्मकक्रियावचनादिति। एतेनार्थद्वारकमेतद् धातोर्विशेषणमिति दर्शयति। यावद्भुक्तमिति। यथार्थे यदव्ययमिति वीप्सायामव्ययीभावः। सप्तम्यन्तं चैतत्। संनिधीयत इत्यर्थ इति। भावे लकारः। अर्थतो व्याख्यानं चैतत्—यो ह्युपतिष्ठते स संनिधत्ते यश्च संनिधत्ते तेन संनिधीयते।

अकर्मकादिति किमिति। पूर्वसूत्रे 'उपात्' इति योगविभागादिष्टस्य सिद्धं पश्यति। न चैवमतिप्रसङ्गः, 'मन्त्रकरणे' इत्यस्य नियमार्थत्वात्-सकर्मकाद्यदि भवति मन्त्रकरण एवेति। राजानमुपतिष्ठतीति। विपरीतोऽपि नियमः स्यात्—करणे यदि भवति मन्त्रकरण एवेति, ततश्चात्र स्यादेवेति भावः॥ २६॥

उद्विभ्यां तपः। उत्तपति सुवर्णमित्यत्र सन्तापने विलापने वा तपिर्वर्तत इति सकर्मकत्वम्।

स्वमङ्गं स्वाङ्गमिति। यस्मिन्कर्तर्यात्मनेपदं तस्य चेत् स्वमङ्गमित्यर्थः। यद्यन्वर्थग्रहणम्? ततोऽप्राणिन्यपि कर्त्तरि यस्य यदङ्गं तत्कर्मकादपि प्रसङ्गः। पारिभाषिके त्वेष दोषो न भवति; तस्य

भावबोधिनी

जाता है। यावदोदनमुपतिष्ठते। जब तक चावल है, समीप में आता है। भुक्तम्—में भाव में क्त है। हर भोजन में समीप रहता है, यह अर्थ है। [अव्ययीभाव समास है और यह सप्तम्यन्त है।] अकर्मक से—इसका क्या फल है? राजानमुपतिष्ठति॥ २६॥

'अकर्मकात्' इसकी अनुवृत्ति होती है। अकर्मक क्रियावाचक, उप और वि उपसर्ग-पूर्वक तप धातु से आत्मनेपद होता है। उदाहरण—उत्तपते, वितपते। दीप्त होता है—यह अर्थ है। अकर्मक से ही अतः यहाँ नहीं हुआ—उत्तपति सुवर्णं सुवर्णकारः। [सुनार सोने को खूब तपाता = गरम करता है।] वितपति पृष्ठं सविता। [सूर्य पीठ को तपाता है।]

***स्वाङ्गकर्मकाच्चेति वक्तव्यम्** (म० भा० १.३.२७ वा० १)* **। उत्तपते पाणिम्, उत्तपते पृष्ठम्; वितपते पाणिम्, वितपते पृष्ठम्। स्वाङ्गं चेह न पारिभाषिकं गृह्यते–'अद्रवं मूर्त्तिमत् स्वाङ्गम्' इति; किं तर्हि ? स्वमङ्गं स्वाङ्गम्। तेनेह न भवति–देवदत्तो यज्ञदत्तस्य पृष्ठमुत्तपतीति।**

**उद्विभ्यामिति किम् ? निष्टपति ॥**

## १७६. आङो यमहनः ॥ २८ ॥ (२६९५)

**'अकर्मकात्' इति वर्तते। 'यम उपरमे'** (धा० पा० ९८४), **'हन हिंसागत्योः'** (धा० पा० १०९२) **इति परस्मैपदिनौ। ताभ्यामकर्मकक्रियावचनाभ्यामाङ्पूर्वाभ्यामात्मनेपदं भवति। आयच्छते, आयच्छेते, आयच्छन्ते। हनः खल्वपि–आहते, आघ्नाते, आघ्नते। अकर्मकादित्येव–आयच्छति कूपाद् रज्जुम्, आहन्ति वृषलं पादेन** (म० भा० १.३.२८ वा० १)**।**

***स्वाङ्गकर्मकाच्चेति वक्तव्यम्**(म० भा० १.३.२८ वा० २)***। आयच्छते पाणिम्। आहते शिरः** (म० भा० १.३.२८)**। स्वाङ्गं चेह न पारिभाषिकं गृह्यते, किं तर्हि ? स्वमङ्गं स्वाङ्गम्, तेनेह न भवति—आहन्ति शिरः परकीयमिति ॥**

### न्यासः

स्वाङ्गकर्मकादपि भविष्यति। स्वाङ्गञ्चेह न पारिभाषिकम्, किं तर्हि ? स्वमङ्गं स्वाङ्गमिति। आत्मीयमङ्गमित्यर्थः। **निष्टपतीति**। 'निसस्तपतावनासेवने' इति मूर्धन्यः ॥ २७ ॥

**अङो यमहनः ॥ आहते इति**। 'अनुदात्तोपदेश' इत्यादिनानुनासिकलोपः। **आघ्नते इति**। 'गमहन' इत्युपधालोपः, 'हो हन्तेः' इत्यादिना कुत्वम्।

**स्वाङ्गकर्मकाच्चेति वक्तव्यमिति**। अस्य पूर्ववदर्थः। व्याख्यानमपि पूर्ववदेव ॥ २८ ॥

### पदमञ्जरी

प्राणिस्थत्वात्। अन्वर्थेऽपि न दोषः, तपेः प्राणिकर्तृकत्वात्। पारिभाषिकस्य त्वसम्बन्धिशब्दत्वात् कर्तुश्चेत्स्वमङ्गमित्येवं न प्रतीयेतेति भावः ॥ २७ ॥

**आङो यमहनः ॥ आहतेति**। 'अनुदात्तोपदेश'इत्यनुनासिकलोपः। **आघ्नत इति**। पूर्ववदादेशोपधालोपो कुत्वं च। **आहन्ति शिरः परकीयमिति**। 'आजघ्ने विषमविलोचनस्य वक्षः' इत्यत्र तु गाण्डावी विषमविलोचनस्य वक्ष एत्य स्वं वक्षो हतवानित्यर्थः। मल्लोऽप्युत्साहवर्धनाय स्वं वक्ष आस्फालयति ॥ २८ ॥

### भावबोधिनी

*'स्वाङ्गकर्मक से ही होता है—ऐसा कहना चाहिये'।* उदाहरण—उत्तपते पाणिम्, उत्तपते पृष्ठम्, वितपते पाणिम्, वितपते पृष्ठम् [हाथ को तपाता है, पीठ को तपाता है।] यहाँ पारिभाषिक स्वाङ्ग—'द्रवभिन्न, मूर्तिमान्, अविकारज और प्राणिस्थ—' नहीं लिया जाता है। तो क्या ? स्व = अपना, अङ्ग—स्वांग। इसलिये यहाँ नहीं होता है—देवदत्त यज्ञदत्त की पीठ तपाता है। [यहाँ पराङ्ग है।].

उत् और वि से परे—यह किस लिये है ? निष्टपति। [यहाँ निस् उपसर्ग के स् का मूर्धन्य और ष्टुत्व होता है। आत्मनेपद नहीं होता है।] ॥ २७ ॥

'अकर्मकात्' इसकी अनुवृत्ति होती है। √यम उपरम अर्थ में तथा √हन हिंसा और गमन अर्थ में परस्मैपदी है। अकर्मक क्रियावाचक, आङ् उपसर्गपूर्वक इन दोनों धातुओं से आत्मनेपद होता है। उदाहरण—आयच्छते, आयच्छेते, आयच्छन्ते। ['इषुगमियमां छः' (पा० सू० ७।३।७७) से यम् के म् का छ् होता है] हन् से भी—आहते, आघ्नाते, आघ्नते। [अनुनासिकलोप, उपधालोप, कुत्वादि करते हैं।] अकर्मक से ही—आयच्छति कूपाद्

## १७७. समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥ २९ ॥ (२६९९)

'अकर्मकात्' इति वर्त्तते। 'शेषात् कर्त्तरि परस्मैपदम्' (१.३.७८) इति प्राप्ते। संपूर्वेभ्यो गमि-ऋच्छि-प्रच्छि-स्वरति-अर्ति-श्रु-विदि-इत्येतेभ्योऽकर्मकेभ्यो धातुभ्य आत्मनेपदं भवति। संगच्छते। समृच्छते। संपृच्छते। संस्वरते। संकल्पा अस्य समरन्त।

अर्तेर्लुङि च्लेः 'सर्तिशास्त्यर्तिभ्यश्च' (३.१.५६) इत्यङादेशः। तत्र 'परस्मैपदेषु'(३.१.५५) इत्येतन्नाश्रीयते, 'बहुलं छन्दस्यमाङ्योगेऽपि (६.४.७५) इत्याट् प्रतिषिध्यते। 'ऋदृशोऽङि गुणः' (७.४.१६) इति गुणः। समरन्त। संशृणुते। संवित्ते।

**न्यासः**

**समो गम्यृच्छिप्रच्छिस्वरत्यर्त्तिश्रुविदिभ्यः ॥ संस्वरते इति।** 'स्वृ शब्दोपतापयोः'। **समरन्त इति।** अर्त्तेः 'सर्त्तिशास्त्यर्त्तिभ्यश्च' इत्यत्र पुषादिसूत्रात् परस्मैपदग्रहणानुवृत्तेरात्मनेपदेष्वङादेशेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तान्निराकर्तुमाह—**तत्र हीत्यादि। संशृणुत इति।** 'श्रु श्रवणे', 'श्रुवः शृ च' इति श्नुप्रत्ययः, शृभावश्च।

**ऋच्छेरनादेशस्य ग्रहणमिति।** 'ऋच्छ गतीन्द्रियप्रलयमूर्त्तिभावेषु' इत्यस्य। **समृच्छिष्यते इति।** लृट्, स्यप्रत्ययः। यद्यादेशस्य ग्रहणं स्यात् तदेतन्न सिध्येत्, पाघ्रादिसूत्रेणार्त्तेर्ऋच्छादेशस्य शितीत्येवं विधानात्। अथार्त्यादेशस्यापि ग्रहणं कस्मान्न भवतीत्याह—**अर्त्यादेशस्य त्वर्त्तीत्येवमित्यादि।**

**पदमञ्जरी**

**समो गम्यृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिभ्यः ॥** 'समो गम्यृच्छिभ्याम्' इत्येतावत्सूत्रम्। प्रच्छ्यादयस्तु वार्त्तिकदृष्टाः सूत्ररूपेण पठिताः, सूत्रकारवद्वार्त्तिककारोऽपि शास्त्रस्य कर्ता, न व्याख्यातेति दर्शयितुम्। **तत्र हीति।** उत्तरार्थमनुवर्तमानमपि योगविभागसामर्थ्यात् तत्र न सम्बध्यत इत्यर्थः।

**न लाभार्थस्येति।** सत्ताविचारणार्थयोस्त्वनुदात्तेत्त्वादात्मनेपदेन भाव्यमेवेति भावः। **दृशेश्चेत्यादि।** इदं वक्तव्यरूपेणैव पठितम्। विचित्रा हि वृत्तेः कृतिः वृत्तिकारेण। अथास्मिन्नकर्मकाधिकारे ये सकर्मकाः हृन्गमिप्रभृतयः, तेषां कथमकर्मकत्वम्? उच्यते—

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ (वा० प० ३.७.८८)

**भावबोधिनी**

रज्जुम् [कुआँ से रस्सी खींचता है।] आहन्ति वृषलं पादेन [शूद्र को पैर से मार डालता है।]* 'स्वाङ्गकर्मक से होता है—यह कहना चाहिये'* उदाहरण—आयच्छते पाणिम्, आहते शिरः। यहाँ भी स्वाङ्ग पारिभाषिक नहीं लिया जाता है; तो क्या? स्व = अपना अङ्ग—स्वाङ्ग; इसलिये यहाँ नहीं होता है—आहन्ति शिरः परकीयम् [दूसरे का सिर पीटता है] ॥ २८ ॥

'अकर्मकात्' इस की अनुवृत्ति होती है। 'शेषात् कर्तरि परस्मैपदम्' (पा० सू० १।३।७८) से परस्मैपद प्राप्त रहने पर सम्पूर्वक गम्, ऋच्छ, प्रच्छ, स्वर्, ऋ, श्रु तथा विद—इन अकर्मक धातुओं से आत्मनेपद होता है। संगच्छते (एक साथ चलता है।) सम्पृच्छते (सम्यक् पूछता है।) संस्वरते [स्वर करता है]। संकल्पा अस्य समरन्त [इसके संकल्प एक साथ हुये।], ऋ धातु से लुङ्, लकार में 'सर्तिशास्त्यर्तिभ्यश्च' (पा० सू० ३।१।५६) से च्लि का अङ् आदेश होता है। उसमें 'परस्मैपदेषु' इसका आश्रयण नहीं होता है। 'बहुलं छन्दस्यमाङ्योगेऽपि' इस सूत्र से आट् का प्रतिषेध होता है। 'ऋदृशोऽङि गुणः' (पा० सू० ७।४।१६) से ऋ का गुण रपर होता है—समरन्त। संशृणुते [अच्छी प्रकार सुनता है।] संवित्ते [अच्छी प्रकार जानता है।]

ऋच्छेरनादेशस्य ग्रहणम्—समृच्छिष्यते। अर्त्यादेशस्य त्वर्त्तीत्येवं सिद्धमात्मनेपदम्। अर्तिरुभयत्र पठ्यते—'ऋ गतिप्रापणयोः' (धा० पा० ९३६) इति भ्वादौ, 'ऋ सृ गतौ' (धा० पा० १०९८-१०९९) इति जुहोत्यादौ; विशेषाभावाद् द्वयोरपि ग्रहणम्।

विदेर्ज्ञानार्थस्य ग्रहणम्, (धा० पा० १०६५) परस्मैपदिभिर्गमादिभिः साहचर्यान्न लाभार्थस्य। स्वरितेत्त्वादुभयतोभाषस्य (धा० पा० १४३३)।

*दृशेश्चेति वक्तव्यम्* (म० भा० १.३.२९ वा० २)। संपश्यते। अकर्मकादित्येव—ग्रामं संपश्यति।

## १७८. निसमुपविभ्यो ह्वः ॥ ३० ॥ (२७०३)

### न्यासः

अथ वा—यद्यनादेशस्य ग्रहणं स्यात्, आदेशस्यात्मनेपदं न सिध्यतीत्यत आह—अर्त्यादेशस्य त्वर्तीत्येवमित्यादि। स्थानिवद्भावेनेत्यभिप्रायः।

न लाभार्थस्येति। 'विद्लृ लाभे' इत्यस्य। अथ 'न तु सत्तार्थस्य, नापि विचारणार्थस्य' इत्येवमपि कस्मान्नोक्तम्? एवं मन्यते—नित्यात्मनेपदित्वादनयोरात्मनेपदार्थं ग्रहणं नाशङ्क्येतैवेति।

दृशेश्चेति वक्तव्यमिति। 'दृशिर् प्रेक्षणे' इत्यस्मात् संपूर्वादात्मनेपदं भवतीत्येतदर्थं रूपं व्याख्येयमित्यर्थः। व्याख्यानन्तु पूर्ववदेव। संपश्यते इति। पाघ्रादिना पश्यादेशः ॥ २९ ॥

निसमुपविभ्यो ह्वः ॥ ह्व इति 'ह्वेञ् स्पर्द्धायां शब्दने च' इत्यस्य कृतात्त्वस्य 'आतो धातोः' इत्याकारलोपं कृत्वा निर्देशः। निह्वयत इति। ननु च कृतात्त्वस्य निर्देशादत्रात्मनेपदेन न भवितव्यम्, न हि विकृतिः

### पदमञ्जरी

वहति भारमिति—प्रापणे सकर्मको वहिः। स्यन्दने त्वकर्मकः—वहन्ति नद्य इति। प्राणविशिष्टं धारणं जीवतिराह, तत्र प्राणानां धातुनैवोपात्तत्वान्न तेन कर्मणा सकर्मकत्वम्, न च प्राणकर्मके धारणेऽन्यस्य कर्मत्वमिति जीवतिरकर्मकः। प्रसिद्धेर्यथा—वर्षतीत्यनुपात्ते कर्मान्तरे नियमेन जलं प्रतीयत इति न तेन सकर्मकत्वम्, तेन 'वृष्टे देवे' इति कर्तरि क्तो भवति। व्यभिचारिणा तु रुधिरादिना सकर्मक एव—रुधिरं वर्षति, शरान्वर्षतीति। कर्मणोऽविवक्षयाप्यकर्मकत्वम्, यथा—नेह पच्यते, नेह भुज्यते इत्यत्र कर्मविवक्षायां तत्कर्मिकैव क्रिया प्रतिषिद्धा स्याद्, न पाकमात्रमित्यविवक्षा कर्मणः ॥ २९ ॥

निसमुपविभ्यो ह्वः ॥ निह्वयते इति। कथं पुनरत्रात्मनेपदम्, यावता 'ह्वा' इत्याकारान्तादियं पञ्चमी, एकारान्तश्चायम्, न च विकृतिः प्रकृतिं संगृह्णाति? सत्यम्; आकारान्तात्पञ्चमी, न त्विदं प्रयोग-

### भावबोधिनी

ऋच्छ यह मूल धातु ली जाती है, ऋ की आदेशभूत नहीं। क्योंकि 'ऋ' का स्वतः उल्लेख होने से आत्मनेपद सिद्ध है। ऋ धातु दो स्थलों पर पढ़ी गयी है—ऋ गति-प्रापणयोः यह भ्वादि में तथा 'ऋ सृ गतौ' यह जुहोत्यादि में; कोई विशेष उल्लेख न होने से यहाँ दोनों ली जाती हैं।

परस्मैपदी गम् आदि के साहचर्य के कारण ज्ञानार्थक [अदादिगणी] विद का ही ग्रहण है न कि लाभार्थक उभयपदी [विदलृ लाभे इस तुदादिगणी] का। * 'दृश् से भी आत्मनेपद कहना चाहिये*—सम्पश्यते। अकर्मकात्—यही लेना है—ग्रामं संपश्यति।

विमर्श—भाष्यादिग्रन्थों में केवल 'समो गमृच्छिभ्याम्' (पा० सू० १।३।२९) इतना ही सूत्र उपलब्ध होता है। परन्तु काशिकाकार ने वार्तिकों को भी मिला कर लम्बा सूत्र लिख दिया है। फिर भी 'दृशेश्च' यह वार्तिक अलग से लिखा है। इनके इस लेखन का औचित्य समझना कठिन है वास्तव में यह प्रमाद है ॥ २९ ॥

'अकर्मकात्' इति निवृत्तम्। अतः परं सामान्येनात्मनेपदविधानं प्रतिपत्तव्यम्। नि, सम्, उप, वि- इत्येवम्पूर्वाद् ह्वयतेर्धातोरात्मनेपदं भवति। निह्वयते, संह्वयते, उपह्वयते, विह्वयते। अकर्त्रभिप्रायार्थोऽयमारम्भः। अन्यत्र हि ञित्वात् सिद्धमेवात्मनेपदम्॥

*उपसर्गादस्यत्यूह्योर्वा वचनम्* (मा० भा० १.३.२९ वा० ३)। निरस्यति, निरस्यते। समूहति। समूहते॥

**१७६. स्पर्द्धायामाङः॥ ३१॥ (२७०४)**

अकर्त्रभिप्रायार्थोऽयमारम्भः। स्पर्द्धायां विषये आङ्पूर्वाद् ह्वयतेरात्मनेपदं भवति। स्पर्द्धा=

**न्यासः**

प्रकृतिं गृह्णाति; अन्यत्वात्, नैष दोषः; क्वचिद्विकृतिरपि प्रकृतिं गृह्णात्येव। कथं ज्ञायते? यदयं 'न व्यो लिटि' इति कृतात्वस्य व्येञो निर्देशेनात्वप्रतिषेधं शास्ति, ततो ज्ञायते—विकृतिरपि प्रकृतिं गृह्णातीति; अन्यथा 'व्यः' इति निर्देशन व्येञा ग्रहणाभावात् कस्यायं प्रतिषेधः स्यात्!

**उपसर्गादस्यत्यूह्योर्वा वचनमिति**। वक्तव्यमित्यर्थः। 'असु क्षेपणे', 'ऊह वितर्के'। अस्यतीति श्यना निर्देशाद्दैवादिकस्य ग्रहणम्, न त्वादादिकस्य—'अस भुवि' इत्यस्य॥ ३०॥

**स्पर्धायामाङः॥ स्पर्धायां विषय इति**। स्पर्धेह धात्वर्थस्य विषयोऽभिमतः, न धातोः। अत एवाह— **स्पर्धा=संघर्षः। पराभिभवेच्छेति**। स्पर्धायाः स्वरूपं दर्शयित्वा धात्वर्थस्य विषयं दर्शयितुमाह—**स विषयो धात्वर्थस्येति**। कः पुनर्धातोरर्थो नाम यस्यैवं विषयः? इत्याह—**धातुस्तु शब्दक्रिय इत्यादि**। शब्दनं शब्दः। सा क्रिया यस्य स तथोक्तः। शब्दनक्रियावाचीति यावत्। यद्यपि ह्वयतिः स्पर्द्धायामपि पठ्यते, तथाप्याङ्पूर्वस्तत्र न वर्त्तते, यथा—तिष्ठतिर्गतिनिवृत्तौ पठ्यते, अथ च प्रपूर्वो गतावेव वर्त्तते, न गतिनिवृत्तौ; तथा हि

**पदमञ्जरी**

स्थस्याकारान्तस्यानुकरणम्, किं तर्हि? धातुपाठेऽवस्थितैकारान्तस्य, तस्यैव लक्षणवशादात्वम्। न चानुक्रियमाणरूपविनाशप्रसङ्गः; शास्त्रवासनया तस्यैव प्रतीतेः, यथा—'यस्येति च' इतीकाराकारयोः॥ ३०॥

**स्पर्द्धायामाङः॥ सविषय इति**। हेतुभावेन च विषयत्वम्, अत एव हेतौ शानच् प्रयुक्तः। **स्पर्द्धमानस्तस्याह्वानमिति। शब्दक्रिय एवेति**। यद्यपि स्पर्द्धायां पठ्यते, तथाप्याङ्पूर्वस्तत्र न वर्तते, किं तर्हि? शब्दनक्रियावाचीत्यर्थः॥ ३१॥

**भावबोधिनी**

'अकर्मकात्' इसकी निवृत्ति हो जाती है। इसके बाद सामान्य रूप से आत्मनेपद का विधान समझना चाहिये। नि, सम्, उप, वि—ये जिसके पूर्व में हैं ऐसी ह्वेञ् धातु से आत्मनेपद होता है। उदा०—निह्वयते (निश्चितरूपेण बुलाता है), संह्वयते (अच्छी प्रकार बुलाता है), उपह्वयते (समीप बुलाता है), विह्वयते (विशेषरूप से बुलाता है)। अकर्तृगामी क्रियाफलवाली धातु के लिये यह सूत्र बनाया गया है। अन्य अर्थ में तो ञित् होने (उभयपदी होने) के कारण आत्मनेपद सिद्ध है।

*'उपसर्ग से परे अस् और ऊह धातु से विकल्प से आत्मनेपद होता है'* निरस्यति, निरस्यते। समूहति, समूहते। [असु क्षेपणे—ली जाती है।]॥ ३०॥

अकर्तृगामी क्रियाफल के लिये यह सूत्र बनाया गया है। स्पर्द्धा-विषय में आङ् पूर्वक ह्वेञ् धातु से आत्मनेपद होता है। स्पर्द्धा = सङ्घर्ष, पराभिभव की इच्छा, यह धात्वर्थ का विषय रहता है। धातु तो शब्दक्रिया (= बोलना)

**संघर्षः, पराभिभवेच्छा, स विषयो धात्वर्थस्य । धातुस्तु शब्दक्रिय एव । मल्लो मल्लमाह्वयते, छात्रश्छात्र-माह्वयते । स्पर्द्धमानस्तस्याह्वानं करोतीत्यर्थः ।**

**स्पर्द्धायामिति किम् ? गामाह्वयति गोपालः ॥**

## १८०. गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥३२॥ (२७०५)

**कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । गन्धनादिष्वर्थेषु वर्तमाना-त्करोतेरात्मनेपदं भवति । गन्धनम्=अपकारप्रयुक्तं हिंसात्मकं सूचनम् । तथा हि–'वस्त गन्ध अर्दने' (धा० पा० १६८४-१६८५) 'अर्द हिंसायाम्' (धा० पा० १८२९), इति चुरादौ पठ्यते । अवक्षेपणम्=भर्त्सनम् । सेवनम्=अनुवृत्तिः । साहसिक्यम्=साहसिकं कर्म । प्रतियत्नः=सतो गुणान्तराधानम् । प्रकथनम्=प्रकर्षेण कथनम् । उपयोगः=धर्मादिप्रयोजनो विनियोगः ।**

### न्यासः

प्रतिष्ठित इत्युक्ते गच्छतीत्यर्थः । तस्मादाङ्पूर्वस्य ह्वयतेः स्पर्द्धायां वृत्त्यभावात् स्पर्द्धा धात्वर्थस्य विषयः । धात्वर्थविषयत्वं तु तद्धेतुभावेन वेदितव्यम् ॥ ३१ ॥

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः । अपकारप्रयुक्तमिति ।** तृतीयासमासोऽयम् । अपकारमुद्दिश्य यत् प्रवर्त्तते तदपकारप्रयुक्तं वेदितव्यम् । **हिंसात्मकमिति ।** हिनस्तीति हिंसः, पचाद्यच्, हिंस आत्मा यस्य तत् तथोक्तम् । पीडाकरणमित्यर्थः । **सूचनमिति ।** दोषाविष्करणम् । कथमेतद् विज्ञायत एवंविधं सूचनं गन्धनमित्याह— **तथा हीत्यादि । वस्तेत्यादिना** गन्धयतिधातुरर्दयतेरर्थे वर्त्तत इति दर्शयति । **अर्द हिंसायामित्यादिना** अर्दयतेर्हिंसात्मकत्वम् ।एवञ्च हिंसार्थेनार्दयतिना गन्धयतेः समानार्थतां दर्शयता गन्धन-शब्दवाच्यस्यार्थस्य हिंसात्मकत्वं दर्शितं भवति । **भर्त्सनं**=तिरस्करणम् । **अनुवृत्तिः**=परचित्तावधारणम् ।

### पदमञ्जरी

**गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः ॥ अपकारप्रयुक्तमिति ।** अपकारेण प्रयुक्त-मनेन मेऽपकृतमित्येतया बुद्ध्या कृतमित्यर्थः । अथ वा—कथं मयाऽपकृतं स्यादिति बुद्ध्या प्रवर्तितमित्यर्थः । **हिंसात्मकमिति ।** सूचितस्य वधबन्धनादिका हिंसा, इह तु तत्करणत्वात्सूचनमेव हिंसा-स्वभावमित्युक्तम् । कथं पुनर्ज्ञायते गन्धनं हिंसात्मकमित्यत आह— **तथा हीति । चुरादाविति ।** स्वभावानुवादः । **साहसिक्यमिति ।**

### भावबोधिनी

अर्थ वाली ही है । मल्लः मल्लम् आह्वयते । (एक पहलवान दूसरे पहलवान को बुलाता है ।) छात्रश्छात्रमाह्वयते (छात्र छात्र को बुलाता है ।) स्पर्द्धा करता हुआ उसका आह्वान करता है—यह अर्थ है ।

स्पर्द्धायाम्—इसका क्या फल है ? गोपाल गाय को बुलाता है । (यहाँ नहीं होता है ।) ॥ ३१ ॥

जहाँ क्रियाफल कर्तृगामी (कर्ता को मिलने वाला) रहता है वहाँ तो आत्मनेपद सिद्ध ही है (क्योंकि ञित् होने से उभयपदी है) अतः अकर्तृगामी क्रियाफल के लिये यह सूत्र बनाया गया है । गन्धनादि सात अर्थों में वर्तमान कृञ् धातु से आत्मनेपद होता है । गन्धन = अपकारप्रयुक्त, हिंसात्मक सूचन । (चुगली करना) क्योंकि 'वस्त गन्ध अर्दने' और 'अर्द हिंसायाम्' यह चुरादिगण में पठित है । [ इस प्रकार गन्ध = अर्द = हिंसा ] अवक्षेपण = भर्त्सन (डरवाना) । सेवन = सेवा करना । साहसिक्य = बलाद् करना, जबरदस्ती करना । प्रतियत्न = अन्य गुण को अन्य गुण में बदलना । प्रकथन = बढ़ा चढ़ा कर कहना । उपयोग = धर्म आदि के लिये लगाना ।

गन्धने तावत्—उत्कुरुते। उदाकुरुते। सूचयतीत्यर्थः। अवक्षेपणे—श्येनो वर्त्तिकामुदाकुरुते। भर्त्सयतीत्यर्थः। सेवने-गणकानुपकुरुते, महामात्रानुपकुरुते। सेवते इत्यर्थः। साहसिक्ये-परदारान् प्रकुरुते। तेषु सहसा प्रवर्तते इत्यर्थः। प्रतियत्ने-एधो दकस्योपस्कुरुते। काण्डं गुडस्योपस्कुरुते। तस्य सतो गुणान्तराधानं करोतीत्यर्थः।

*षष्ठीसुटौ करोतेः प्रतियत्न एव विधीयते* (२-३.५३; ६.१.१३९)। प्रकथने-गाथाः प्रकुरुते। जनापवादान् प्रकुरुते। प्रकर्षेण कथयतीत्यर्थः। उपयोगे-शतं प्रकुरुते, सहस्रं प्रकुरुते। धर्मार्थं शतं विनियुङ्क्त इत्यर्थः।

एतेष्विति किम्? कटं करोति॥

## १८१. अधेः प्रसहने॥ ३३॥ (२७०६)

**न्यासः**

**साहसिक्यं=साहसं कर्म इति**। 'ओजः सहोऽम्भसा वर्तते' इति ठक्, साहसिकः। तस्य कर्मेति तस्माद् गुणवचनब्राह्मणादित्वात् ष्यञ्, साहसिक्यम्। **उपयोगो धर्मादिप्रयोजनो विनियोग इति**। धर्मादिषु प्रयोजनं यस्य स तथोक्तः। आदिशब्दः कामादिपरिग्रहाय। **एधो दकस्योपस्कुरुत इति**। 'उपात् प्रतियत्नवैकृतवाक्याध्याहारेषु' इति सुट्। 'कृञः प्रतियत्ने' इति षष्ठी॥ ३२॥

**अधेः प्रसहने॥ तमधिचक्र इति**। कृञो लिट्, तस्य चैशादेशः। 'द्विर्वचनेऽचि' इति स्थानिवद्भावाद्

**पदमञ्जरी**

सहसा वर्तते साहसिकः 'ओजःसहोम्भसा वर्तते' इति ठक, तस्य कर्मणि ष्यञ्। **वर्तिका**=शकुनिविशेषः। **एधोदकस्येति**। समाहारद्वन्द्वः। 'कृञः प्रतियत्ने' इति षष्ठी। **उपस्कुरुत इति**। 'उपात्प्रतियत्न' इत्यादिना सुट्॥३२॥

**अधेः प्रसहने॥ प्रसहनमभिभव इति**। 'सामाह यो युधा नृभिः' (ऋ० ५.२५.६) 'तमग्ने पृतनाषाहं' (ऋ० ५.२३.२) इत्यादौ दर्शनात्। केचित्तु 'षहृ मर्षणेऽभिभवे छन्दसि' इति पठन्ति, तत्र 'छन्दसि' इति प्रायिकं द्रष्टव्यम्। **अपराजयो वेति**। पराजेनुं समर्थस्यैव क्षमया यस्तदभावः स इत्यर्थः। तथा च **भारविः**-'भवादृशाश्चे-

**भावबोधिनी**

(१) गन्धन में—उत्कुरुते। उदाकुरुते। सूचित करता है। (२) अवक्षेपण—बाज पक्षी बत्तख को डरवाता है, धमकाता है। (३) सेवन में—गणकों की सेवा करता है, महामात्रों (प्रधान मन्त्रियों) की सेवा करता है। उपकुरुते=सेवा करता है। (४) साहसिक्य में—दूसरे की स्त्री पर बलात्कार करता है। उसमें विना विचार के प्रवृत्त होने लगता है। (५) प्रतियत्न—लकड़ी पानी के गुण को बदल देती है। काण्ड = सूखा भिण्डी का पौधा गुण को बदल देता है। उसके विद्यमान गुण को बदल देता है यह अर्थ है।

*कृञ् धातु से प्रतियत्न में ही षष्ठी विभक्ति और सुट् का आगम होता है।* [अतः अन्यत्र यथाप्राप्त द्वितीयादि ही होती है।] (६) प्रकथन में गाथाः प्रकुरुते। कथायें बढ़ा-चढ़ा कर कहता है। जनापवादान् प्रकुरुते। लोगों की बुराई को बढ़ा-चढ़ा कर कहता है। (७) उपयोग में-सौ लगाता है हजार लगाता है। [धर्म के उद्देश्य से सौ और हजार लगाता है—यह अर्थ हैइ सका है] इनमें ही होता है—इसका क्या फल है? कटं करोति। [चटाई बनाता है।]॥३२॥

अकर्तृगामी क्रियाफल के लिए यह सूत्र बनाया गया है। प्रसहन अर्थ में वर्तमान, अधिपूर्वक कृ धातु से आत्मनेपद होता है। प्रसहन = अभिभव = दबाना, अथवा अपराजय [ जो दबाने में समर्थ होता है उसीकी पराजय नहीं होती है। ] उदा०—तम् अधिचक्रे, उसे दबाया, अभिभूत किया, या पराजित नहीं हुआ।

अकर्त्रभिप्रायार्थोऽयमारम्भः। अधिपूर्वात् करोतेः प्रसहने वर्त्तमानादात्मनेपदं भवति। प्रसहनम्= अभिभवः, अपराजयो वा। तमधिचक्रे। तमभिबभूव, न तेन पराजित इति वा।

प्रसहन इति किम्? अर्थमधिकरोति। पृथग्योगकरणमुपसर्गविशेषणार्थम्॥

**१८२. वेः शब्दकर्मणः॥ ३४॥ (२७०७)**

'कृञः' इत्यनुवर्तते। विपूर्वात्करोतेरकर्त्रभिप्राये क्रियाफले शब्दकर्मण आत्मनेपदं भवति। कर्मशब्द इह कारकाभिधायी, न क्रियावचनः। 'क्रोष्टा विकुरुते स्वरान्। ध्वाङ्क्षो विकुरुते स्वरान्।'

शब्दकर्मण इति किम्? विकरोति पयः॥

**न्यासः**

द्विर्वचनम्, 'उरत्' इत्यत्वम्, रपरत्वञ्च, 'हलादिः शेषः', 'कुहोश्चुः' इति चुत्वम्॥ ३३॥

**वेः शब्दकर्मणः॥** 'कर्त्तरि कर्म' इत्येवमादौ क्वचित् कर्मशब्दस्य क्रियावाचिता दृष्टा। इहापि तस्य क्रियावाचिता मा विज्ञायीत्याह—**कर्मशब्द इह कारकाभिधायीति**। अथ क्रियाभिधायी कस्मान्न भवति? विपूर्वस्य करोतेः शब्दनक्रियायां वृत्त्यसम्भवात्। **शब्दकर्मण इति**। धातोरर्थद्वारकं चेदं विशेषणम्—शब्दः कर्मास्येति; शब्दकर्मा धात्वर्थः। तदर्थस्य शब्दकर्मत्वाद् तद्द्वारेण धातुरपि शब्दकर्मेति; अन्यथा हि क्रियावाचित्वाद्धातोः कथं शब्दः कर्मास्येति सम्बन्ध उपपद्यते॥ ३४॥

**पदमञ्जरी**

दधिकुर्वते परान्' (कि-१.४३) इति भवादृशाश्चेत्परानधिकुर्वते=क्षमया न पराजयन्ते, क्षमन्त इत्यर्थः, तदाह—**न वा तेन पराजित इत्यर्थ इति**। तेनात्मनेपदवाच्येन कर्त्रा तमित्येतद्वाच्यः कर्मभूतो न पराजित इत्यर्थः। **पृथग्योगकरणमित्यादि**। प्रकथनोपयोगप्रसहनेषु 'अधेः' इत्युच्यमाने गन्धनादिष्वपि अधिपूर्वादेव स्यात्। अथ तत्राधिग्रहणं न क्रियेत, प्रसहनेऽप्यध्यभावेऽपि प्रसङ्गः, अत उत्सर्गेण प्रसहनं विशेषयिस्यामीति प्रसहने वा उत्सर्गं विशेषयिष्यामीति योगविभाग इत्यर्थः॥ ३३॥

**वेः शब्दकर्मणः॥** 'उदोऽनूर्ध्वकर्मणि' इत्यादिवत् कर्मशब्दः क्रियावाची मा विज्ञायीत्याह—**कर्मशब्द इत्यादि**। विपूर्वस्य करोतेः शब्दक्रियायां वृत्त्यसम्भवात्, कृत्रिमसम्भवे लौकिकस्य ग्रहणायोगाच्च। किंच 'वेः शब्दः' इत्येवं वक्तव्यम्, कर्मग्रहणमनर्थकम्, **विकरोति पय इति** सकर्मकत्वाद् उत्तरेणापि न भवति॥ ३४॥

**भावबोधिनी**

प्रसहने—यह किस लिये है? अर्थम् अधिकरोति। [ अर्थ = धन को अधिकार में लेता है। ] अधि इस उपसर्ग से विशेषित करने के लिये यह सूत्र अलग से बनाया गया। [ अन्यथा पूर्ववर्त्ती सूत्र में ही प्रसहन जोड़ा जा सकता था। ]॥ ३३॥

कृञ्—इसकी अनुवृत्ति होती है। अकर्तृगामी क्रियाफल रहने पर शब्दकर्मक, वि पूर्वक कृ धातु से आत्मनेपद होता है। कर्म शब्द यहाँ कारक का वाची है। क्रियावाची नहीं है। [ अतः जब शब्द को कर्म माना जाय तभी इसकी प्रवृत्ति होती है। ] उदा०—सियार आवाज को बिगाड़ कर बोलता है। कौवा आवाज को बिगाड़ कर बोलता है। शब्दकर्मणः [ शब्द ही कर्म है जिसका उससे ] यह किसलिये है? विकरोति पयः [ दूध विकृत हो जाता है। ]॥ ३४॥

**१८३. अकर्मकाच्च ॥ ३५ ॥ (२७०८)**

'वेः कृञः' इत्यनुवर्त्तते। विपूर्वात् करोतेरकर्मकक्रियावचनादात्मनेपदं भवति। विकुर्वते सैन्धवाः। साधुदान्ताः शोभनं वल्गन्तीत्यर्थः। ओदनस्य पूर्णाश्छात्रा विकुर्वते। निष्फलं चेष्टन्त इत्यर्थः॥

**१८४. सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥३६॥ (२७०९)**

'णीञ् प्रापणे' (धा० पा० ९०१)—अस्मात् कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः। 'णीञ् प्रापणे'—इत्येतस्माद्धातोरात्मनेपदं भवति सम्माननादिषु विशेषणेषु सत्सु।

सम्माननम्=पूजनम्। नयते चार्वी लोकायते। चार्वी=बुद्धिः, तत्सम्बन्धादाचार्योऽपि चार्वी, स लोकायते शास्त्रे पदार्थान् नयते, उपपत्तिभिः स्थिरीकृत्य शिष्येभ्यः प्रापयति, ते युक्तिभिः स्थाप्यमानाः सम्मानिताः पूजिता भवन्ति।

**न्यासः**

**अकर्मकाच्च ॥ ओदनस्य परिपूर्णा इति**। सुहितार्थयोगे षष्ठी। 'पूरणगुणसुहितार्थ' इत्यादिना षष्ठीसमासप्रतिषेधेन ज्ञापितमेतत्—सुहितार्थयोगे षष्ठी भवतीति। सुहितार्थाः=तृप्त्यर्थाः। पूर्णास्तृप्ता इत्यर्थः ॥३५॥

**सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ सम्माननादिषु विशेषणेष्विति**। किंस्विदत्र विशिष्यते नयत्यर्थोऽनेनेति विशेषणम्? किंस्विन्नयत्यर्थ एव विशेषणम्? विशिष्यते व्यावर्त्यतेऽर्थान्तरादिति कृत्वा। तत्र सम्माननमाचार्यकरणं भृतिश्चेति पूर्वेणैवार्थेनैतानि, विशेषणानि परिशिष्टानि तु नयत्यर्थस्वभावानि

**पदमञ्जरी**

**अकर्मकाच्च ॥ ओदनस्य पूर्णा इति**। सुहितार्थयोगे षष्ठी भवति, ज्ञापनात्, यदयं पूरणगुणसुहितार्थेति सुहितार्थयोगे या षष्ठी सा न समस्यत इत्याह, तज्ज्ञापयत्याचार्यः—भवति सुहितार्थयोगे षष्ठीति। **अकर्मकादिति किमिति**[1]। पूर्वसूत्रे वेरिति योगविभागेनेष्टसिद्धिं मन्यते, न चैवमतिप्रसङ्गः, शब्दकर्मण इत्यस्य नियमार्थत्वात्—कर्मणि यदि भवति शब्द एवेति, कटं विकरोतीति। विपरीतोऽपि नियमः सम्भाव्येत—शब्दे यदि भवति कर्मण्येवेति, ततश्चात्रापि स्यादिति भावः ॥ ३५ ॥

**सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः ॥ सम्माननादिषु विशेषणेषु सत्स्विति**। युक्तं सम्माननाचार्यकरणवेतनानां विशेषणत्वम्, तत्र हि प्रापणमेव धात्वर्थः, सम्माननादीनि तु तमेव

**भावबोधिनी**

'वेः कृञः' इनकी अनुवृत्ति होती है। अकर्मक क्रियावाचक विपूर्वक कृ धातु से आत्मनेपद होता है। उदा०—विकुर्वते सैन्धवाः, अच्छी प्रकार से सिखाये गये घोड़े चौकड़ी भरते हैं। ओदनस्य पूर्णाश्छात्रा विकुर्वते—खूब चावल खाये हुये छात्र बेकार कूद फांद करते हैं, निष्फल चेष्टा करते हैं, यह अर्थ है ॥ ३५ ॥

णीञ् प्रापणे ( पहुँचना )—इस धातु से कर्तृगामी क्रियाफल रहने पर आत्मनेपद सिद्ध ही है। अकर्तृगामी क्रियाफल के विषय में यह सूत्र आरम्भ किया जा रहा है। 'णीञ् प्रापणे' इस धातु से, सम्मानन आदि सात विशेषण रहने पर, आत्मनेपद होता है।

(१) सम्मानन=पूजन। उदा०—नयते चार्वी लोकायते। चार्वी = बुद्धि, इसके सम्बन्ध के कारण आचार्य भी 'चार्वी' हो जाता है वह आचार्य लोकायत = बौद्ध शास्त्र में पदार्थों को प्रतिष्ठित करता है = उपपत्तियों से सिद्ध करके शिष्यों को समझाता है। वे शिष्य युक्तियों द्वारा स्थापित होते हुये सम्मानित = पूजित होते हैं।

---

१. एतत्पाठपर्यालोचनयानुमीयते—वृत्तावयं पाठो भ्रष्ट इति। यद्वा स्पष्टतार्थं पदमंजरीकारेणैव योजितः।

**उत्सञ्जनम्**=उत्क्षेपणम् । माणवकमुपनयते । उत्क्षिपतीत्यर्थः ।

**आचार्यकरणम्**=आचार्यक्रिया । माणवकमीदृशेन विधिनाऽऽत्मसमीपं प्रापयति, यथा स उपनेता स्वयमाचार्यः संपद्यते । माणवकमुपनयते । आत्मानमाचार्यीकुर्वन् माणवकमात्मसमीपं प्रापयतीत्यर्थः ।

**ज्ञानम्**=प्रमेयनिश्चयः । नयते चार्वी लोकायते । [illegible]मेयं निश्चिनोतीत्यर्थः ।

**भृतिः**=वेतनम् । कर्मकरानुपनयते । भृतिदानेन समीपं करोतीत्यर्थः ।

**विगणनम्**=ऋणादेर्निर्यातनम् । मद्राः करं विनयन्ते । निर्यातयन्तीत्यर्थः ।

**व्ययः**=धर्मादिषु विनियोगः । शतं विनयते, सहस्रं विनयते । धर्माद्यर्थं शतं विनियुङ्क्त इत्यर्थः ।

एतेष्विति किम् ? अजां नयति ग्रामम् ॥

### न्यासः

द्वितीयेन विशेषणानि । **नयते चार्वी लोकायत इति** । अत्र नयतेः प्रापणमर्थो विशेष्यः, शिष्यसम्माननन्तु तस्य फलभावेन विशेषणम् । तत्सम्बन्धादाचार्योऽपि चार्वीत्युच्यत इति । यथा कुन्तान् प्रवेशयेत्युक्ते कुन्तशब्दः कुन्तसम्बन्धात् पुरुषेष्वपि वर्त्तते, तथेहापि चार्वीशब्दश्चार्वीसम्बन्धादाचार्येऽपि । **स्थिरीकृत्येति** । निश्चलीकृत्येत्यर्थः । निश्चलत्वन्तु तेषामनन्यार्थभावः । **स्थाप्यमाना इति** । लोकायते शास्त्रे पदार्थानां सम्यगवबोधः । **पूजिता भवन्तीति** । अभिलषितार्थसम्पादनमेव तेषां पूजा । अभिलषितोऽर्थस्तु लोकायते शास्त्रे पदार्थानां सम्यगवबोधः । **उत्क्षिपतीत्यर्थं इति** । एतेनोत्सञ्जनं नयतेरर्थः, न तु तस्य विशेषणमिति दर्शयति । एवं **निश्चिनोतीत्यर्थं** इत्यादिभिरपि ज्ञानादीनां यथासम्भवं नयत्यर्थतां दर्शयतीति वेदितव्यम् । **ईदृशेनेति** । यादृशः

### पदमञ्जरी

विषयतया व्यवच्छिन्दन्ति । उत्सञ्जनादीनां त्वयुक्तम्; तेषामेव धात्वर्थत्वात्, तद्व्यतिरिक्तस्य विशेष्यस्यासम्भवात्, उच्यते; सम्माननादेरुत्सञ्जनादेश्च विशेषणत्वं समानं पूर्वोक्तं धात्वर्थविशेषणम्, उत्तरस्तु धातुविशेषणमिति विशेष्यमात्रं भिद्यते, अतः सुष्ठूक्तम्—**सम्माननादिषु विशेषणेष्विति** । **चार्वी बुद्धिरिति** । चारुशब्दात् 'वोतो गुणवचनात्' इति ङीष् । **आचार्योऽपि चार्वीति** । यथा यष्टीः प्रवेशयेति पुरुषेष्वजहत्स्वलिङ्ग एव यष्टिशब्दः, तद्वच्चार्वीशब्दः । **ते युक्तिभिरित्यादि** । पूर्वस्मिन् वाक्ये गुणभावेनापि प्रकृताः शिष्याः तच्छब्देन परामृश्यन्ते । **स्थाप्यमानेति** । तिष्ठतिः प्रतिपादनेऽत्र वर्त्तते । ते शिष्याः युक्तिभिः प्रतिपाद्यमानाः=निष्पाद्यमान इत्यर्थः । **पूजिता भवन्तीति** । अभिलषितार्थसंपादनमेवैतेषां पूजा । पदार्था युक्तिभिः स्थाप्यमाना इति तु व्याख्याने पदार्थानामचेतनत्वात् न मुख्यं सम्माननम् ।

**उत्क्षिपतीत्यर्थं इति** । तेनोत्सञ्जनं नयतेरर्थं इति दर्शयति ।

**आचार्यकरणमाचार्यक्रियेति** । सूत्रे च कारणावस्थाया विवक्षितत्वात् च्विः प्राप्तोऽपि विकल्पाधिकारान्न कृतः । तथा वृत्तौ चाचार्यीकुर्वन्निति च्विः प्रयुक्तः । ननूपनयनं माणवकस्य संस्कारः, येनासावध्ययने योग्यो

### भावबोधिनी

(२) उत्सञ्जन = उत्क्षेपण ( उछालना ) । उदा०—माणवकमुपनयते—माणवक को उछालता है ।

(३) आचार्यकरण=आचार्यक्रिया । माणवक को ऐसी विधि से अपने पास लाता है जिससे वह उपनेता स्वयम् आचार्य बन जाता है । माणवकम् उपनयते । बच्चे का उपनयन करता है । अपने को आचार्य बनाता हुआ बच्चे को अपने पास पहुँचा लेता है—यह अर्थ है ।

(४) ज्ञान = प्रमेय का निश्चय । नयते चार्वी लोकायते । बुद्धि लोकायत शास्त्र में प्रमेय = तत्त्व का निश्चय करती है, यह अर्थ है ।

(५) भृति = वेतन । कर्मकरान् उपनयते । नौकरों को वेतन देकर अपने पास कर लेता है ।

## १८५. कर्तृस्थे चाशरीरे कर्मणि ॥ ३७ ॥ (२७१०)

**नयतेः कर्त्ता देवदत्तादिर्लकारवाच्यः। कर्तृस्थे कर्मण्यशरीरे सति नयतेरात्मनेपदं भवति। शरीरम्=प्राणिकायः, तदेकदेशोऽपि शरीरम्। क्रोधं विनयते, मन्युं विनयते।**

**कर्तृस्थ इति किम्? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति। अशरीर इति किम्? गडुं विनयति। घाटां विनयति। कर्मणीति किम्? बुद्धया विनयति। प्रज्ञया विनयति।**

न्यासः

शास्त्रोक्तो विधिः, तादृशेनेत्यर्थः। अत्राप्याचार्यकरणं नयत्यर्थस्य फलभावेनैव विशेषणम्। **कर्मकरानुपनयते इति।** अत्र हि भृतिर्हेतुभावेन नयत्यर्थस्य समीपकरणस्य विशेषणम्। **ऋणादेरिति।** आदिशब्देन करशुल्क-दण्डादीनां ग्रहणम्। **करो** नाम राजग्राह्यो भागः कर्षकैः रक्षार्थं परिकल्पितः। **धर्मादिष्विति।** आदिशब्देन कामादिष्वपि॥ ३६॥

**कर्तृस्थे चाशरीरे कर्मणि॥ नयतेः कर्त्तेति।** अर्थद्वारकः सम्बन्धो वेदितव्यः। **तदेकदेशोऽपि शरीर-मिति।** समुदायेषु हि प्रवृत्ताः शब्दाः क्वचिदवयवेष्वपि वर्त्तन्त इति भावः। कथं पुनर्मुख्ये सति गौणस्यापि ग्रहणं लभ्यते? शरीरग्रहणात्। इह लघुत्वात् कायग्रहणे कर्त्तव्ये यच्छरीरग्रहणं करोति तच्छरीरैकदेशोऽपि शरीरश्रुत्या नाम गृह्येतेत्येवमर्थम्। **क्रोधं विनयते इति।** अत्र नयतेर्यः कर्त्ता स हि बुद्धीन्द्रियदेहसमुदायस्वभावो

पदमञ्जरी

भवति; न त्वनेनाचार्ये कश्चिदतिशयः जन्यते; आचार्यशब्दस्य तु प्रवृत्तिनिमित्तमुपनीयाध्यापनं नाम क्रिया-विशेषः, यथोपाध्यायशब्दस्यैकदेशाध्यापनं तत्कथमाचार्यकरण आत्मनेपदं विधीयते इत्यत आह—**माणवकमी-दृशेनेत्यादि।** एवं मन्यते—उपनीयाध्यापनेनादृष्टरूपः कश्चिदतिशय आचार्ये जन्यते, तदेव प्रवृत्तिनिमित्तमाचार्य-शब्दस्येति तदाह—**स्वयमाचार्यः सम्पद्यते इति।** 'आत्मानमाचार्यीकुर्वन्' इति च हेतुलक्षणे लटः शत्रादेशः। **ईदृशेनेति।** यादृशः शास्त्रोक्तो विधिस्तादृशेनेत्यर्थः। ननु यद्याचार्यकरणमुपनयनस्य प्रयोजनं तत्कर्त्रभिप्रायमिति नार्थ आचार्यकरण आत्मनेपदविधानेन? उच्यते; नोपनयनेनाचार्यत्वं जन्यते, किं तर्हि? तत्पूर्वकेणाध्यापनेन। उपनयनक्रियायास्तु माणवकसंस्कारः साक्षात् फलम्। एवं संस्कृतस्य माणवकस्य यदध्यापनं तेनाचार्यत्वं जन्यते इति न तदुपनयनायाः क्रियायाः फलम्। यच्च तस्याः फलं, तन्माणवकगामि, न कर्तृगामि।

**निश्चिनोतीत्यर्थ इति।** अनेन ज्ञानं नयतेरर्थ इत्याह। **कारं विनयते इति।** कर एव कारः, प्रज्ञादिः, राजग्राह्यो भागः कर्षकैः कल्पितः॥ ३६॥

**कर्तृस्थे चाशरीरे कर्मणि॥** नयतेरात्मनेपदविधानात्तत्सम्बन्ध्येव कर्त्ता लकारवाच्यः प्रत्यासन्नो गृह्यत इत्याह—**नयतेः कर्त्तेति। तदेकदेशोऽपि शरीरमिति।** अपिशब्दोऽवधारणे। इह शरीरस्यैव चैतन्यविशिष्टस्य कर्तृत्वं लौकिकाः प्रतियन्ति, न तद्व्यतिरिक्तस्य बुद्धीन्द्रियादिमतश्चेतनस्य। न च शरीरमेव शरीरस्थं भवति, अतस्तदेकदेश एव तद्ग्रहणेन गृह्यते इत्यर्थः। अत्र क्रोधाद्यपनयनफलं कर्त्रभिप्रायमिति 'स्वरितञितः' इत्येव

भावबोधिनी

(६) विगणन—ऋण आदि देना। मद्राः करं विनयन्ते। मद्रदेशवासी राजा को कर देते हैं।

(७) व्यय—धर्मादि कार्यों में लगाना। शतं विनयते, सहस्रं विनयते। धर्मादि कार्य के लिये सौ और हजार रुपये लगाता है। इनमें ही हो—यह किसलिये है? अजां नयति ग्रामम् [ बकरी को गाँव ले जाता है। ]॥ ३६॥

नी धात्वर्थ का कर्ता देवदत्त आदि लकार का वाच्य होता है। कर्ता में स्थित, शरीर-भिन्न कर्म करने पर 'नी' धातु से आत्मनेपद होता है। शरीर=प्राणी का शरीर, इसका एक अवयव भी शरीर होता है। [ अतः अवयव भी कर्म नहीं होना चाहिये। ] उदा०—क्रोधं विनयते, मन्युं विनयते। [ क्रोध दूर करता है, मन्यु=क्रोध दूर करता है। ]

## १८६. वृत्तिसर्गतायनेषु क्रमः ॥ ३८ ॥ (२७११)

'शेषात्कर्त्तरि परस्मैपदे' (१.२.७८) प्राप्ते वृत्त्यादिष्वर्थेषु क्रमेर्धातोरात्मनेपदं भवति। वृत्तिः= अप्रतिबन्धः। सर्गः=उत्साहः। तायनम्=स्फीतता। वृत्तौ तावत्–ऋक्ष्वस्य क्रमते बुद्धिः। न प्रतिहन्यत इत्यर्थः। ऋजुःष्वस्य क्रमते बुद्धिः। सर्गे—व्याकरणाध्ययनाय क्रमते। उत्सहते इत्यर्थः। तायने–अस्मिन् शास्त्राणि क्रमन्ते। स्फीतीभवन्तीत्यर्थः।

एतेष्विति किम्? अपक्रामति॥

## १८७. उपपराभ्याम् ॥ ३९ ॥ (२७१२)

**न्यासः**

देवदत्तादिः। तत्रैव कर्म क्रोधो वर्त्तत इति कर्तृस्थं कर्माशरीरं भवति। एवं गडु **विनयतीत्यादौ** गडवादेः शरीरैकदेशस्य कर्मणः कर्तृस्थाभावो वेदितव्यः। अत्र च क्रोधाद्यपगमः क्रियाफलं कर्त्रभिप्राय एवेति 'स्वरितञितः कर्त्रभिप्राये' इत्यनेनैव सिद्धे नियमार्थमेतद् वचनं वेदितव्यम्—कर्तृस्थे कर्मण्यशरीर एव, नान्यत्रेति ॥ ३७ ॥

**वृत्तिसर्गतायनेषु क्रमः** ॥ शेषलक्षणेन क्रमेः परस्मैपदे प्राप्त आत्मनेपदं विधीयते। वृत्त्या[illegible] अप्रतिबन्धोत्साहस्फीततासु प्रसिद्धाः ॥ ३८ ॥

**उपपराभ्याम्** ॥ **संक्रामतीति**। 'क्रमः परस्मैपदेषु' इति दीर्घः ॥ ३९ ॥ [illegible]धीयते।

**पदमञ्जरी**

सिद्धे नियमार्थमिदम्—कर्तृस्थे कर्मण्यशरीरस्थ एवेति। अथ कथम् **'विगणय्य नयन्ति** [illegible] **क्रोधरया जिगीषवः'** इति?

केचिदाहुः—अपगमे वर्तमानादिदमात्मनेपदविधानं भवति, अत्र तु करोत्यर्थे प्राप्त्यर्थे वा वर्तते, अनेकार्थत्वाद्धातूनामिति ॥ ३७ ॥

**वृत्तिसर्गतायनेषु क्रमः** ॥ सर्ग उत्साह इति। **'सृष्टश्चेद्ब्राह्मणवधे', 'येनेन्द्रलोकापजयाय सृष्टः'** इत्यादौ दर्शनात्सृजिरुत्सहार्थः। वृत्त्यादिष्विति किम्? अपक्रामति ॥ ३८ ॥

**भावबोधिनी**

कर्तृस्थे—इसका क्या फल है? देवदत्तो यज्ञदत्तस्य क्रोधं विनयति [ देवदत्त यज्ञदत्त के क्रोध को दूर करता है। कर्ता से भिन्न में क्रोध स्थित है ] 'अशरीरे' [शरीर अथवा अवयव न हो]—इसका क्या फल है? गडुं विनयति, घाटां विनयति [ गलगंड को झुकाता है। घांटी को झुकाता है ] कर्मणि—इसका क्या फल है? बुद्ध्या विनयति, प्रज्ञया विनयति [ बुद्धि से विनम्र होता है, प्रज्ञा से विनम्र होता है। ] ॥ ३७ ॥

'शेषात् कर्तरि परस्मैपदम्' (पा० सू० १।३।३) से परस्मैपद प्राप्त रहने पर वृत्ति आदि तीन अर्थों में क्रम धातु से आत्मनेपद होता है। वृत्ति = प्रतिबन्ध न होना। सर्ग = उत्साह। तायन = स्फीतता, विस्तार। (१) वृत्ति अर्थ में—ऋक्षु अस्य क्रमते बुद्धिः [ ऋचाओं में इसकी बुद्धि विना रोक टोक के चलती है। ] प्रतिबद्ध नहीं होती है। यजुःष्वस्य क्रमते बुद्धिः [ यजुर्वेद-मन्त्रों में इसकी बुद्धि खूब चलती है। (२) सर्ग = व्याकरणाध्ययनाय क्रमते [ व्याकरण पढ़ने में उत्साहित होता है। ] उत्साहित होता है—यह अर्थ है। (३) तायन में—अस्मिन् शास्त्राणि क्रमन्ते [ इसमें शास्त्र समृद्ध = विस्तृत होते हैं ] विस्तृत होते हैं—यह अर्थ है।

इनमें ही हो—इसका क्या फल है? अपक्रामति [ पीछे हटता है। ] ॥ ३८ ॥

वृत्ति-सर्ग-तायनेषु—इसकी अनुवृत्ति होती है। वृत्ति आदि उपर्युक्त अर्थों में वर्तमान, उप तथा परा पूर्वक क्रम धातु से आत्मनेपद होता है। तो यह किसलिये बनाया गया है? उपसर्ग का नियम करने के लिये—यदि उपसर्ग-

'वृत्तिसर्गतायनेषु' इति वर्त्तते। उपपरापूर्वात्क्रमतेर्वृत्त्यादिष्वर्थेषु वर्त्तमानादात्मनेपदं भवति। किमर्थं तर्हीदमुच्यते ? उपसर्गनियमार्थम्—सोपसर्गाद्दुपपरापूर्वादेव, नान्यपूर्वादिति। उपक्रमते, पराक्रमते।

उपपराभ्यामिति किम् ? संक्रामति। वृत्त्यादिष्वित्येव—उपक्रामति, पराक्रामति॥

**१८८. आङ उद्गमने ॥ ४०॥** (२७१३)

आङ्पूर्वात् क्रमतेरुद्गमने वर्त्तमानादात्मनेपदं भवति। आक्रमते आदित्यः। आक्रमते चन्द्रमाः। आक्रमन्ते ज्योतींषि।

उद्गमन इति किम् ? आक्रामति माणवकः कुतुपम्।

*ज्योतिरुद्गमने इति वक्तव्यम्* (म० भा० १.३.४०, वा० १)। इह मा भूत्—आक्रामति धूमो हर्म्यतलात् (म० भा० १.३.४०)॥

### न्यासः

आङ उद्गमने॥ आक्रामति माणवकः कुतपमिति। अवष्टभ्नातीत्यर्थः। ज्योतिरुद्गमन इति वक्तव्यमिति। ज्योतिषां ग्रहनक्षत्रादीनामुद्गमन एवात्मनेपदं भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं मिति। सूत्रम्—'अनुपसर्गाद्वा' इत्यतो वाग्रहणमनुवर्त्तते सिंहावलोकितन्यायेन, सा च व्यवस्थितविभाषा; तेन ग्रहणं लभ्यते न्यन एव भविष्यति, नान्यत्रेति। यदि तर्हि 'वा' ग्रहणमनुवर्त्तते, उत्तरयोरपि योगयोरनुवर्त्तेत ? शरीरश्रुत्या नाम ग्रहेन नानुवर्त्तिष्यत इत्यदोषः॥ ४०॥

### पदमञ्जरी

भवति; न त्वनेनाच्पराभ्याम्॥ उपपराभ्यामिति किमिति। उपसर्गनियमः किमर्थः इत्यर्थः। संक्रामतीति। "क्रमः विशेषः, यङ्क्षेषु' इति दीर्घः॥ ३९॥

दृशेनेत् आङ उद्गमने॥ आक्रामति माणवकः कुतुपमिति। अवष्टभ्नातीत्यर्थः। ह्रस्वा कुतूः कुतुपः, 'कुत्वा डुपच्'। कुतुपमिति पाठे कुतुपो दर्भसंस्तरः। आक्रामति धूमो हर्म्यतलमिति। उद्गमने क्रमिरकर्मकः, तस्माद्धर्म्यतलादिति पञ्चम्यन्तं पठितव्यम्। यद्वा—उद्गमनपूर्विकायां व्याप्तावत्र क्रमिर्द्रष्टव्यः। इह तु 'नभः समाक्रामति चन्द्रमाः क्रमात्' इति क्रमिर्व्याप्तौ वर्तते; नोद्गमने॥ ४०॥

### भावबोधिनी

पूर्वक क्रम से आत्मनेपद हो तो 'उप और परा पूर्वक से ही हो, अन्य पूर्वक से न हो।' उपक्रमते, पराक्रमते। [ उपक्रम= प्रारम्भ करता है, पराक्रम करता है। ]

उपपराभ्याम्—[ उप और परा से परवर्त्ती ] इसका क्या फल है ? संक्रामति। [ यहाँ नहीं होता है। ] वृत्ति आदि अर्थों में ही हो—इसका क्या फल है ? उपक्रामति, पराक्रामति—[ यहाँ नहीं होता है ]॥ ३९॥

उद्गमन [उदय अर्थ में वर्तमान, आङ्पूर्वक क्रम धातु से आत्मनेपद होता है। उदा०—आक्रमते आदित्यः, आक्रमते चन्द्रमाः, आक्रमन्ते ज्योतींषि। [ सूर्य उदित होता है। चन्द्रमा उदित होता है। तारागण उदित होते हैं। ]

उद्गमने—इसका क्या फल है ? आक्रामति माणवकः कुतुपम् [बच्चा कुप्पी या कुशासन को बन्द करता है। ] *ज्योति के उद्गमन में—यह कहना चाहिये।* यहाँ पर न हो—आक्रामति धूमो हर्म्यतलात्—[ महल से धुवाँ व्याप्त करता है ]॥ ४०॥

पादविहरण = पैर उठाना अर्थ में वर्तमान, विपूर्वक क्रम धातु से आत्मनेपद होता है। विहरण = पैर उठाना, चलना। उदा० सुष्ठु विक्रमते, साधु विक्रमते [ घोड़ा पैर अच्छी तरह उठाता है, चलता है। ] घोड़ा आदि की चालविशेष को विक्रमण कहा जाता है। यद्यपि क्रम धातु पादविहरण [ पैर उठाना = चलना ] अर्थ में ही पढ़ी गयी है तथापि 'धातुयें अनेकार्थक होती हैं' इस नियम के अनुसार यहाँ कहा गया है।

## १८९. वेः पादविहरणे ॥ ४१ ॥ (२७१४)

विपूर्वात् क्रमतेः पादविहरणेऽर्थे वर्त्तमानादात्मनेपदं भवति। विहरणम्=विक्षेपः। सुष्ठु विक्रमते, साधु विक्रमते। अश्वादीनां गतिविशेषो विक्रमणमुच्यते [illegible]पि क्रमिः पादविहरण एव पठ्यते—'क्रमु पादविक्षेपे' ( धा० पा० ४७३ ) इति, तथाप्यनेकार्थत्वाद्धातूनामेवमुक्तम्।

पादविहरणे इति किम् ? विक्रामत्यजिनसन्धिः ॥

## १९०. प्रोपाभ्यां समर्थाभ्याम् ॥ ४२ ॥ (२७१५)

'प्र उप' इत्येताभ्यामुपसर्गाभ्यां परस्मात् क्रमतेरात्मनेपदं भवति, तौ चेत् प्रोपौ समर्थौ=तुल्यार्थौ भवतः। क्व चानयोस्तुल्यार्थता ? आदिकर्मणि। प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम्।

समर्थाभ्यामिति किम् ? पूर्वेद्युः प्रक्रामति। गच्छतीत्यर्थः। अपरेद्युरुपक्रामति। आगच्छतीत्यर्थः। अथ 'उपपराभ्याम्' (१. ३. ३९) इत्यनेनात्मनेपदमत्र कस्मान्न भवति ? वृत्त्यादिग्रहणं तत्रानुवर्त्तते ततोऽन्यत्रेदं प्रत्युदाहरणम् ॥

## १९१. अनुपसर्गाद्वा ॥ ४३ ॥ (२७१६)

**न्यासः**

वेः पादविहरणे ॥ विक्रामत्यजिनसन्धिरिति। द्विधा भवति। स्फुटतीत्यर्थः ॥ ४१ ॥ [illegible]

प्रोपाभ्यां समर्थाभ्याम् ॥ प्रक्रमते, उपक्रमते इति। आरभत इत्यर्थः ॥ ४२ ॥ [illegible]धीयते।

अनुपसर्गाद्वा ॥ अप्राप्तविभाषेयमिति। वृत्त्यादीनां निवृत्तत्वात् ॥ ४३ ॥

**पदमञ्जरी**

वेः पादविहरणे ॥ विक्रामत्यजिनसन्धिरिति। द्विधा भवति, स्फुटतीत्यर्थः ॥ ४१ ॥

प्रोपाभ्यां समर्थाभ्याम् ॥ अन्योऽन्यसाहचर्यात्प्रोपयोरुपसर्गयोर्ग्रहणम्, न प्रातिपदिकान्तरकर्मप्रवचनीययोः, नापि क्रियान्तरसम्बन्धिनोः, नाप्यनर्थकयोरित्याह—प्र उप इत्येताभ्यामुपसर्गाभ्यामिति। तुल्यार्थाविति। एतेन समोऽर्थो ययोरिति समर्थौ, शकन्ध्वादित्वात्पररूपम्, संशब्दस्यैव वाऽनेकार्थत्वात्तुल्यार्थत्वमिति दर्शयति। ननु 'समर्थः पदविधिः' इत्यादौ सम्बन्धार्थत्वं प्रसिद्धम्, सत्यम्; इह तु धात्वर्थं प्रति पारतन्त्र्यान्न परस्परेण सम्बन्धार्थत्वम्। धातुना चोपसर्गयोः सम्बन्धोऽव्यभिचारी, तस्मात्पूर्वोक्त एवार्थः। प्रक्रमते इति। आरभत इत्यर्थः ॥ ४२ ॥

अनुपसर्गाद्वा ॥ अप्राप्तविभाषेयमिति। 'उपपराभ्याम्' इत्यस्य नियमार्थत्वाद् वृत्त्यादिसूत्रमनुपसर्ग-

**भावबोधिनी**

पादविहरणे—इसका क्या फल है ? विक्रामति अजिनसन्धिः [ चमड़े का जोड़ टूटता है। ] ॥ ४१ ॥

प्र तथा उप—इन उपसर्गों से परे क्रम धातु से आत्मनेपद होता है यदि ये दोनों उपसर्ग समर्थ = तुल्यार्थक हों तो। इन दोनों की तुल्यार्थता कहाँ है ? आदिकर्म में। [किसी क्रिया की प्रारम्भिक स्थिति को आदि कर्म कहते हैं।] उदा०—प्रक्रमते भोक्तुम्, उपक्रमते भोक्तुम्। [ भोजन करना आरम्भ करता है। ]

समर्थाभ्याम् [ = तुल्य अर्थवालों से परे ] यह किस लिये है ? पूर्वेद्युः प्रक्रामति [ पहले दिन ] जाता है—यह अर्थ है। अपरेद्युः उपक्रामति [ दूसरे दिन ] आ जाता है—यह अर्थ है।

'उप पराभ्याम्—' इसी सूत्र से इनमें आत्मनेपद क्यों नहीं होता ? उस सूत्र में 'वृत्ति-सर्गतायनेषु' की अनुवृत्ति होती है। इन अर्थों से भिन्न स्थलों पर यह प्रत्युदाहरण है ॥ ४२ ॥

'क्रमः' इसकी अनुवृत्ति होती है। यह अप्राप्त-विभाषा है। [ क्योंकि किसी से प्राप्ति न रहने पर यह विकल्प किया गया है। ] उपसर्ग से रहित क्रम धातु से आत्मनेपद विकल्प से होता है। क्रमते, क्रामति।

'क्रम' इति वर्त्तते। अप्राप्तविभाषेयम्। उपसर्गवियुक्तात्क्रमतेरात्मनेपदं वा भवति। क्रमते। क्रमति।

अनुपसर्गादिति किम् ? संक्रामति॥

**१६२. अपह्नवे ज्ञः ॥ ४४ ॥ (२७१७)**

शेषात्कर्त्तरि परस्मैपदे (१. ३. ७८) प्राप्ते जानातेरपह्नवे वर्त्तमानाद् आत्मनेपदं भवति। अपह्नवः= अपह्नुतिः, अपलापः। सोपसर्गश्चायमपह्नवे वर्त्तते, न केवलः। शतमपजानीते, सहस्रमपजानीते अपलपतीत्यर्थः।

अपह्नव इति किम् ? न त्वं किञ्चिदपि जानासि॥

**१६३. अकर्मकाच्च ॥ ४५ ॥ (२७१८)**

न्यासः

अपह्नवे ज्ञः॥ शतमपजानीते इति। 'ज्ञाजनोर्जा' इति जादेशः, श्ना, पूर्ववद् 'ई हल्यघोः' मिति। [illegible] ॥ ४४ ॥

अकर्मकाच्च॥ कथञ्चायमकर्मक इति। एवं मन्यते—सर्पिरादि ज्ञेयत्वेन विवक्षितं कर्म, अतस्तेन

पदमञ्जरी

तत्रायं विकल्प इति भावः ॥ ४३ ॥

अपह्नवे ज्ञः॥ शेषादित्यादि। असत्यस्मिन् सूत्रे अयमविशेष एव भवतीति भावः। सोपसर्गश्चेति। 'अनुपसर्गाज् ज्ञः' इत्यनेन कर्त्रभिप्राये क्रियाफले न सिद्ध्यतीति भावः। अपजानीते इति। 'ज्ञाजनोर्जा' ॥ ४४ ॥

अकर्मकाच्च॥ अकर्त्रभिप्रायार्थमिदमिति। अथ कर्त्रभिप्राये कथम्, तत्राह—कर्त्रभिप्राये हीति। ननु

भावबोधिनी

अनुपसर्गात् [ उपसर्ग से रहित से ]—यह किस लिये है ? संक्रामति [ संक्रमण करता है। ] ॥ ४३ ॥

'शेषात् कर्तरि परस्मैपदम् ( पा० सू० १।२।३ ) इससे परस्मैपद प्राप्त रहने पर अपह्नव अर्थ में वर्तमान ज्ञा धातु से आत्मनेपद होता है। अपह्नव = छिपाना, अपलाप। यह उपसर्गयुक्त ही अपह्नव अर्थ में प्रयुक्त होता है, अकेला नहीं। उदा०—शतम् अपजानीते [ सौ रुपयों के लिये झूठ बोलता है। ] सहस्रम् अपजानीते [ हजार रुपयों के लिये झूठ बोलता है। ]

अपलाप करता है = झूठ बोलता है, यह अर्थ है।

अपह्नवे—इसका क्या फल है ? न त्वं किञ्चिदपि जानासि। [ तुम कुछ भी नहीं जानते हो। ] ॥ ४४ ॥

अकर्तृगामी क्रियाफल के लिये यह सूत्र बनाया गया है; क्योंकि कर्तृगामी क्रियाफल रहने पर अकर्मक = अकर्मकक्रियावाचक से आत्मनेपद का विधान 'अनुपसर्गाज्ज्ञः' [ पा० सू० १।३।७६ ] से होता है। उदा०—सर्पिषो जानीते, मधुनो जानीते [ घी समझ कर प्रवृत्त होता है, शहद समझ कर प्रवृत्त होता है। ] यह अकर्मक किस प्रकार है ? यहाँ सर्पिः ( घी ) ज्ञेयत्व [ ज्ञानविषयत्व ] रूप से विवक्षित नहीं है; तो क्या ? ज्ञानपूर्वक प्रवृत्ति में करणत्व रूप से विवक्षित है। जैसे की 'ज्ञोऽविदर्थस्य करणे' ( पा० सू० १।२।३ ) अज्ञानार्थक ज्ञा धातु के करण में शेषत्वेन विवक्षा में षष्ठी होती है ) इससे षष्ठी की जाती है। उदा०—सर्पिषो जानीते, मधुनो जानीते। घी रूपी उपाय के द्वारा प्रवृत्त होता है, यह अर्थ है।

**अकर्त्रभिप्रायार्थमिदम्, कर्त्रभिप्राये हि 'अनुपसर्गाज्ज्ञः' ( १. ३. ७६ ) इति जानातेरकर्मकादकर्मक-क्रियावचनादात्मनेपदं भवति। सर्पिषो जानीते, मधुनो जानीते। कथं चायमकर्मकः ? नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्, किं तर्हि ? ज्ञानपूर्विकायां प्रवृत्तौ करणत्वेन। तथा च—'ज्ञोऽविदर्थस्य करणे' (२. ३. ५१) इति षष्ठी विधीयते। सर्पिषो जानीते, मधुनो जानीते। सर्पिषा उपायेन प्रवर्त्तत इत्यर्थः।**

**अकर्मकादिति किम् ? स्वरेण पुत्रं जानाति॥**

## १९४. संप्रतिभ्यामनाध्याने ॥ ४६ ॥ (२७१९)

**'ज्ञः' इति वर्त्तते। सकर्मकार्थमिदम्। 'सं प्रति' इत्येवं पूर्वात् जानातेरनाध्याने वर्त्तमानादात्मनेपदं भवति। आध्यानम्=उत्कण्ठास्मरणम्। शतं संजानीते। सहस्रं संजानीते। शतं प्रतिजानीते, सहस्रं प्रतिजानीते।**

### न्यासः

कर्मणा सकर्मक एवायमित्यभिप्रायः। **कथमिति**। न कथञ्चिदित्यर्थः। **तथा चेत्यादिना** 'नात्र सर्पिरादि कर्मत्वेन, अपि तु करणत्वेन विवक्षितम्' इत्यत्र युक्तिमाह—**सर्पिषोपायेनेत्यादि**। यस्य सर्पिःऽत्रभिऽत्र... तेन भुजिक्रियायामभिलाषो न भवति तस्य भोजने प्रवृत्तिं प्रति सर्पिरुपायभावं प्रतिपद्यत इति... प्रवर्त्तत इति।

**अकर्मकादिति किमिति**। 'नात्र सर्पिरादि ज्ञेयत्वेन विवक्षितम्। किं तर्हि ?····करणत्... ...विधीयते। वृत्तिकृता साक्षाच्छब्दोपात्तेन करणेन सकरणादात्मनेपदं भवतीत्युक्तं भवति। एवञ्च सकरणादि... किमकर्मकग्रहणेनेति भावः। एवमुच्यमाने करणयुक्तात् सकर्मकादपि स्यादिति दर्शयितुमाह—**स्वरेण ... जानातीति** ॥ ४५ ॥

**संप्रतिभ्यामनाध्याने ॥ उत्कण्ठास्मरणमिति**। उत्कण्ठापूर्वकस्मरणमिति। **मातुरिति**। 'अधीगर्थद-

### पदमञ्जरी

सोपसर्गात्कर्त्रभिप्रायेऽप्यनेनैवात्मनेपदमेषितव्यम्—औषधस्यानुजानीते, औषधस्यानुजिज्ञासत इति; तस्मात्सर्पिषो जानीते इत्युदाहरणाभिप्रायमेतद्वेदितव्यम्। **कथं चायमकर्मक इति**। 'सर्पिषः' इति कर्मणि शेषत्वेन षष्ठी, न माषाणामश्नीयादितिवत्। तेन सर्पिरादिना ज्ञेयेन सकर्मक इति मत्वा प्रश्नः।

**अकर्मकादिति किमिति**। यदि सर्पिरादि करणत्वेन विवक्षितम्, तर्हि करणादिति वक्तव्यमित्यभि-प्रायः। एवमुच्यमाने सकर्मकादपि स्यादेवेति दर्शयति—**स्वरेणेति** ॥ ४५ ॥

**सम्प्रतिभ्यामनाध्याने ॥** उत्कण्ठास्मरणं उत्कण्ठापूर्वकं स्मरणम्। **मातुरिति**। 'अधीगर्थदयेशाम्' इति षष्ठी। ननु 'शेषे' तत्रानुवर्तते, तेन कर्म शेषत्वेन विवक्षितव्यमिति अकर्मकत्वात्पूर्वेणात्मनेपदप्रसङ्गः।

### भावबोधिनी

अकर्मकात्—यह किसलिये है ? स्वरेण पुत्रं जानाति [ आवाज से पुत्र को जान लेता है। ] ॥ ४५ ॥

'ज्ञः' इसकी अनुवृत्ति होती है। सकर्मक के लिये यह सूत्र है। सम् और प्रति पूर्वक, अनाध्यान अर्थ में वर्तमान, ज्ञा धातु से आत्मनेपद होता है। आध्यान = उत्कण्ठापूर्वक स्मरण। उदा०—शतं संजानीते, सहस्रं सञ्जानीते [ सौ की प्रतिज्ञा करता है, हजार के लिये प्रतिज्ञा करता है। ] शतं प्रतिजानीते, सहस्रं प्रतिजानीते [ सौ के लिये और हजार के लिये प्रतिज्ञा करता है। रुपये अर्थतः प्रतीत हो जाते हैं। ]

अनाध्याने इति किम् ? मातुः संजानाति, पितुः संजानाति । उत्कण्ठते इत्यर्थः (२. ३. ५२)।

**१९५. भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ ४७ ॥ (२७२०)**

शेषात्कर्त्तरि परस्मैपदे [ १. ३. ७८ ] प्राप्ते भासनादिषु विशेषणेषु सत्सु वदतेरात्मनेपदं भवति। भासनम्=दीप्तिः। वदते चार्वी लोकायते। भासमानो दीप्यमानस्तत्र पदार्थान् व्यक्तीकरोतीत्यर्थः। उपसंभाषा = उपसान्त्वनम्। कर्मकरानुपवदते। उपसान्त्वयतीत्यर्थः। ज्ञानम् = सम्यगवबोधः। वदते चार्वी

न्यासः

येशां कर्मणि' इति षष्ठी ॥ ४६ ॥

**भासनोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ भासनादिष्वर्थेषु विशेषणेष्विति।** अत्रापि किंस्विद्विशिष्यते वदत्यर्थोऽनेनेति विशेषणम् ? किंस्विद्वदत्यर्थं एव, विशेषणं ह्यर्थान्तराद् विशिष्यते = व्यवच्छिद्यत इति कृत्वा ? तत्रोपसम्भाषोपसान्त्वनमुपमन्त्रणञ्च द्वितीयेनार्थेन वदत्यर्थं एव विशेषणम्। परिशिष्टानि तु भासनादीनि प्रथमेनार्थेन विशेषणानि। **भासमानेत्यादिना** भासनं वदत्यर्थस्य लक्षणभावेन हेतुभावेन वा विशेषणमिति दर्शयति। तथा ह्यत्र भासमान इति 'लक्षणहेत्वोः क्रियायाः' इत्यनेन शानजादेशो विहितः। **जानातीत्यादिना** ...र्थस्य विषयिभावेन विशेषणमिति दर्शयति। ज्ञानेन ह्यसौ वदितुं जानाति। अत्र येन ज्ञानेन वदनं

पदमञ्जरी

भवति; न त्वनेना...यस्य तु मातरं संजानातीति व्यावर्त्यं स्याद्यत्र कर्मत्वेव विवक्षिता, नैष दोषः; 'अनाध्याने' इति विशेषः, यथो...तेन पूर्वयोगस्यापि शेषो भविष्यति ॥ ४६ ॥

**भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः ॥ भासनादिष्विति।** अत्रापि किञ्चिद्धातोर्विशेषणम्, किञ्चिद्धात्वर्थस्य। उपसान्त्वनम् = उपच्छन्दनम्, धातोः, भासनादि धात्वर्थस्य। **भासमान इति।** हेतौ लटः शानजादेशप्रयोगेण भासनं हेतुत्वेन विशेषणमित्याह। शिष्यैः स्तूयमानो भासते। तथा चोपर्युपरि शास्त्रार्थस्य प्रतिभासनात् सुष्ठु वदनं भवति, तेजोभङ्गे तु न शक्नुयाद्वदितुम्। **जानाति वदितुमिति।** 'शकधृष'

भावबोधिनी

अनाध्याने [ उत्कण्ठापूर्वक स्मरण न होने पर ] इसका क्या फल है ? मातुः संजानाति, पितुः संजानाति। [ माता के लिये, पिता के लिये ] उत्कण्ठित होता है—यह अर्थ है। अर्थात् माता का और पिता का उत्कण्ठापूर्वक स्मरण करता है ॥ ४६ ॥

'शेषात् कर्तरि परस्मैपदम्' से परस्मैपद प्राप्त रहने पर, भासन आदि छह विशेषण रहने पर वद् धातु से आत्मनेपद होता है। भासन=दीप्ति=प्रकाश। उदा०—(१) वदते चार्वी लोकायते [ आचार्य लोकायत शास्त्र में प्रकाशित होता है। ] भासमान=दीप्त होता हुआ उस शास्त्र में पदार्थों को व्यक्त करता है, यह अर्थ है। (२) उपसंभाषा=सान्त्वना देना। कर्मकरान् उपवदते। नौकरों को सान्त्वना देता है। यह अर्थ है। (३) ज्ञान = अच्छी प्रकार से समझना। वदते चार्वी लोकायते। आचार्य लोकायत शास्त्र में बोलना जानता है—यह अर्थ है। [ चार्वी = बुद्धि, उसके सम्बन्ध से आचार्य भी चार्वी कहा जाता है। ] (४) यत्न = उत्साह। क्षेत्रे वदते, गेहे वदते। खेतविषयक और घरविषयक उत्साह को प्रकट करता है, यह अर्थ है। (५) विमति = नाना प्रकार की बुद्धि। गेहे विवदन्ते, क्षेत्रे विवदन्ते [घर के विषय में या खेत के विषय में विवाद करते हैं।] विमति में फँसे हुये विचित्र बातें करते हैं—यह अर्थ है। (६) उपमन्त्रण = एकान्त में बात करना। परदारानुपवदते। [दूसरे की स्त्री से एकान्त में बात करता है] उपच्छन्दयति ( = प्रिये ! मुझे चाहो, मैं तुम्हें यह दूँगा, वह दूँगा आदि कहकर अपने उद्देश्य में खींचना चाहता है—) यह अर्थ है।

लोकायते। जानाति वदितुमित्यर्थः। यत्नः = उत्साहः। क्षेत्रे वदते, गेहे वदते। तद्विषयमुत्साहमाविष्करोतीत्यर्थः। विमतिः = नानामतिः। क्षेत्रे विवदन्ते, गेहे विवदन्ते। विमतिपतिता विचित्रं भाषन्त इत्यर्थः। उपमन्त्रणम् = रहस्युपच्छन्दनम्। कुलभार्यामुपवदते। परदारानुवदते। उपच्छन्दयतीत्यर्थः।

एतेष्विति किम्? यत्किञ्चिद्वदति॥

## १९६. व्यक्तवाचां समुच्चारणे॥ ४८॥ (२७२१)

'वदः' इति वर्त्तते। व्यक्तवाचां समुच्चारणं सहोच्चारणम्, तत्र वर्तमानाद्वदतेरात्मनेपदं भवति। ननु 'वद व्यक्तायां वाचि' (धा० पा० १००९) इत्येव पठ्यते, तत्र किं व्यक्तवाचामिति विशेषणेन? प्रसिद्ध्युपसंग्रहार्थमेतत्। व्यक्तवाच इति हि मनुष्याः प्रसिद्धाः, तेषां समुच्चारणे यथा स्यात्। संप्रवदन्ते ब्राह्मणाः। संप्रवदन्ते क्षत्रियाः।

### न्यासः

वदत्यर्थं जानाति, तत्र तेनैव विषयेण परिच्छेद्येन विषयीभवति। **तद्विषयमित्यादिना** यत्र आविष्करणस्य वदत्यर्थस्य हेतुभावेन विशेषणमित्याचष्टे। उत्साहो ह्याविष्क्रियमाण आविष्करणक्रियायाः कर्माख्यं सा[illegible] भवति, साधनञ्च हेतुः; कारकाणां क्रियानिमित्तत्वात्। **विमतिपतिता इत्यादिना** विमतिर्भाषणस्य वद[illegible] हेतुभावेन विशेषणमिति दर्शयति। सत्यां विमतौ विचित्रं नानाप्रकारं भाषन्ते। यदि ह्[illegible] स्यादभिन्नमेव भाषेरन्। **उपच्छन्दयतीति।** 'भद्रे भजस्व मामिदं ते दास्यामि' इत्येवम[illegible] [illegible]र्थ्यते। प्रवर्त्तयतीत्यर्थः॥ ४७।

**व्यक्तवाचां समुच्चारणे प्रसिद्ध्युपसंग्रहार्थमिति।** यदि तदर्थं व्यक्तवाचामिति नो[illegible]

### पदमञ्जरी

इत्यादिना तुमुन्, अत्र वदत्यर्थो ज्ञानस्य विषयः, ज्ञानं विषयि। **तद्विषयमित्यादि।** अत्र यत्नोऽस्याविष्करणरूपस्य वदत्यर्थस्य कर्म। **विमतिपतिता इति** हेतुगर्भविशेषणं प्रयुञ्जानो विमतिर्हेतुत्वेन विशेषणमित्याह। विमतौ हि सत्यां विचित्रभाषणरूपो वदत्यर्थो निवर्तते। **उपच्छन्दयतीति।** 'भद्रे भजस्व माम्.. इदं ते दास्मामि' इति, स्वाभिलषिते प्रवर्तयतीत्यर्थः॥ ४७॥

**व्यक्तवाचां समुच्चारणे॥ मनुष्याः प्रसिद्धा इति।** यद्यपि कुक्कुटादिरुतमपि स्वरूपेण व्यक्तम्—अस्येदं रुतमस्येदमिति। मनुष्यवाक्तु व्यक्ततरा भवति, वर्णात्मकत्वाद्, अर्थावगतिहेतुत्वाच्च, अतस्त एव गृह्यन्ते। शुकशारिकादीनां तु पुरुषप्रयत्नवशेन क्वाचित्कं व्यक्तवाक्त्वम्, न स्वाभाविकमिति न तेषां ग्रहणम्।

### भावबोधिनी

इनमें ही हो—इसका क्या फल है? यत्किञ्चित् वदति। [जो कुछ बोलता है।]॥ ४७॥

'वदः' इसकी अनुवृत्ति होती है। व्यक्तवाणी वालों का समुच्चारण = सहोच्चारण, इस अर्थ में वर्तमान वद धातु से आत्मनेपद होता है।

प्रश्न—'वद व्यक्तायां वाचि' वद धातु व्यक्त वाणी अर्थ में ही पठित है तब यहाँ 'व्यक्त-वाचाम्' इस विशेषण का क्या लाभ? प्रसिद्धि के उपसंग्रह के लिये—यह है। क्योंकि व्यक्तवाक् [स्पष्ट बोलने वाले] मनुष्य ही प्रसिद्ध हैं, उनके सामूहिक उच्चारण में ही हो। [कुक्कुट आदि पशु या पक्षियों के उच्चारण में न हो] उदाहरण—सम्प्रवदन्ते ब्राह्मणाः, सम्प्रवदन्ते क्षत्रियाः [ब्राह्मण एक साथ मिलकर बोलते हैं, क्षत्रिय एक साथ मिलकर बोलते हैं।]

व्यक्तवाचाम् [व्यक्त वाणीवालों का]—यह किसलिये है? सम्प्रवदन्ति कुक्कुटाः [मुर्गे बोलते हैं।] समुच्चारणे—इसका क्या फल है? ब्राह्मणः वदति, क्षत्रियः वदति [ब्राह्मण बोलता है, क्षत्रिय बोलता है।] यहाँ अकेले का

**व्यक्तवाचामिति किम्? ( वरतनु ) संप्रवदन्ति कुक्कुटाः ( म० भा० १.३.४८ ) समुच्चारणे इति किम्? ब्राह्मणो वदति। क्षत्रियो वदति॥**

## १९७. अनोरकर्मकात् ॥ ४९ ॥ (२७२२)

**'वदः' इति 'व्यक्तवाचाम्' इति च वर्त्तते। अनुपूर्वाद् वदतेरकर्मकाद् व्यक्तवाग्विषयादात्मनेपदं भवति। अनुवदते कठः कलापस्य। अनुवदते मौद्गः पैप्पलादस्य। अनुः सादृश्ये। यथा कलापोऽधीयानो वदति तथा कठ इत्यर्थः।**

**अकर्मकादिति किम्? पूर्वमेव यजुरुदितमनुवदति। व्यक्तवाचामित्येव–अनुवदति वीणा॥**

### न्यासः

सम्प्रवदन्ति कुक्कुटाः[1] इत्यत्रापि स्यात्; कुक्कुटा अपि व्यक्तवाच एव। तथा हि—कुक्कुटेनापि लपिते विशेषपरिच्छेदादुच्यते—कुक्कुटा लपन्तीति। वरतन्विति तनूशब्दस्य 'अम्बार्थनद्योर्ह्रस्वः' ह्रस्वः। ह्रस्ववचनसामर्थ्याद् 'ह्रस्वस्य गुणः' इति गुणो न भवति। नृणामिति न कृतं वैचित्र्यार्थम्॥ ४८॥

**अनोरकर्मकात्। अनुवदतीति।** अनुशब्दः पुनरित्यस्यार्थे वर्त्तते। पुनर्वदतीत्यर्थः। यजुषात्र कर्मणा
मिति ...त्वम्॥ ४९॥
ग्रहणं ल...

### पदमञ्जरी

शरीरश्रुत्या नः

**ननु सम्प्रवदन्ति कुक्कुटाः इति।**

भवति; न त्वने: अपनय पादसरोजमङ्कतः, शिथिलय बाहुलतां गलादृताम्।
विशेषः... क्व च वदनेंऽशुकमाकुलीकृतम्, वरतनु संप्रवदन्ति कुक्कुटाः॥

दृ... क्वचित्तु कृत्स्न एव श्लोकः पठ्यते, तत्र वरतनुरिति बहुव्रीहौ यदि ह्रस्वान्तस्तनुशब्दः, ततः 'संबुद्धौ च' इति गुणप्रसङ्गः, दीर्घान्ते तु नदीलक्षणः कप् प्राप्नोति। केचिदाहुः—तनुशब्दः स्त्रीजातौ कविभिः प्रयुज्यते, तस्माद् 'ऊङुतः' इति ऊङि कृते कर्मधारयोऽयमिति॥ ४८॥

**अनोरकर्मकात्॥ व्यक्तवाचामिति वर्त्तत इति।** न तु समुच्चारण इति सर्वानुवृत्तौ वचनमिदमनर्थकं स्यादिति भावः। तद्व्यक्तवाक्सम्बन्धिनो वदेरिति सूत्रार्थमाह—**व्यक्तवाग्विषयादिति। अनुः सादृश्ये इति।** तेन कलापस्येति तुल्यार्थयोगे शेषलक्षणा षष्ठीति भावः। **यथेत्यादि।** वदनमात्रसादृश्ये तात्पर्यमिति क्रमं न विवक्षितमिति भावः। **अनुवदति।** पुनर्वदतीत्यर्थः॥ ४९॥

### भावबोधिनी

उच्चारण होने से आत्मनेपद नहीं होता है।]॥ ४८॥

'वदः' और 'व्यक्तवाचाम्' उन दो की अनुवृत्ति होती है। अकर्मक, व्यक्तवाग्विषयक, अनुपूर्वक वद धातु से आत्मनेपद होता है। उदा०—अनुवदते कठः कपालस्य। अनुवदते मौद्गः पैप्पलादस्य। अनु सादृश्य अर्थ में है। कपाल पढ़ता हुआ जैसे बोलता है उसी प्रकार कठ बोलता है, यह अर्थ है।

'अकर्मकात्' यह किसलिये है? पहले ही कहे हुए यजुर्मन्त्र का अनुवाद करता है, पुनः बोलता है। [यहाँ सकर्मक है।] व्यक्तवाचाम् [स्पष्ट बोलने वालों का]—यह किसलिये है। अनुवदति वीणा। [वीणा व्यक्तवाक् नहीं है।]॥ ४९॥

---

१. अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्।
अरुणकरोदगम एष वर्त्तते वरतनु संप्रवदन्ति कुक्कुटाः॥ इत्येवं कृत्स्नश्लोकः औचित्यविचारचर्चायां दृश्यते।

## १६६८. विभाषा विप्रलापे ॥ ५० ॥ (२७२३)

'वदः' इति वर्त्तते, 'व्यक्तवाचां समुच्चारणे' इति च। विप्रलापात्मके व्यक्तवाचां समुच्चारणे वर्त्तमानाद्वदतेरात्मनेपदं भवति विभाषा। प्राप्तविभाषेयम्। विप्रवदन्ते सांवत्सराः, विप्रवदन्ति सांवत्सराः। विप्रवदन्ते मौहूर्त्ताः, विप्रवदन्ति मौहूर्त्ताः। युगपत्परस्परप्रतिषेधेन विरुद्धं वदन्तीत्यर्थः।

विप्रलाप इति किम्? संप्रवदन्ते ब्राह्मणाः। व्यक्तवाचामित्येव—विप्रवदन्ति शकुनयः। समुच्चारण इत्येव—क्रमेण मौहूर्त्ता मौहूर्त्तेन सह विप्रवदन्ति॥

## १६६९. अवाद् ग्रः ॥ ५१ ॥ (२७२४)

'गॄ निगरणे' (धा० पा० १४१०) इति तुदादौ पठ्यते, तस्येदं ग्रहणम्; न तु 'गॄ शब्दे' (धा० पा० १४९८) इति क्र्यादिपठितस्य। तस्य ह्यवपूर्वस्य प्रयोग एव नास्ति (म० भा० १.३.५१)। 'शेषात् कर्तरि परस्मैपदे (१.३.७८) प्राप्ते; अवपूर्वाद् गिरतेरात्मनेपदं भवति। अवगिरते, अवगिरेते, अवगिरन्ते। अवादिति किम्? गिरति॥

### न्यासः

**विभाषा विप्रलापे॥** विप्रलापात्मके इति। परस्परप्रतिबन्धेन विरुद्धः प्रलापो विप्रलापः, स्वभावः स तथोक्तः। प्राप्तविभाषेयमिति। 'व्यक्तवाचां समुच्चारणे' इत्यस्यानुवृत्तेः॥ ५०॥

**अवाद् ग्रः॥** अवगिरत इति। 'ऋत इद्धातोः' इतीत्त्वम्, रपरत्वञ्च॥ ५१॥ ...घूर्णीयते।

### पदमञ्जरी

**विभाषा विप्रलापे॥** संवत्सरान् वदन्तीति सांवत्सराः=ज्यौतिषिकाः। एवं मौहूर्तिकाः॥ ५०॥

**अवाद् ग्रः॥** 'गिरः' इति पाठे धात्वनुकरणत्वाद् विभक्त्याविर्त्वम्। 'ग्रः' इति तु पाठे रूपमात्रानुकरणं द्रष्टव्यम्। तस्य ह्यवपूर्वस्येति। नियतविषयाण्यपि क्रियाविशेषणानि भवन्ति, यथा—उर्यादयः कृभ्वस्तिभ्योऽन्यविषया न भवन्तीति भावः॥ ५१॥

### भावबोधिनी

'वदः' इसकी और 'व्यक्तवाचां समुच्चारणे' इसकी अनुवृत्ति होती है। व्यक्त वाणी वालों के विप्रलापात्मक [परस्पर विरोधी कथन], समुच्चारण अर्थ में वर्तमान वद धातु से आत्मनेपद होता है। यह प्राप्त-विभाषा है। उदा०—विप्रवदन्ते सांवत्सराः, विप्रवदन्ति सांवत्सराः। [ज्योतिषी लोग परस्पर विरुद्ध बोल रहे हैं।] विप्रवदन्ते मौहूर्ताः [ज्योतिषी लोग एक दूसरे के विपरीत बोलते हैं।] एक साथ आपस में प्रतिषेध के द्वारा विरुद्ध बोलते हैं।

विप्रलापे [परस्पर रोकते हुए विरुद्ध बोलने में]—यह किस लिये है? सम्प्रवदन्ते ब्राह्मणाः। [ब्राह्मण एक साथ बोलते हैं। यहाँ विरोधी कथन नहीं है।] व्यक्त वाणी वालों का ही—[ग्रहण है—] विप्रवदन्ति शकुनयः। [पक्षी व्यक्तवाक् नहीं होते।] समुच्चारण (एक साथ बोलने) में—यही लिया जाता है—ज्योतिषी लोग क्रम से एक दूसरे ज्योतिषी के विरुद्ध बोलते हैं। [यहाँ नहीं होता है।] ॥ ५०॥

तुदादि गण में पठित 'गॄ निगरणे' इसी धातु का ग्रहण है, न कि क्र्यादिगण में पठित 'गॄ शब्दे' इसका। क्योंकि इसका तो अवपूर्वक प्रयोग ही नहीं होता। 'शेषात् कर्तरि०' से परस्मैपद प्राप्त रहने पर, अव पूर्वक गॄ धातु से आत्मनेपद होता है। उदा०—'अवगिरते, अवगिरेते, अवगिरन्ते' [निगलता है यह अर्थ है।] 'अव' से परे—यह किसलिये है? गिरति [केवल में आत्मनेपद नहीं होता है।] ॥ ५१॥

## २००. समः प्रतिज्ञाने ॥ ५२ ॥ (२७२५)

'ग्रः' इति वर्त्तते। संपूर्वाद् गिरतेः प्रतिज्ञाने वर्त्तमानादात्मनेपदं भवति। प्रतिज्ञानम्=अभ्युपगमः। शतं संगिरते, नित्यं शब्दं संगिरते।

प्रतिज्ञाने इति किम् ? संगिरति ग्रासम्।

## २०१. उदश्चरः सकर्मकात् ॥ ५३ ॥ (२७२६)

'शेषात्कर्तरि परस्मैपदे' (१.३.७८) प्राप्ते उत्पूर्वाच्चरतेः सकर्मकक्रियावचनादात्मनेपदं भवति। गेहमुच्चरते, कुटुम्बमुच्चरते, गुरुवचनमुच्चरते। उत्क्रम्य गच्छतीत्यर्थः।

सकर्मकादिति किम् ? वाष्पमुच्चरति ॥

## २०२. समस्तृतीयायुक्तात् ॥ ५४ ॥ (२७२७)

सम्पूर्वाच्चरतेस्तृतीयायुक्तादात्मनेपदं भवति। 'तृतीया' इति तृतीयाविभक्तिर्गृह्यते, तथा चरतेरर्थं-मित... यो योगः। अश्वेन संचरते ॥

### न्यासः

प्रतिज्ञाने ॥५२॥ उदश्चरः सकर्मकात् ॥ गेहमुच्चरत इति। चरिर्गत्यर्थः। गुरुवचनमुच्चरते ...त्मिकायां गतौ वर्त्तमानश्चरतिर्गुरुवचनेन कर्मणा सकर्मकः। वाष्पमुच्चरतीति। उपरिष्टाद् ...त्र किञ्चित् कर्म विवक्षितमित्यकर्मकत्वम् ॥ ५३ ॥

समस्तृतीयायुक्तात् ॥ यद्यत्र तृतीयेति तृतीयार्थो गृह्यते, तदेहापि स्यात्—उभौ लोकौ सञ्चरसि

### पदमञ्जरी

समः प्रतिज्ञाने ॥ प्रतिज्ञानमभ्युपगम इति। केचिदाहुः—"परोपदेशनिरपेक्षमात्मनैव विप्रतिपन्नस्य पक्षस्य परिग्रहोऽभ्युपगमः, परेण प्रार्थितस्यार्थस्य नियमवचनम् 'एतावद्दास्यामि' इति, 'अस्मिन्काले दास्यामि' इत्येवंरूपः प्रतिश्रवः। परेण युक्त्या साधितस्यार्थस्य सम्माननम्—समीचीनमुक्तमत्र भवता-इत्येवं रूपमङ्गीकरण-मिति, प्रतिज्ञासामान्यावान्तरभेदा एते, न तु पर्यायाः" इति। वृत्तिकारस्तु परस्परविषयेऽङ्गीकरणादिव्यवहार-दर्शनात् पर्यायत्वमेव मन्यते ॥ ५२ ॥

उदश्चरः सकर्मकात् ॥ उत्क्रम्येति उल्लङ्घ्येत्यर्थः। उच्चरतीति। उपरिष्टाद् गच्छतीत्यर्थः ॥ ५३ ॥

समस्तृतीयायुक्तात् ॥ विभक्तिर्गृह्यते इति। तत्रैव तृतीयाशब्दस्य मुख्यत्वात्। यद्येवम्, तया सह

### भावबोधिनी

'ग्रः' इसकी अनुवृत्ति होती है। प्रतिज्ञान [स्वीकार करना] अर्थ में वर्तमान, सम्पूर्वक गॄ धातु से आत्मनेपद होता है। प्रतिज्ञान=स्वीकारोक्ति]। उदा०—शतं संगिरते [सौ रुपये स्वीकार करता है।] शब्दं नित्यं संगिरन्ते। [वैयाकरण शब्द को नित्य कहते हैं।]

प्रतिज्ञाने [स्वीकार में]—इसका क्या फल है ? संगिरति ग्रासम् [ग्रास निगलता है यहाँ नहीं होता है।] ॥५२॥

'शेषात् कर्तरि' (पा० सू० १।३।७८) से परस्मैपद प्राप्त रहने पर, सकर्मक क्रियावाचक, उत्पूर्वक चर धातु से आत्मनेपद होता है। उदाहरण—गेहमुच्चरते [घर की बात का उल्लंघन करके चला जाता है।] कुटुम्बमुच्चरते। गुरुवचनमुच्चरते। [इनमें] उल्लंघन करके चला जाता है—यह अर्थ है। सकर्मकात्—यह किस लिये है ? वाष्पमुच्चरति। [वाष्प=भाप ऊपर जाता है। यहाँ कर्म अविवक्षित होने से अकर्मकत्व है] ॥ ५३ ॥

तृतीयान्त पद से युक्त, सम्पूर्वक चर् धातु से आत्मनेपद होता है। 'तृतीया' यहाँ तृतीया विभक्ति ली

तृतीयायुक्तादिति किम् ? 'उभौ लोकौ संचरसि इमं चामुं च देवल।' (म० भा० १.३.५४) यद्यप्यत्र तदर्थयोगः संभवति, तृतीया तु न श्रूयत इति प्रत्युदाहरणं भवति ॥

## २०३. दाणश्च सा चेच्चतुर्थ्यर्थे ॥ ५५॥ ([illegible] २८)

'दाण् दाने' (धा० पा० ९३०) परस्मैपदी। ततः संपूर्वात्तृतीयायुक्तादात्मनेपदं भवति, सा चेत्तृतीया चतुर्थ्यर्थे भवति।

कथं पुनस्तृतीया चतुर्थ्यर्थे स्यात् ? वक्तव्यमेवैतत्—* अशिष्टव्यवहारे तृतीया चतुर्थ्यर्थे भवतीति वक्तव्यम् *। दास्या [मालां] संप्रयच्छते। वृषल्या संप्रयच्छते। (म० भा० १.३.५५ वा० १) कामुकः सन् दास्यै ददातीत्यर्थः।

### न्यासः

इमञ्चामुञ्च देवलेति[1]। अत्रापि तृतीयार्थो गम्यत एव। स तपसा श्रुतेन वा विद्यत एवेत्येतच्चेतसि कृत्वाह—तृतीयेति। तृतीयाविभक्तिगृ ह्यत इति। यद्येवं तया सह धातोः सम्बन्धो नोपपद्यते। न हि तृतीया धातुवाच्येत्याह—तयेत्यादि। अर्थो द्वारं = मुखमुपायो यस्य स तथोक्तः। तृतीयार्थेन धात्वर्थस्य युक्तत्वादौपचारिको धातोस्त[illegible]र्थेन योग इति दर्शयति। यद्यप्यत्र तदर्थेन योगः सम्भवतीति। विना करणेन क्रियानिष्पत्तेरभावात्[illegible] भवति। तृतीया त्वित्यादि। तृतीयायुक्तग्रहणं ह्येवमर्थं क्रियते—श्रूयमाणतृतीयायुक्ताद् यथा स्या[illegible] सम इत्येवं वक्तव्यं स्याद् ? अनुक्तेऽपि सिद्धत्वात् तृतीयाप्रयोगस्य। न हि तेन विना क्रियानि[illegible]र्धीयते। तस्माद् यत्र तृतीया श्रूयते तन्मूलोदाहरणम्, यत्र तु न श्रूयते तत् प्रत्युदाहरणम् ॥ ५४ ॥

दाणश्च सा चेच्चतुर्थ्यर्थे ॥ कथं पुनस्तृतीया चतुर्थ्यर्थे स्यादिति ? न कथञ्चिदित्यर्थः। ता[illegible] शास्त्रस्याभावादिति भावः। वक्तव्यमेवैतदिति। व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—तदेव संप्रदानं यद[illegible]

### पदमञ्जरी

धातोः सम्बन्धो न भवति; न हि तृतीया धातुवाच्या, नापि धातुस्तृतीयान्त इत्यत आह—तयेत्यादि। तृतीयार्थेन धात्वर्थस्य योगादौपचारिको धातोस्तृतीयायोग इत्यर्थः। यद्यप्यत्रेति। न हि चेष्टारूपसञ्चरणमन्तरेण करणं सम्भवति, अतोऽश्रुतेऽपि करणपदे तपसा श्रुतेन वेति गम्यमानत्वात्तदर्थयोगस्य सम्भवः। तृतीया त्विति। एतदर्थमेव हि पूर्वमुक्तम्—विभक्तिर्गृह्यत इति। तृतीयायुक्तादिति वाऽनर्थकं स्यात्। यदि तदर्थयोगः स्यात्, सर्वत्रैवं तदर्थभावादिति भावः ॥ ५४ ॥

दाणश्च सा चेच्चतुर्थ्यर्थे ॥ वक्तव्यमेवैतदिति। सूत्रे चेच्छब्दश्चशब्दश्चार्थे, अनेकार्थत्वान्निपातामिति। केचिद्—दाणस्तृतीयायुक्तादात्मनेपदं भवति, सा च तृतीया चतुर्थ्यर्थे वेदितव्येति व्याचक्षते; एवमपि 'अशिष्ट-

### भावबोधिनी

जाती है। उसके साथ चर् का अर्थ के माध्यम से योग होता है। [अर्थात् चर् धात्वर्थ का योग तृतीयाविभक्त्यन्तपद-बोध्य पदार्थ के साथ रहना चाहिये।] उदा०—अश्वेन सञ्चरते [घोड़े से चलता है।]

तृतीयायुक्ताद् [तृतीयान्त पदार्थ से युक्त]—यह किस लिये है ? 'उभौ लोकौ संचरसि इमं चामुं च देवल।' [हे देवल ! इस लोक और परलोक दोनों में सञ्चरण करते हो।] यहां यद्यपि तृतीयार्थ का योग सम्भव है [क्योंकि करण के विना सञ्चरण सम्भव नहीं है।] किन्तु तृतीया नहीं सुनाई देती है, अतः यह प्रत्युदाहरण बन सकता है ॥५४॥

'दाण् दाने' परस्मैपदी है। सम्पूर्वक, तृतीयायुक्त उस दाण् से आत्मनेपद होता है, यदि वह तृतीया चतुर्थी के अर्थ में हो।

---

1. देवलेतीत्यस्य स्थाने नारदेतीति पाठोऽपि क्वचित्।

**चतुर्थ्यर्थे इति किम् ? पाणिना संप्रयच्छति। समः प्रशब्देन व्यवधाने कथमात्मनेपदं भवति ? 'समः' इति विशेषणे षष्ठी, न पञ्चमी ॥**

## २०४. उपाद्यमः स्वकरणे ॥ [illegible] ॥ (२७२९)

**न्यासः**

साधकतमत्वेन विवक्ष्यते तदा चतुर्थ्यर्थेऽपि तृतीया भवति, विवक्षातः कारकाणि भवन्तीति कृत्वा; न तु स्वभावतः। सा च विवक्षा लौकिकी समाश्रीयते, न तु प्रायोगिकीति। लोके चाशिष्टव्यवहारे एव सा सम्भवति, नान्यत्र। लौकिकविवक्षात्र समाश्रीयत इति अस्यैवार्थस्य द्योतनाय चेच्छब्दः प्रयुक्तः। **दास्या मालां संप्रयच्छत इति।** यो हि धर्मशास्त्रविरुद्धां दासीं कामयितुं तस्यै मालां ददाति तस्यासावशिष्टव्यवहारो भवतीत्यस्त्यत्राशिष्टव्यवहारः। संप्रयच्छत इति पाघ्रादिसूत्रेण दाणो यच्छादेशः। **कथमात्मनेपदं भवतीति।** न कथञ्चिदित्यर्थः। 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति। एवं मन्यते—**सम इति विशेषणे षष्ठीत्यादि।** यदि 'समः' इति पञ्चमी स्यान्न षष्ठी, तदा प्रशब्देन व्यवधानादात्मनेपदं न स्यात्; तस्मान्नेयं पञ्चमी, किं तर्हि? षष्ठी—समो विशेषणस्य सम्बन्धी यो विशेष्यो दाणिति। ततश्च व्यवहितोऽपि विशेषणविशेष्यभावो शब्दश्रुत्या [illegible] व्यवधानेऽपि भवत्यात्मनेपदम् ॥ ५५ ॥

**[illegible]यमः स्वकरणे ॥** यदि स्वकरणमात्र आत्मनेपदं भवति शाटकादिस्वीकारेऽपि स्यादिति चोद्यम- भवति; न त्वने[illegible] **[illegible]णिग्रहणमित्यादि।** एवं मन्यते—प्रतिनियतविषया हि शब्दशक्तयो भवन्ति, यस्मादुपपूर्वो यमि- विशेषः, य[illegible]

दृश्[illegible]

**पदमञ्जरी**

[illegible]व्यवहारे' इति वक्तव्यमेव, अशिष्टानां = सङ्कीर्णाचाराणां यो व्यवहारः = आचारः तस्मिन्नित्यर्थः। **दास्या सम्प्रयच्छत इति।** यो दास्या सह भुञ्जानस्तया दत्तं स्वयं भुङ्क्ते, स्वयं च तस्यै ददाति तद्विषयोऽयं प्रयोग इत्याहुः। **कथमात्मनेपदमिति।** न कथञ्चित्, 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थत्वादिति भावः। **विशेषणषष्ठीति।** एवं च पूर्वसूत्रेऽप्यश्वेन समुदाचरत इत्यादावपि भवितव्यम् ॥ ५५ ॥

**उपाद्यमः स्वकरणे ॥** इह स्वस्य सतो रूपान्तरेण यत्करणं तत्स्वकरणमिति न गृह्यते, किं तर्हि ? यदाऽस्वं स्वं करोति तदा भवितव्यम्, च्विप्रत्ययस्तु विकल्पितत्वान्न भवति। **पाणिग्रहणविशिष्टमिति।** पाणि-

**भावबोधिनी**

चतुर्थी के अर्थ में तृतीया कैसे होती है ? यह कहना ही होगा—'अशिष्टव्यवहार में चतुर्थी के अर्थ में तृतीया होती है, यह कहना चाहिये।' उदा०—दास्या मालां संप्रच्छते। कामुक होता हुआ दासी को माला [आदि सामग्री] देता है। [पत्नी को धनादि देकर लुभाना शास्त्रसम्मत है। परन्तु नौकरानी को कामुक द्वारा दिया जाना शास्त्रवर्जित है। अतः अशिष्ट व्यवहार होने से चतुर्थी के अर्थ में तृतीया होती है। तभी आत्मनेपद होता है।]

चतुर्थी के अर्थ में तृतीया—यह किसलिये है ? पाणिना सम्प्रयच्छति। [हाथ से देता है।] 'सम्' का 'प्र' शब्द से व्यवधान होने पर आत्मनेपद कैसे होता है ? 'समः' यह विशेषण में षष्ठी है [सम् विशेषण का सम्बन्धी विशेष्य जो दाण्—यह स्थिति यहाँ भी है], न कि पञ्चमी विभक्ति है। [अतः अव्यवधान की शंका नहीं करनी चाहिये] ॥५५॥

'शेषात् कर्तरि' ( पा० सू० १।३।७८ ) से परस्मैपद प्राप्त रहने पर, स्वकरण अर्थ में वर्तमान, उपपूर्वक यम् धातु से आत्मनेपद होता। यहाँ पाणिग्रहणविशिष्ट = पाणिग्रहणात्मक स्वकरण लिया जाता है, न कि केवल स्वकरण अपना बनाना। उदा०—भार्यामुपयच्छते। [पत्नी से विवाह करता है।]

शेषात्कर्त्तरि परस्मैपदे (१.३.७८) प्राप्ते उपपूर्वाद् यमः स्वकरणे वर्तमानादात्मनेपदं भवति। पाणिग्रहणविशिष्टमिह स्वकरणं गृह्यते, न स्वकरणमात्रम्। भार्यामुपयच्छते।

स्वकरण इति किम्? देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति ॥

## २०५. ज्ञाश्रुस्मृदृशां सनः ॥ ५७ ॥ (२७३१)

ज्ञा, श्रु, स्मृ, दृश्—इत्येतेषां सन्नन्तानामात्मनेपदं भवति। तत्र जानातेः 'अपह्नवे ज्ञः' (१.३.४४) इति त्रिभिः सूत्रैरात्मनेपदं विहितम्, श्रुदृशोरपि 'समो गम्यृच्छि' (१.३.२९) इत्यत्र विहितम्; तस्मिन्विषये 'पूर्ववत्सनः' (१.३.६२) इत्येव सिद्धमात्मनेपदं ततोऽन्यत्रानेन विधीयते। स्मरतेः पुनरप्राप्त एव विधानम्। धर्मं जिज्ञासते। गुरुं शुश्रूषते। नष्टं सुस्मूर्षते। नृपं दिदृक्षते।

'सनः' इति किम्? जानाति, शृणोति, स्मरति, पश्यति।

**न्यासः**

रात्मनेपदान्त एवंविध एव स्वीकारे वर्त्तते, न तु सर्वस्मिन्। तस्मात् पाणिग्रहणात्मकमेव स्वीकरणंगृह्यते उपयच्छत इति पूर्ववद् यच्छादेशः ॥ ५६ ॥

ज्ञाश्रुस्मृदृशां सनः ॥ त्रिभिः सूत्रैरिति। 'अपह्नवे ज्ञः' इत्यादिभिः। धर्मं जिज्ञासत इ[illegible] बोधने', सन्, द्विर्वचनम्, अभ्यासस्य ह्रस्वत्वम्, 'सन्यतः' इतीत्त्वम्। शुश्रूषत इति। 'श्रु श्रवणे' [illegible] इति सनः कित्त्वम्, 'श्र्युकः क्किति' इतीट्प्रतिषेधः, 'अज्झनगमां सनि' इति दीर्घः। सुस्मू[illegible]र्षते [illegible] आध्याने'; पूर्ववत् कित्त्वाद् 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, रपरत्वम्। दिदृक्षत इति। 'हलन्ताच्च' [illegible] ततश्च व्रश्चादिना षत्वम्, 'षढोः कः सि' इति कत्वम् ॥ ५७ ॥

**पदमञ्जरी**

ग्रहणं नाम कश्चित्कन्यासंस्कारस्तद्विशिष्टमित्यर्थः भाष्ये तु—अस्वस्य सतः स्वत्वापादनमेव स्वकरणमित्युक्तम्। भट्टिकाव्येऽपि तदनुगुणः प्रयोगः—उपायंस्त महास्त्राणि (१५.२१), मामुपायंस्त रामेति (४.२८), नोपायंस्त दशानन (७.१०१) इति। देवदत्तो यज्ञदत्तस्य भार्यामुपयच्छति, यज्ञदत्तसम्बन्धिनीं भार्यां दास्यादिरूपेण स्वीकरोतीत्यर्थः। पाणिग्रहणाभावाद् वृत्तिकारमते युक्तं प्रत्युदाहरणम्, भाष्यकारमते त्वत्रापि भवितव्यम् ॥ ५६ ॥

ज्ञाश्रुस्मृदृशां सनः ॥ श्रुदृशोरपीति। श्रुवः सूत्र एव निर्देशाद्, दृश उपसंख्यानात् ॥ ५७ ॥

**भावबोधिनी**

स्वकरणे—[अपना बनाना]—यह किसलिये है? देवदत्तो यज्ञदत्तस्य भार्याम् उपयच्छति [देवदत्त यज्ञदत्त की भार्या को दास्यादिरूप में स्वीकार करता है यहाँ अपनी भार्या नहीं बनाता है।] ॥ ५६ ॥

ज्ञा, श्रु, स्मृ और दृश्—इन सन्नन्त धातुओं से आत्मनेपद होता है। यहाँ 'ज्ञा' धातु से 'अपह्नवे ज्ञः' (पा० सू० १।३।४४) आदि पूर्वोक्त तीन सूत्रों से आत्मनेपद कहा गया है, श्रु तथा दृश् से भी "समो गमृ०" (पा० सू० १।२।३) में कहा गया है, इनके विषय में 'पूर्ववत्सनः' (पा० सू० १।३।६२) से आत्मनेपद सिद्ध ही है, इससे भिन्न में यह सूत्र आत्मनेपद का विधान करता है। किन्तु, स्मृ का तो अप्राप्त का ही विधान किया जा रहा है। उदा०—धर्मं जिज्ञासते [धर्म जानना चाहता है]; गुरुं शुश्रूषते [गुरुवचन सुनना चाहता।]; नष्टं सुस्मूर्षते [नष्ट हुये को, भूले हुये को याद करना चाहता है]; नृपं दिदृक्षते [राजा को देखना चाहता है।]

सनः [सन्नन्त का—] यह किसलिये है? जानाति, शृणोति, स्मरति, पश्यति। [यहाँ मूल धातु में नहीं होता है।] ॥ ५७ ॥

**२०६. नानोर्ज्ञः ॥ ५८ ॥ (२७३२)**

**पूर्वेण योगेन प्राप्तमात्मनेपदं प्रतिषिध्यते। अनुपूर्वाज्जानातेः सन्नन्तादात्मनेपदं न भवति। तथा च सति सकर्मकस्यैवायं प्रतिषेधः संपद्यते। पुत्रमनुजिज्ञासति।**

**अनोरिति किम्? धर्मं जिज्ञासते ॥**

**२०७. प्रत्याङ्भ्यां श्रुवः ॥ ५९ ॥ (२७३३)**

**'प्रति, आङ्' इत्येवम्पूर्वाच्छृणोतेः सन्नन्तादात्मनेपदं न भवति। प्रतिशुश्रूषति। आशुश्रूषति। उपसर्गग्रहणं चेदम्, तस्मादिह प्रतिषेधो न भवति—देवदत्तं प्रति शुश्रूषते ॥**

**न्यासः**

**नानोर्ज्ञः ॥ पूर्वेणेति।** अनन्तरसूत्रप्राप्तं यत् तत् प्रतिषिध्यते—'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति कृत्वा। **तथा चेत्यादि।** यस्मादनन्तरसूत्रेणात्मनेपदं यत् प्राप्नोति, तस्यायं प्रतिषेधः सम्पद्यते। एवं सति सकर्मकस्यैवायं प्रतिषेधः; अनन्तरसूत्रेण सकर्मकादात्मनेपदविधानात्। अकर्मकाद्धि 'अकर्मकाच्च' मि[illegible]नेन प्रागेवात्मनेपदं विहितमित्यनन्तरातीतो योगः सकर्मकार्थो विज्ञायते; यतश्चैवम्, तेनाकर्मकात् 'पूर्ववत् ग्रहणं [illegible]त्यात्मनेपदं भवत्येव—औषधस्यानुजिज्ञासत इति ॥ ५८ ॥

शरीरश्रुत्या [illegible]ाङ्भ्यां श्रुवः। **उपसर्गग्रहणञ्चेदमिति।** कथं श्रुव इति? विशेषणविशेष्यभावसम्बन्धे षष्ठी। [illegible] भवति—श्रृणोतेर्यौ विशेषणभूतौ प्रत्याङौ तत्पूर्वाच्छ्रुवः सम्बन्धात् सन्नन्तादात्मनेपदं न भवति; न त्वने[illegible]वार्थद्वारेण श्रृणोतेर्विशेषणभूताविति सामर्थ्यादुपसर्गयोर्ग्रहणम्। **देवदत्तं प्रति शुश्रूषत इति।** विशेषः, य[illegible]क्षणेत्थम्भूताख्यान' इत्यादिना लक्षणे कर्मप्रवचनीयसंज्ञा, तेन प्रतिना देवदत्त एव सम्बध्यते; न दृशे[illegible]व[illegible] इति ॥ ५९ ॥

**पदमञ्जरी**

**नानोर्ज्ञः ॥ पूर्वेणेति।** अनन्तरसूत्रेण यत्प्राप्तं तत्प्रतिषिध्यते, कुत एतत्? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति। **तथा चेति।** अनन्तरस्य प्रतिषेध इत्युक्तम्, एवं सति सकर्मकस्यैवायं प्रतिषेधः सम्पद्यते, अनन्तरयोगस्य सकर्मकविषयत्वाद्, अकर्मकाविषयत्वाद् 'अकर्मकाच्च' इति प्रागेव विहितत्वात्। तेनाकर्मकात् 'पूर्ववत्सनः' इत्यात्मनेपदं भवत्येव—औषधस्यानुजिज्ञासत इति। औषधेन प्रवर्त्तितुमिच्छतीत्यर्थः ॥ ५८ ॥

**प्रत्याङ्भ्यां श्रुवः ॥ उपसर्गग्रहणं चेदमिति।** परस्परसाहचर्यात्। **देवदत्तं प्रतीति।** 'लक्षणेत्थंभूत' इत्यादिना प्रति कर्मप्रवचनीयः, नोपसर्गः ॥ ५९ ॥

**भावबोधिनी**

पूर्व सूत्र से प्राप्त आत्मनेपद का प्रतिषेध होता है। अनुपूर्वक, सन्नन्त ज्ञा धातु से आत्मनेपद नहीं होता है और इस प्रकार सकर्मक का ही यह प्रतिषेध हो जाता है। उदा०—पुत्रम् अनुजिज्ञासति [पुत्र को अनुमति देना चाहता है।]

अनोः [अनु से परे ज्ञा का]—यह किसलिये है? धर्मं जिज्ञासते [धर्म जानने की इच्छा करता है। पूर्व सूत्र से आत्मनेपद होता है] ॥ ५८ ॥

प्रति एवम् आङ् पूर्वक, सन्नन्त श्रु धातु से आत्मनेपद नहीं होता है। उदा०—प्रतिशुश्रूषति। आशुश्रूषति। [बदले में सुनना चाहता है। अच्छी प्रकार सुनना चाहता है।] यहाँ प्रति उपसर्ग का ग्रहण है; अतः इस [कर्मप्रवचनीय के योग] में 'निषेध नहीं' होता है—देवदत्तं प्रति शुश्रूषते। [यहाँ "लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्यनवः" (पा० सू० १।२।३) से प्रति की कर्मप्रवचनीयता उपसर्गत्व नहीं है।] ॥ ५९ ॥

## २०८. शदेः शितः ॥ ६० ॥ (२३६२)

**'शद्लृ शातने'** (धा० पा० १८५५) **परस्मैपदी, तस्मादात्मनेपदं विधीयते। शदियंः शित्, शिद्भावी शितो वा सम्बन्धी तस्मादात्मनेपदं भवति। शीयते, शीयेते, शीयन्ते।**

**शित इति किम्? अशत्स्यत्। शत्स्यति। शिशत्सति।**

## २०९. म्रियतेर्लुङ्लिङोश्च ॥ ६१ ॥ (२५३८)

**न्यासः**

**शदेः शितः ॥** यदि 'शदेः शितः' इति व्यधिकरणे एते पञ्चम्यावित्यभ्युपगम्यैवं व्याख्यायते—शदेः परो यः शित् तस्मादात्मनेपदं भवतीति, तदा सार्वधातुकाश्रयत्वाच्छितः प्रागेव तदुत्पत्तेर्धातोः शेषत्वादस्य लावस्थायां परस्मैपदं स्यात्, ततस्तन्निमित्तकः शिद्विकरणः। तथा च विहितमिदानीं परस्मैपदमशक्यं निवर्त्तयितुमित्यात्मनेपदाभावः स्यादित्यालोच्यान्यथा व्याचिख्यासुराह—**शदियंः शिदिति।** एतेन 'शदेः शितः' इति समानाधिकरणे एते पञ्चम्याविति दर्शयति। कथं पुनः शदिः शिद्भवति, यावता विकरणस्य शकार इत्संज्ञक इत्संज्ञासम्बन्धी, न तु शदेः? इत्यत आह—**शिद्भावीति।** भाविशब्दोऽयम् 'भविष्यति गम्यादयः' इति भविष्यत्कालविषयः। शिद्भावीति यतः शिद्भविष्यति स शिद्भावी। एतदुक्तं भवति—शिन्निमित्तत्वादुपचारेण [illegible] शिदित्युक्तमिति। भवति हि कारणे कार्योपचारात् तथा व्यपदेशः, यथा—नड्वलोदकं पादरोग [illegible] **वा सम्बन्धीति।** एतेन 'शितः' इत्यस्य षष्ठ्यन्ततां दर्शयति। कः शदेः शित्सम्बन्धी? यस्[illegible] प्रागपि शितः शदेस्तत्प्रकृतित्वमस्त्येवेति शित्प्रकृतेः शदेरात्मनेपदं भवति। **शीयते इति।** [illegible]धीयते। शीयादेशः ॥ ६० ॥

**म्रियतेर्लुङ्लिङोश्च ॥ नियमार्थमिदं वचनमिति—**म्रियतेर्लुङ्लिङोः शित एव यथा स्यात्। [illegible]

**पदमञ्जरी**

**शदेः शितः ॥** यद्यत्र शदेः परो यः शित्, तत आत्मनेपदं भवतीत्येवं व्यधिकरणे पञ्चम्यावाश्रित्य व्याख्यायेत, ततोऽपि विकरणे सत्यनेन विधिना भवितव्यम्। सार्वधातुके च परतो विकरणो विधीयते, ततश्च प्रागेवास्माद्विधेः सार्वधातुकं भवच्छेषत्वात्परस्मैपदं स्यात्, तस्मिंश्च सति तन्निमित्ते शिति विकरणे कृते परस्मैपदस्य निवृत्तिर्न सिद्ध्येत्। न हि निर्वृत्तस्य निर्वृत्तिर्वचनशतेनापि शक्यते कर्तुमिति—इमं व्यधिकरणपक्षे दोषं दृष्ट्वा समानाधिकरण्ये पञ्चम्याविति दर्शयन्नाह—**शदियंः शिदिति।** कथं पुनः शदिः शिद्भवति, विकरणे हि शकार इद् भवति, तत्राह—**शिद्भावीति।** शिद्भावी यस्मात् स तथोक्तः। शिद्भावित्वाद् उपचारेण शदिरेव शिदित्युक्तमित्यर्थः। **शितो वा सम्बन्धीति।** 'शितः इत्यस्य षष्ठ्यन्ततां दर्शयति। कश्च शदिः शितः सम्बन्धी? यस्तस्य प्रकृतिः। प्रागेव च शिदुत्पत्तियोग्यतया तत्प्रकृतित्वमस्त्येव। **शीयत इति।** पाघ्रादिसूत्रेण शीयादेशः ॥ ६० ॥

**म्रियतेर्लुङ्लिङोश्च ॥** 'लुङ्लिङोः' इति स्थानषष्ठीयम्, विषयसप्तमी वा। **नियमार्थमिति।** यदि

**भावबोधिनी**

'शद्लृ शातने' परस्मैपदी है। उससे आत्मनेपद का विधान होता है। शित् जो शद्, शित् होने वाला या शित् का सम्बन्धी जो शद् धातु उससे आत्मनेपद होता है। उदा०—शीयते, शीयेते, शीयन्ते। [शद् से जहाँ शप् होता है वहाँ शित् होने से यह आत्मनेपद और "पाघ्राध्मा०" (पा० सू० ७।३।७८) से शीय आदेश होता है।]

शितः [ शकारेत्संज्ञक ]—यह किसलिये है? अशत्स्यत्, शत्स्यति, शिशत्सति। [इनमें शप् सम्भव न होने से शित् नहीं है। अतः आत्मनेपद नहीं होता है।] ॥ ६० ॥

'मृङ् प्राणत्यागे' ( मरना अर्थ में मृङ् धातु है ) ङित् होने से ['अनुदात्तङित आत्मनेपदम्' ( पा० सू०

'मृङ् प्राणत्यागे', (धा० पा० १४०४) ङित्त्वादात्मनेपदमत्र सिद्धमेवेति नियमार्थमिदं वचनम्—म्रियतेर्लुङ्लिङोः शितश्चात्मनेपदं भवति, अन्यत्र न भवति। अमृत। मृषीष्ट। शितः खल्वपि—म्रियते, म्रियेते, म्रियन्ते।

नियमः किमर्थः ? मरिष्यति। अमरिष्यत् ॥

## २१०. पूर्ववत् सनः ॥ ६२ ॥ (२७३४)

सनः पूर्वो यो धातुः आत्मनेपदी तद्वत्सन्नन्तादात्मनेपदं भवति। येन निमित्तेन पूर्वस्मादात्मनेपदं विधीयते तेनैव सन्नन्तादपि भवति। 'अनुदात्तङित आत्मनेपदम्' (१.३.१२) आस्ते, शेते। सन्नन्तादपि तदेव

### न्यासः

ङिद्ग्रहणं किमर्थम् ? यावतान्यत्रात्मनेपदेन न भवितव्यमिति ? उच्यते; स्वरार्थमुपदिश्यते—मा हि मृतेति लुङि 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकस्य' अनुदात्तत्वे कृते धातोरन्तोदात्तत्वं भवति। 'तिङ्ङतिङः' इति निघातोऽत्र 'हि च' इति प्रतिषिध्यते, अडागमोऽपि 'न माङ्योगे' इति। अमृतेति। 'ह्रस्वादङ्गात्' इति सिचो एवं [illegible]पः। मृषीष्टेति। आशिषि लिङ्, तस्य 'लिङाशिषि' इत्यार्द्धधातुकत्वाद्विकरणाभावः, 'सुट् तिथोः' इति सुट्, [illegible]न [illegible]लोपः। म्रियत इति। तुदादित्वाच्छः, 'रिङ् शयग्लिङ्क्षु' इति रिङादेशः, 'अचि श्नुधातु' इत्यादिनेयङ्। [illegible]। 'ऋद्धनोः स्ये' इतीट् ॥ ६१ ॥

[illegible]त् सनः॥ पूर्वादिति। 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिः। पूर्वशब्दः सम्बन्धिशब्दत्वाद-भवति; न त्वने[illegible]चावधिः श्रुतत्वात् सन्नेव विज्ञायत इत्याह—सनः पूर्वो यो धातुरिति। यद्येवम्, अवधिभावो-विशेषः, य[illegible]हणस्योपयुक्तत्वात् सन्नन्तादात्मनेपदं भवतीति, न तत्रैतल्लभ्यते; कुतस्तर्हि स्यात् ? धातुमात्रात्, [illegible]त; एवं ह्यात्मनेपदं परस्मैपदानुक्रमणमनर्थकं स्यात्। अथ प्रत्ययान्तात् स्यात् ? एवमपि सन्ग्रहण-[illegible]र्थकं स्यात्, पूर्ववत् प्रत्ययादिति वाच्यं स्यात्। तस्मात् प्रत्यासन्नं सनं त्यक्त्वा न युक्तान्यस्याश्रुतस्य परिकल्पनेति सन्नन्तादेव भवतीति विज्ञायते। येनेत्यादिना वत्यर्थमाचष्टे। तदेव निमित्तमिति। अनुदात्तेत्त्वं

### पदमञ्जरी

नियमः क्रियते, ङित्करणं किमर्थम्, यावताऽप्राप्ते विधिरेवास्तु ? इह मा हि मृतेति लुङि 'तास्यनुदात्तेत्' इति ङिल्लक्षणः सार्वधातुकनिघातो यथा स्यात्। तिङ्निघातोऽत्र 'हि च' इति प्रतिषिद्धः ॥ ६१ ॥

पूर्ववत्सनः॥ पूर्ववदिति। 'तेन तुल्यम्' इत्यादिना तृतीयान्ताद्वतिः, न पञ्चम्यन्तात्; लक्षणा-भावात्। यथा च ब्राह्मणेन तुल्यं वैश्यादधीत इत्युक्ते ब्राह्मणादिवद् वैश्यादधीते इति पञ्चम्यर्थो गम्यते, तथेहापि पूर्वस्मादिव सनन्तादप्यात्मनेपदमित्यर्थो लभ्यते। 'तुल्यार्थैः' इति हि तृतीया सर्वविभक्त्यर्थानन्तर्भा-वयति। यदि सनः पूर्वो यो धातुरिति। एतेन 'सनः' इति पूर्वस्यावधिनिर्देशः, न त्वात्मनेपदापेक्षया परपञ्चमीति दर्शयति।

### भावबोधिनी

१।२।३ ) से आत्मनेपद सिद्ध ही है इसलिये यह सूत्र नियम करने के लिये है—'लुङ्, लिङ्, तथा शित् विषय में ही मृङ् धातु से आत्मनेपद होता है, अन्यत्र नहीं होता है।' उदा०—अमृत [ लुङ् ] मृषीष्ट [ आशीर्लिङ् ] शित् से भी म्रियते, म्रियेते, म्रियन्ते।

नियम किसलिये है ? मरिष्यति। अमरिष्यत्। [यहाँ नहीं होता है।] ॥ ६१ ॥

सन् से पहले जो धातु आत्मनेपदी रहती है उसी प्रकार सन्नन्त से आत्मनेपद होता है। जिस निमित्त को मानकर पहले धातु से आत्मनेपद का विधान किया जाता है, उसी निमित्त को मानकर सन्नन्त से भी होता है। 'अनुदात्तङित आत्मनेपदम्' ( पा० सू० १।२।३ )—आस्ते ( अनुदात्तेत् ), शेते ( ङित् )। सन्नन्त से भी वही

**निमित्तम्—आसिसिषते, शिशयिषते** (म० भा० १.३ ६२)। **'नेर्विशः'**(१.३.१७)।**–निविशते, निविविक्षते। 'आङ उद्गमने'** (१.३.४०)**—आक्रमते, आचिक्रंसते।**

**इह न भवति—शिशत्सति। मुमूर्षति। न हि शदिम्रियतिमात्रमात्मनेपदनिमित्तम्। किं तर्हि? शिदाद्यपि, तच्चेह नास्ति।**

**न्यासः**

ङित्वञ्च धात्वन्तरावस्थायामपि सन्नन्ताद् वचनसामर्थ्यान्निमित्तं भवति। **आसिसिषत इति।** इटि कृते 'अजादेर्द्वितीयस्य' इति सिशब्दस्य द्विर्वचनम्। **निविविक्षत इति।** 'विश प्रवेशने', पूर्ववत् कित्त्वषत्वकत्वानि। **आचिक्रंसत इति।** आत्मनेपदनिमित्तत्वात् 'स्नुक्रमोरनात्मनेपदनिमित्ते' इतीण् न भवति।

**शिशत्सति, मुमूर्षतीति।** अत्र सनो यः पूर्वो भागः, तस्यात्मनेपदनिमित्तत्वमस्ति; शीयते, म्रियत इत्यात्मनेपददर्शनात्। तत आत्मनेपदेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**इह न भवतीत्यादि।** किं कारणमित्याह—**न हीत्यादि।** किं तर्हि? **शिदाद्यपीति।** शिच्छब्देनात्र शिद्भाविवत्वं शित्सम्बन्धित्वञ्चोक्तम्। आदिशब्देन लुङ्लिङोर्ग्रहणम्, तच्चेह नास्तीति न ह्यत्र सनः पूर्वभागस्य शिद्भावित्वं शित्सम्बन्धित्वं वास्ति; शित्प्रत्ययस्यास्मिन् विषयेऽत्यन्तासम्भवात्, नापि म्रियतेः परौ लुङ्लिङौ स्तः; तस्मान्नेह शदिम्रियत्योरात्मनेपदनिमित्तत्वमस्तीति न भवत्यात्मनेपदम्।

इह तर्हि कस्मान्न भवति—अनुचिकीर्षति, पराचिकीर्षतीति? करोतेर्हि गन्धनादिष्व[illegible] विहितम्, अतस्तद्विवक्षायां सन्नन्तादपि तेन भवितव्यमित्याह—**यस्य चेत्यादि।** गन्धनादिष्वर्थेषु [illegible] वस्थायाम् 'अनुपराभ्यां कृञः' इत्यनेन परस्मैपदविधानात् करोतेरात्मनेपदाभावः क्रियते। तस्माद्[illegible] दप्यात्मनेपदनिमित्ताभावान्न भवति।

**पदमञ्जरी**

**यद्येवम्,** सनन्तादात्मनेपदमिति न लभ्येत, 'सनः' इत्यस्य सकृच्छ्रुतस्यावधिनिर्देशेनोपक्षीणत्वाद्, अत आह—**तद्वत्सनन्तादपीति।** अवधित्वेनापि तावत्सनः श्रुतत्वात् प्रत्यासत्त्या तदन्तादेव विधिर्विज्ञायत इति भावः। अथैवं कस्मान्न विज्ञायते सनन्तादात्मनेपदं भवति, पूर्ववदिति श्रौतोऽन्वयः, तत्र कुतः पूर्ववदित्यपेक्षायां सन्निहितत्वात्सन एव पूर्ववदिति विज्ञास्यत इति? एवं मन्यते—एवं विज्ञायमानेऽयमेव योगः पूर्वस्यावधिः सम्भाव्येत, यथा—पूर्वत्रासिद्धम्' इत्यत्र तत एव योगात् पूर्वत्रेति। ततश्चायमर्थः स्याद्—'अनुदात्तङितः' इत्यारभ्येतः पूर्वं ये धातवो निर्दिष्टास्तेभ्यः सनन्तेभ्यस्तद्वदेवात्मनेपदं भवतीति, ततश्चोत्तरो विधिः सनन्तान्न स्यात्—'भुजोऽनवने', बुभुक्षत इति, तस्मात् सनः पूर्ववदित्येव श्रौतोऽन्वय एष्टव्य इति। यद्ययं कार्यातिदेशः शास्त्रातिदेशो वा विज्ञायेत, तदा सम्प्रकृतौ प्रयोगान्तरे दृष्टमित्येव निमित्तनिरपेक्षं कार्यं शास्त्रं वातिदिश्यमानमिहाप्यतिदिश्येत–शिशत्सति, मुमूर्षति; शीयते, म्रियते इत्यत्र दृष्टत्वादिति मतेऽनयोः पक्षयोर्दोषं दृष्ट्वा निमित्तातिदेशमाश्रित्याह—**येन निमित्तेनेति।** निमित्तस्य तुल्यत्वात्तद्द्वारकं यदात्मनेपदविधेस्तुल्यत्वं तदाश्रीयते इत्यर्थः।

**भावबोधिनी**

( अनुदात्तेत्त्व और ङित्त्व ) निमित्त होता है—(१) आसिसिषते, (२) शिशयिषते। 'नेर्विशः' ( पा० सू० १।२।३ ) निविशते, (३) निविविक्षते। आङ् उद्गमने। आक्रमते, (४) आचिक्रंसते। [(१) बैठना चाहता है। (२) सोना चाहता है, (३) प्रवेश करना चाहता है। (४) आक्रमण करना चाहता है।]

यहाँ [आत्मनेपद] नहीं होता है—शिशत्सति, मुमूर्षति। क्योंकि शद या म्रि धातु ही आत्मनेपद की निमित्त नहीं है; तो फिर क्या [निमित्त] है? शित् आदि ['शदेः शितः' ( पा० सू० १।३।६० ) तथा 'म्रियते र्लुङ्लिङोश्च' ( पा० सू० १।३।६१ ) सूत्र से प्रतिपादित भी निमित्त है, और वह यहाँ नहीं है।

**यस्य च पूर्वत्रैव निमित्तभावः प्रतिषिध्यते, तत्सन्नन्तेऽप्यनिमित्तम्—अनुचिकीर्षति । पराचिकीर्षति ।**

**न्यासः**

अथ जुगुप्सते, मीमांसत इत्यत्र कथमात्मनेपदम्, यावता 'पूर्ववत्सनः' इत्युच्यते, न च गुपादिषु सनः प्रागेवात्मनेपदं भवतीति; अतः पूर्ववदित्यतिदेशाभावान्न भवितव्यमात्मनेपदेनेत्यत आह—**इहेत्यादि । जुगुप्सत इति ।** 'गुप्तिज्किद्भ्यः सन्' इति सन् । **मीमांसत इति ।** 'मानवध' इत्यादिना सन्, अभ्यासस्य 'सन्यतः' इतीत्त्वे दीर्घः । कथं पुनरिह 'अनुदात्तङित आत्मनेपदम्', यावता गुपादाववयवेऽनुदात्तेत्त्वं लिङ्गम्, न जुगुप्सादौ समुदाय इत्यत आह—**अवयवे कृतमित्यादि ।** यथा गोः कर्णादाववयवे कृतं लिङ्गं समुदायस्य विशेषक भवति, तथा गुपादाववयवे कृतमनुदात्तेत्त्वं समुदायस्य जुगुप्स इत्येवमादेर्विशेषकं भवति । यद्येवम्, गोपायति, तेजयति सङ्केतयतीत्येवमादावपि प्राप्नोति, सत्यम्; स्यादेतत्—अवयवे कृतं लिङ्गं तस्य समुदायस्य गोर्विशेषकं भवति, यं समुदायं सोऽवयवो न व्यभिचरति; सनन्तं पुनर्न व्यभिचरति; णिजन्तन्तु व्यभिचरतीत्य-तोऽत्रात्मनेपदेन न भावितव्यम्; वार्त्तमेतत् सन्नन्तमपि व्यभिचरतीति विनापि तेन गोपयतीत्यादौ सम्भवात् ।

**पदमञ्जरी**

**पूर्वमिति ।** सनुत्पत्तेः प्राक् प्रयोगान्तर इत्यर्थः । **पूर्वस्मादिति** युक्तः पाठः, तथा च सनन्तादपीति सङ्गच्छते । [illegible]पि प्रकृतिगतं ङित्त्वादिकं सनन्ते धातौ वचनशतेनापि प्रापयितुमशक्यम्—शिशयिषति; तथापि प्रकृतिगतमेव [illegible] व्यवधानेऽपि तदन्तादात्मनेपदस्य निमित्तं भवतीत्यतिदेशार्थः, तावता च निमित्तातिदेशवाचोयुक्तिः । [illegible]ति । इटि कृते 'अजादेर्द्वितीयस्य' इति सिशब्दस्य द्विर्वचनम् । **निविविक्षत इति ।** 'हलन्ताच्च' [illegible]त्वम्, व्रश्चादिषत्वम्, 'षढोः कः सि' । **आचिक्रंसत इति ।** आङ आत्मनेपदनिमित्तत्वात् भवति; न त्वने[illegible] नैव भवति ।

विशेषः, य[illegible]मित्तानिदेशाश्रयणस्य फलमाह—**इहेति ।** कारणमाह—**न हीति । शिदाद्यपीति ।** शिङ्क्षावित्वादि-दृ[illegible]त्यर्थः । आदिशब्देन लुङ्लिङोर्ग्रहणम्, तच्चेह नास्ति । कृते सनि तदन्तमेव शिङ्क्षावि, न शदिम्रियति-[illegible]याम् । शिशयिषत इत्यादौ तु कृतेऽपि सनि तदानीमपि ङित्त्वादिकं प्रकृतिगतं विद्यत इति भावः ।

यदि तर्हि निमित्तातिदेशः, अनुचिकीर्षतीत्यत्रापि प्रसङ्गः; गन्धनादेरर्थस्य ङित्त्वस्य चात्मनेपद-निमित्तस्य सन्यपि परस्मैपदे निमित्तत्वात् । कार्यातिदेशे तु न दोषः 'अनुपराभ्यां कृञः' इति परस्मैपदेनापवादे-नात्मनेपदस्य बाधितत्वादत आह—**यस्य चेति ।** न योग्यतामात्रेण निमित्तत्वम्, किं तर्हि ? कुर्वद्रूपस्येति स्नुक्रमोरित्यत्र वक्ष्यत इति भावः । यदि कुर्वद्रूपं निमित्तम्, जुगुप्सत इत्यादौ कथम्, नह्यत्र प्रकृतिगतमनुदात्तेत्त्वं तत्रात्मनेपदं कदाचिदपि करोति नित्यसन्नन्तत्वाद्[1] गुपादीनामत आह—**इहेत्यादि ।** न वात्रानेनात्मनेपदम्, किं तर्हि ? 'अनुदात्तङितः' इत्यनेनेत्यर्थः । कथं पुनः समुदायस्य जुगुप्सादेरनुदात्तेत्त्वमत आह—**अवयव इति ।** अवयवे ह्यचरितार्थं लिङ्गं सामर्थ्यात्समुदायस्य विशेषकं भवति । यद्येवम्, गोपायति तेजयतीत्यादावपि प्रसङ्गः । अथ यं समुदायं योऽवयवो न व्यभिचरति, तत्र कृतं लिङ्गं तस्य विशेषकं भवति; णिजन्तं च व्यभिचरति. विनापि तेन जुगुप्सत इति गुपेः प्रयोगादित्युच्येत । यद्येवम्, सनन्तादपि न स्याद्, विनापि तेन गोपायतीत्यत्र गुपेः प्रयोगात् । वक्तव्यो वा विशेषः, अयमुच्यते–'गुप गोपने' इत्यस्य सन्विधौ ग्रहणम्, तस्माच्च

**भावबोधिनी**

और जिसका पहले ही निमित्तभाव प्रतिषिद्ध हो जाता है, सन्नन्त में भी वह निमित्त नहीं रहता है; जैसे—अनुचिकीर्षति, पराचिकीर्षति । ['अनुपराभ्यां कृञः' ( पा० सू० १।२।३ ) से आत्मनेपद का प्रतिषेध होकर केवल परस्मैपद का विधान होता है । अतः सन्नन्त से भी आत्मनेपद निषिद्ध हो जाता है ।]

---

१. यत्तु—नित्यसन्नन्तत्वादिति श्रीवत्साङ्काचार्योत्प्रेक्षितं तु गौरवग्रस्तमिति, तन्न, गुपादीनां प्रकृतित्वेन नित्यसन् प्रत्ययान्ततया तदन्तोल्लेखनस्यैवौचित्यात्, प्रत्ययान्तस्यैवात्मनेपदविधाने निमित्तत्वाच्च, तदन्तविधिकल्पनायां गौरवस्य तुल्यत्वाच्च ।

**इह जुगुप्सते, मीमांसते इति ? 'अनुदात्तेतः' (१.३.१२) इत्येव सिद्धमात्मनेपदम् अवयवे कृतं लिङ्गं समुदायस्य विशेषकं भवति (म० भा० १.३.६२,पृ० १७५) इति ॥**

## २११. आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य ॥ ६३ ॥ (२२४०)

**अकर्त्रभिप्रायार्थोऽयमारम्भः । आम् प्रत्ययो यस्मात् सोऽयमाम्प्रत्ययः । आम्प्रत्ययस्येव धातोः कृञोऽनुप्रयोगस्यात्मनेपदं भवति । ईक्षाञ्चक्रे, ईहाञ्चक्रे [उहाञ्चक्रे] । यदि विध्यर्थमेतत्, तर्हि उदुब्जाञ्चकार,**

### न्यासः

तस्मात् समुदायं यं गुपादिर्न व्यभिचरति, तस्यासम्भवात् सर्वस्य गुपादाववयवे कृतमनुदात्तत्वं लिङ्गं समुदायस्य विशेषकं भविष्यति । ततश्च गोपायतिप्रभृतिभ्योऽप्यात्मनेपदं प्राप्नोतीत्येव । एवं तर्हि 'निगरण-चलनार्थेभ्यश्च' इत्यत्र चकारोऽनुक्तसमुच्चयार्थः क्रियते । तेन गुपादिभ्यो ण्यन्तेभ्यः परस्मैपदमात्मनेपदापवादो भविष्यति ॥ ६२ ॥

**आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥ आम्प्रत्ययवदिति** 'तत्र तस्येव' इति षष्ठीसमर्थाद् वतिः । **'कृञोऽनुप्रयोगस्य' इति** समानाधिकरणे षष्ठ्यौ । **ईक्षाञ्चक्रे इत्यादि** । 'ईक्ष दर्शने', 'ईह चेष्टायाम्', 'ऊह वितर्के, लिट् 'इजादेः' इत्यादिनाम्, 'आमः' इति लेर्लुक्, प्रातिपदिकत्वात् सुप् प्राप्तः, सुः, स्वरादित्वादव्ययत्वात् सुः 'कृञ्च' इत्यादिना कृञो लिट्परस्यानुप्रयोगः । **अकर्त्रभिप्रायार्थोऽयमारम्भ इति** ब्रुवता विध्यर्थे भवति । तत्रास्मिन् विध्यर्थे यो दोषस्तमुद्भावयितुमाह—**यदीत्यादि । उदुब्जाञ्चकारेति ।** उत्पूर्वाल् लिट्, पूर्ववदाम् । 'परस्मैपदानाम्' इत्यादिना तिपो णल् । **उदुम्भाञ्चकारेति ।** 'उ [illegible] धीयते ।

### पदमञ्जरी

नित्यं सनेव भवति, नापरः प्रत्ययः । गोपयतीत्यादिकस्तु प्रयोगः 'गुपू रक्षणे' इत्यस्य, स च [illegible] अवश्यञ्चैतदेवं विज्ञेयम्–अन्य एव सन्प्रकृतिः, तस्माच्च सनेव भवतीति; अन्यथा निन्दाया अन्यत्र यथा [illegible] भवति तथा लङादिरपि स्यात् । एवं तिजिप्रभृतयोऽपि, क्षमाद्यर्थे यत्र सन्निष्यते तत्रानुदात्तेतो नित्यसनन्ताश्च; क्षमादिभ्योऽन्यत्र तु यत्र णिजिष्यते तत्राननुबन्धका एव चुरादौ पठितव्याः ॥ ६२ ॥

**आम्प्रत्ययवत् कृञोऽनुप्रयोगस्य ॥** नन्वामन्तस्याधातुत्वाददृष्टमात्मनेपदम्, तत्कथं कृञोऽतिदिश्यते ? स्यादियमनुपपत्तिः; यदि प्रत्ययग्रहणं न क्रियते, कृतेऽपि वा तस्मिन् प्रत्ययग्रहणे कर्मधारयस्तद्गुणसंविज्ञानो वा बहुव्रीहिराश्रीयेत; इह त्वतद्गुणसंविज्ञानो बहुव्रीहिः, धातुरन्यपदार्थस्तदाह—**आम्प्रत्ययो यस्मादिति ।**

### भावबोधिनी

यहाँ 'जुगुप्सते मीमांसते' में कैसे ? यहाँ तो 'अनुदात्तङित०' ( पा० सू० १।२।३ ) इसी से आत्मनेपद सिद्ध है क्योंकि अवयव ( गुप आदि ) में किया गया अनुदात्तेत्व चिह्न समुदाय जुगुप्स को भी विशेषित करता है, उसे भी अनुदात्तेद् सूचित करता है । [अतः सामान्य सूत्र से ही आत्मनेपद होता है । अतिदेश की आवश्यकता नहीं है । 'गुप गोपने, मान पूजायाम्' इस धातुपाठ में ये अनुदात्तेद् पठित हैं । इनसे 'गुप्-तिज्-किद्भ्यः सन्', (पा० सू० १।२।३) तथा 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' ( पा० सू० १।२।३ ) से सन् प्रत्यय आदि होता है । यह इच्छार्थक सन् से भिन्न है] ॥ ६२ ॥

कर्ता से भिन्न में क्रियाफल रहने के लिये आत्मनेपद का विधान करने के लिये यह सूत्र बनाया गया है । आम् प्रत्यय होता है जिस धातु से वह आम्प्रत्यय है । आम्प्रत्यय वाली-धातु के समान ही [अर्थात् प्रकृतिभूत धातु के समान ही] अनुप्रयोग = बाद में प्रयुक्त होने वाली कृञ् धातु से (भी) आत्मनेपद होता है ! [जिससे आम् प्रत्यय किया जाता है उस मूल धातु से जिस प्रकार आत्मनेपद होता है उसी प्रकार आम्प्रत्ययान्त के बाद प्रयुक्त होने वाली कृ धातु से भी आत्मनेपद होता है] उदा०—ईक्षाञ्चक्रे, ईहाञ्चक्रे ऊहाञ्चक्रे । [ईक्ष दर्शने, ईह चेष्टायाम् ऊह वितर्के, धातुएँ आत्मनेपदी हैं । अतः लिट् लकार में कृञ् का अनुप्रयोग होने पर उससे भी आत्मनेपद ही होता है]

उदुम्भाञ्चकारेति कर्त्रभिप्राये क्रियाफले आत्मनेपदं प्राप्नोति ? नैष दोषः; उभयमनेन क्रियते—विधिः, नियमश्च । कथम् ? पूर्ववदिति वर्तते । स द्वितीयो यत्नो नियमार्थो भविष्यति ।

कृञ इति किम् ? ईक्षामास, ईक्षाम्बभूव । कथं पुनरस्यानुप्रयोगः, यावता 'कृञ्चानुप्रयुज्यते लिटि'

**न्यासः**

**उभयमित्यादिना**—परिहारः । **कथमिति** ? एकेन प्रयत्नेनाशक्यमेतदुभयं कर्त्तुमित्यत आह—**पूर्ववदित्यादि** । नैवात्रैको यत्नः, किं तर्हि ? द्वौ—'आम्प्रत्ययवत्' इत्येको यत्नः, पूर्ववद्ग्रहणमनुवर्तमानं द्वितीयः । तत्र पूर्वेण यत्नेन विधिः क्रियते, इतरेण नियमः । यद्यनुप्रयोगस्य कृञ आत्मनेपदं भवति, पूर्ववदेव; नान्यथा । तेनोदुब्जाञ्चकारेत्येवमादौ न भवति । न ह्युब्जादीनामात्मनेपदं सम्भवति, परस्मैपदित्वात् ।

**ईक्षामासेति** । आम्, अस्तेरनुप्रयोगः । **ईक्षाम्बभूवेति** । 'भवतेरः' । 'कृञ्च' इत्यत्र करोतेरेव ग्रहणमित्यभिप्रायेणाह—**कथं पुनरित्यादि** । **कृञिति प्रत्याहारग्रहणमित्यादि** । तत्र प्रत्याहारेऽस्तिभवत्योरपि सन्निवेशः । अतस्तयोरप्यनुप्रयोगो भवतीति भावः । यद्येवम्, सम्पदोऽप्यनुप्रयोगः प्राप्नोति, तस्यापि तत्र सन्निवेशाऽपूर्वं सत्येव; 'अभिविधौ सम्पदा च' इति वचनात् । सत्यपि सन्निवेशे नासौ प्रत्याहारग्रहणेन गृह्यत इत्यदोषः । ग्रहणेन [illegible]तस्याग्रहणं तथोत्तरत्र प्रस्तावान्तरे प्रतिपादयिष्यामः । अथाम्प्रत्ययवदिति किम् ? असति हि तस्मिन्ननु-शरीरश्रु[illegible]

**पदमञ्जरी**

[illegible]ऽवयवेन विग्रहः, समुदायः समासार्थ इति, आम् प्रत्ययो यस्येति विग्रहः स्यात्; प्रतियोगिनि भवति; न त्वने[illegible]तत्र तस्य' इति षष्ठ्यान्ताद्वतिरित्याह—**आम्प्रत्ययस्येवेति** । **कृञोऽनुप्रयोगस्येति** । समानाधिकरणे विशेषः, य[illegible]योगशब्दः कर्मसाधनः । **ईक्षाञ्चक्रे इति** । 'ईक्ष दर्शने' 'ईह चेष्टायाम्' लिट् 'इजादेश्च' इत्याम्, दृशे[illegible] इति लेर्लुक् । 'अकर्त्रभिप्रायार्थोऽयमारम्भः' इति ब्रुवता विध्यर्थमेवैतदित्युक्तम् । तत्र दोषमुद्भावयितु-[illegible]वन्नाह—**यदीति** । किं पुनः कारणं विध्यर्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्यते, न पुनर्नियमार्थत्वमङ्गीकृत्य तदनुगुणो दोष उद्भाव्येत ? सत्यम्; अकर्त्रभिप्राये पाचयाञ्चक्रे, उब्जाञ्चकारेति प्राप्ते आम्प्रत्ययवदेव, तत्र विधिनियमसम्भवे विधिरेव ज्यायान्, तस्मादेवमुच्यते—'उब्ज आर्जवे', 'उन्भ पूरणे' । **उभयमित्यादि** परिहारः । **कथमिति** । नैकेनैव यत्नेनोभयं लभ्यमिति भावः ।

**ईक्षाम्बभूवेति** । 'भवतेरः', 'भुवो वुग् लुङ्लिटोः' । **कथं पुनरिति** । 'कृञः' इत्यत्र स्वरूपग्रहणं मन्यमानस्य प्रश्नः । **प्रत्याहारग्रहणमिति** । यदि तत्र स्वरूपग्रहणं स्याद्, इह कृञ्ग्रहणमनर्थकं स्याद्; अन्यस्यानुप्रयोगस्याभावादिति भावः । अत एव विपर्ययोऽपि न भवति—तत्र स्वरूपग्रहणं स्याद्, इह प्रत्याहारग्रहणमिति, इह

**भावबोधिनी**

यदि यह विध्यर्थ है; तब तो उदुब्जाञ्चकार उदुम्भाञ्चकार—इनमें कर्तृगामी क्रियाफल रहने पर आत्मनेपद प्राप्त होता है ? यह दोष नहीं है; क्योंकि यह सूत्र विधि और नियम दोनों करता है । कैसे ? ['पूर्ववत् सनः' ( पा० सू० १।३।६२ से) 'पूर्ववत्' ग्रहण की अनुवृत्ति होती है । यह द्वितीय यत्न नियमार्थ हो जायगा ।

**विमर्श**—यह सूत्र विधि मानने पर सर्वत्र प्राप्ति प्रसक्त होती है । अतः इसे विधि और नियम दोनों माना जाता है । इसके लिये दो सूत्रों की कल्पना करते हैं (१) 'आम्प्रत्ययवत्' [आम्प्रत्यय जिससे होता है उसके समान ही कृञ् से भी होता है] दूसरे में पूर्ववर्ती सूत्र से 'पूर्ववत्' की अनुवृत्ति करके 'आम्प्रत्ययवत् पूर्ववच्च' यह बनाते हैं । दूसरा वाक्य नियम करता है—यदि अनुप्रयुक्त कृञ् से आत्मनेपद हो तो पूर्ववत् [मूलधातु के समान] ही हो अन्यथा नहीं होता है । अतः उदुब्जाञ्चकार आदि में आत्मनेपद वारित हो जाता है ।

( अनु० ) 'कृञः' इसका ग्रहण किसलिये है ? ईक्षामास, ईक्षाम्बभूव । [यहाँ अस् और भू के अनुप्रयोग में नहीं होता है ।] 'भू' तथा 'अस्' का अनुप्रयोग कैसे होगा क्योंकि 'कृञ् च' इतना ही कहा गया है ? उस [अनुप्रयोग-

(३.१.४०) इत्युच्यते ? 'कृञ्' इति प्रत्याहारग्रहणं तत्र विज्ञायते । क्व संनिविष्टानां प्रत्याहारः ? 'अभूततद्भावे कृभ्वस्तियोगे संपद्यकर्तरि च्विः' (५.४.५०) इति कृशब्दादारभ्य यावत् 'कृञो द्वितीयतृतीयशम्बबीजात् कृषौ (५.४.५८) इति ञकारम् ॥

## २१२. प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ ६४ ॥ (७२५३)

'युजिर् योगे' (धा० पा० १४४५) स्वरितेत् । तस्य कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम् । अकर्त्रभिप्रायार्थोऽयमारम्भः । प्र, उप–इत्येवं पूर्वाद् युजेरयज्ञपात्रप्रयोगविषयादात्मनेपदं भवति । प्रयुङ्क्ते । उपयुङ्क्ते ।

### न्यासः

प्रयोगमात्रस्यात्मनेपदं स्यात्—देवदत्तः करोतीति ? अत्रापि पूर्ववदित्यनुवर्त्तते । तथापीह स्यात्—ईहते, करोतीति ? 'आम्प्रत्ययवत्' इत्युच्यमाने प्रत्यासत्तेराम एवानुप्रयोगस्येति गम्यते, नानुप्रयोगमात्रे, तेनातिप्रसङ्गो न भवति ॥६३॥

**प्रोपाभ्यां युजेरज्ञपात्रेषु** ॥ 'युज समाधौ' इत्यस्यानुदात्तेत्त्वात् सिद्धमात्मनेपदमित्यतस्तस्येह प्र[illegible] युक्तमित्यभिप्रायेणाह—**युजिर् योगे इति । प्रयुङ्क्त इति** । रुधादित्वात् 'श्नसोरल्लोपः' इत्यकारलोपः [illegible] इति कुत्वम्=जकारस्य गकारः, 'खरि च' इति चर्त्वम्=ककारः, 'नश्च' इत्यादिनाऽनुस्वारः, 'अ[illegible] परसवर्णः' इति ङकारः । [illegible]र्यते ।

**स्वराद्यन्तोपसृष्टादिति वक्तव्यमिति** । स्वरोऽज् आदिरन्तो वा यस्य स स्वराद्यन्तः, [illegible] तत्सम्बन्धाद् युजेरात्मनेपदं भवति—इत्येतदर्थरूपं व्याख्येमित्यर्थः । तत्रेदं व्याख्यानम्—इह सूत्रे प्रशब्दोऽ[illegible]

### पदमञ्जरी

हि प्रत्याहारग्रहणे भ्वस्त्योरप्यात्मनेपदविधिः प्रयोजनम् । यदि चानुप्रयोगविधिना कृञ एवानुप्रयुक्तः स्यात्, तदा भ्वस्त्योरनुप्रयोगाभावादात्मनेपदविधिरनुपपन्नः स्यात् । तस्मादिह स्वरूपग्रहणम्, आमनुप्रयोगविधौ प्रत्याहारस्येति सिद्धम् । 'अभिविधौ सम्पदा च' इति सम्पदोऽपि तत्रान्तर्भावादनुप्रयोगः प्राप्तः 'सनाद्यन्ता धातवः इत्यतो धात्वधिकाराद्धातूपसर्गसमुदायस्य न भवति । योऽत्र धातुस्तस्यापि न भवति; अर्थविप्रतिषेधादिति तत्रैव वक्ष्यामः ॥ ६३ ॥

**प्रोपाभ्यां युजेरयज्ञपात्रेषु ॥ युजिर्योगे इति** । 'युज समाधौ' इत्यस्य, न देवादिकस्य, अनुदात्तेत्त्वादेव सिद्धम्, युजरिति च विवक्षित इकारः, न त्वागन्तुकः । यज्ञपात्रविषयता चास्यैव सम्भवतीति भावः । **प्रयुङ्क्त इति** । 'रुधादिभ्यः श्नम्' 'श्नसोरल्लोपः' कुत्वचर्त्वे, अनुस्वारपरसवर्णौ ।

### भावबोधिनी

विधायक सूत्र] में 'कृञ्' यह प्रत्याहारग्रहण समझा जाता है । कहाँ सन्निविष्टों [ एक साथ प्रयुक्तों] का प्रत्याहार है ? 'अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' ( पा० सू० ५।४।५० ) यहाँ के 'कृ' शब्द से लेकर 'कृञो' द्वितीय-तृतीय०' ( पा० सू० १।२।३) के ञकार तक [कृञ् प्रत्याहार है इसके अन्तर्गत अस् और भू भी हैं ।] ॥ ६३ ॥

युजिर् योगे यह स्वरितेत् है । इसका कर्तृगामी क्रियाफल रहने पर आत्मनेपद सिद्ध ही है; अकर्तृगामी क्रियाफल के विषय में आत्मनेपद के लिये सूत्र है । अयज्ञपात्र-विषयक, प्रपूर्वक तथा उपपूर्वक युज धातु से आत्मनेपद होता है । उदा०—प्रयुङ्क्ते उपयुङ्क्ते । [प्रयोग में लाता है, उपयोग में लाता है ।] अयज्ञपात्रेषु [यज्ञसम्बन्धी पात्र विषय न रहने पर] इसका क्या फल है ? 'द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।' [यहाँ आत्मने पद नहीं होता है ।]

अयज्ञपात्रेष्विति किम् ? 'द्वन्द्वं न्यञ्चि पात्राणि प्रयुनक्ति ।' (देवसंयुक्तानि) (आ० गृ० १.१.१६)
* स्वराद्यन्तोपसृष्टादिति वक्तव्यम् * । उद्युङ्क्ते, नियुङ्क्ते ।
स्वराद्यन्तोपसृष्टादिति किम् ? संयुनक्ति ॥

## २१३. समः क्ष्णुवः ॥ ६५ ॥ (२७३६)

'क्ष्णु तेजने' (धा० पा० १०३७) परस्मैपदी । ततः सम्पूर्वादात्मनेपदं भवति । 'समो गम्यृच्छि' (१.३.२९) इत्यत्रैव कस्मान्न पठितः ? अकर्मकादिति तत्र वर्तते । संक्ष्णुते शस्त्रम्, संक्ष्णुवाते, संक्ष्णुवते ।

## २१४. भुजोऽनवने ॥ ६६ ॥ (२७३७)

### न्यासः

पसर्गलक्षणार्थः, उपशब्दोऽजाद्युपलक्षणार्थः, तेन सर्वेणाजान्तेनाजादिना चोपसर्गेण च युक्ताद् युजेरात्मनेपदं भवतीति । स्वराद्यन्तोपसृष्टादिति किम् ? निर्युनक्ति ॥६४॥

**समः क्ष्णुवः ॥ अकर्मकादिति तत्रानुवर्त्तत इति ।** सकर्मकादपि क्ष्णुव आत्मनेपदमित्यत इति मन्यते । अत एव सकर्मकस्योदाहरणमुपन्यस्तम् । **संक्ष्णुते शस्त्रमिति ।** अदादित्वाच्छपो लुक् ।**संक्ष्णुवाते इति ।** 'अचि श्नुधात्व' इत्यादिनोवङ् । **संक्ष्णुवत इति ।** पूर्ववददादेशः ॥६५॥

**भुजोऽनवने ॥ अवनप्रतिषेधेनेत्यादि ।** अवनं = पालनम् तत्प्रतिषेधेन रौधादिकस्य भुजेर्ग्रहणं विज्ञायते, —'भुज कौटिल्ये' इत्यस्य । यथैव हि सवत्साधेनुरानीयतामित्युक्ते यस्या हि वत्सेन सह सम्बन्धः

### पदमञ्जरी

**स्वराद्यन्तोपसृष्टादिति ।** स्वरः=अ इ, आदिरन्तो वा यस्य स स्वराद्यन्तः । तेनोपसर्गेण सम्बन्धः, ...द्यन्तोपसृष्टः—सम् निस् दुस् इत्येतान् वर्जयित्वा सर्व एवोपसर्गास्संगृहीताः ॥ ६४ ॥

**समः क्ष्णुवः ॥** इह 'शर्परे विसर्जनीयः' इत्यस्यावकाशो यत्र कुप्वोरसम्भवः—पुरुषः त्सरुकः; 'कुप्वोः ≍क ≍पौ च' इत्यस्य यत्र शर्परौ कुपू न सम्भवतः—पुरुषः करोतीति; शर्परयोरुभयोः प्रसङ्गे पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति 'शर्परे विसर्जनीयः' इति नित्यं विसर्जनीय एव भवति । तेन 'समः क्ष्णुवः' इति सूत्रे विसर्जनीयस्यैव पाठः 'समो सम्यृच्छि' इत्यत्रेवेति । एवं हि द्विः समो ग्रहणं न कर्तव्यमिति भावः । **संक्ष्णुवत इति ।** अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनतः' इति झस्यादादेशः, 'अचि श्नुधातु' इत्यादिनोवङ् ॥६५॥

**भुजोऽनवने ॥ अनवनप्रतिषेधेनेत्यादि ।** संसर्गवद्विप्रयोगोऽपि विशेषस्मृतिहेतुः । यथा दोग्ध्रीपर्यायो

### भावबोधिनी

'स्वराद्यन्त = स्वर जिसमें आदि अथवा अन्त में हो, उससे उपसृष्ट = सम्बद्ध युज धातु से आत्मनेपद होता है ।' उदा० उद्युङ्क्ते, नियुङ्क्ते [यहाँ उद् में आदिस्वर है और नि में अन्त में स्वर है । अतः वार्तिक से आत्मनेपद होता है ।]

स्वर जिसके आदि या अन्त में हो ऐसे उपसर्ग से सम्बद्ध—('स्वराद्यन्तोपसृष्टात्') इसका क्या फल है ? संयुनक्ति । [यहाँ नहीं होता है क्योंकि 'सम्' में आदि और अन्त में स्वर नहीं है ।] ॥ ६४ ॥

'क्ष्णु तेजने' [धार रखना] परस्मैपदी होती है । सम्पूर्वक क्ष्णु धातु से आत्मनेपद होता है । 'समो गम्यृच्छि०' (पा० सू० १।२।३) इसमें ही इसको भी क्यों नहीं पढ़ा गया ? उसमें 'अकर्मकात्' इसकी अनुवृत्ति होती है । [यह सकर्मक में प्रवृत्त होता है ] उदा०—संक्ष्णुते शस्त्रम्, संक्ष्णुवाते, संक्ष्णुवते । [शस्त्र पर धार रखता है] ॥ ६५ ॥

'भुज पालनाभ्यवहारयोः' [पालन और भोजन अर्थ में भुज् धातु] यह धातु रुधादि गण में पठित है । अपालन अर्थ में वर्तमान उस [भुज्] धातु से आत्मनेपद होता है । उदा०—भुङ्क्ते, भुञ्जाते भुञ्जते । [भोजन करता है ।]

**'भुज पालनाभ्यवहारयो' (धा० पा० १४५५) इति रुधादौ पठ्यते। तस्मादनवने = अपालने वर्त्तमानादात्मनेपदं भवति। भुङ्क्ते, भुञ्जाते, भुञ्जते।**

**अनवने इति किम्? भुनक्त्येनमग्निराहितः। अनवन इति प्रतिषेधेन रौधादिकस्यैव ग्रहणं विज्ञायते, न तौदादिकस्य—'भुजो कौटिल्ये' (धा० पा० १४१८) इत्यस्य। तेनेह न भवति—विभुजति पाणिम्॥**

## २१५. णेरणौ यत्कर्म णौ चेत् स कर्त्ताऽनाध्याने॥ ६७॥ (२७३८)

**'णिचश्च' (१.३.७४) इति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदम्। अकर्त्रभिप्रायार्थोऽयमारम्भः।**

**न्यासः**

सम्भवति सैव गोधेनुरानीयते, न महिष्यादिधेनुः; तथेहाप्यवनप्रतिषेधेन यस्य भुजोऽनवने वृत्तिः सम्भवति, स एव रौधादिकः प्रतीयते; तस्मात् तस्यैव ग्रहणं विज्ञायते। तेन निर्भुजति, विभुजतीति तौदादिकस्यात्मनेपदं न भवति॥६६॥

**णेरणौ यत् कर्म णौ चेत् स कर्त्ताऽनाध्याने॥ आरोहन्ति हस्तिनं हस्तिपका इति।** अणौ कर्मप्रदर्शनार्थमेतदुक्तम्। इदं त्वत्रोदाहरणम्—**आरोहयते हस्ती स्वयमेवेति।** आरोहन्ति हस्तिनं हस्तिपका इत्य[illegible] ङ्पूर्वस्य तु 'रुह बीजजन्मनि प्रादुर्भावे' इत्यस्य द्वे क्रिये वाच्ये—न्यग्भवनम्, न्यग्भावनञ्च। तत्र न्यग[illegible] हस्ती कर्त्ता, न्यग्भावनस्य हस्तिपका इति। न्यग्भवन्तं हस्तिनं न्यग्भावयन्तीत्यर्थः। स यदा तु सु[illegible] सुविधेयत्वाच्च न्यग्भावनक्रियायामत्यन्तमानुकूल्यं प्रतिपद्यते हस्ती स्वयमेव, तदासौ हस्ती ह[illegible]भिधीयते।

**पदमञ्जरी**

संसर्गिभिः विशेषेऽवस्थाप्यते—सवत्सा धेनुरानीयतां सकिशोरा सवर्करेति 'तथाऽवत्साऽकिशोराऽवर्करेति' [illegible] आनयने दृष्टः संसर्गः सैव तत्र गृहीता आनीयते; तद्वदिहापीत्यर्थः॥६६॥

**णेरणौ यत्कर्म णौ चेत्स कर्त्तानाध्याने॥** अत्र 'णेः' इति यद्यपि सामान्यनिर्देशः, तथापि पुच्छभाण्डादिणिङ् न गृह्यते; अणौ कर्मणो णावसम्भवात्, कमेर्णिङस्तु 'आयादय आर्द्धधातुके वा' इति वचनादण्यन्तावस्था सम्भवति। कर्मणश्च कर्तृत्वम्—कमिष्यते योषितं देवदत्तः कामयिष्यते योषित्स्वयमेवेति, तथापि ङित्त्वादेव सिद्धं सोऽपि न गृह्यत इति णिच एव ग्रहणमित्याह—**णिचश्चेति कर्त्रभिप्राये क्रियाफले सिद्धमेवात्मनेपदमिति। अकर्त्रभिप्रायार्थं इति।** उपलक्षणमेतत्, कर्त्रभिप्राये पदान्तरेण द्योतिते 'विभाषोपपदेन प्रतीयमाने' इति विकल्पं बाधित्वा नित्यो विधिर्यथा स्यादित्यपि द्रष्टव्यम्। अत्रैकवाक्यतायामयमर्थो भवति—ण्यन्तादात्मनेपदं भवत्यण्यन्तावस्थायां यत्कर्म ण्यन्तावस्थायां यदि स कर्त्ता भवति आध्यानादन्यत्रेति। तत्र कर्मान्तरनिवृत्तिर्न कृता स्यात्, ततश्चेहापि प्रसज्येत—आरोहन्ति हस्तिनं हस्तिपकास्तानारोहयति हस्तीति। किं च उक्तेऽर्थे

**भावबोधिनी**

अनवन = पालनभिन्न अर्थ में—इसके ग्रहण का क्या फल है? भुनक्ति एनम् अग्निराहितः [यहाँ पालन अर्थ है।] अनवन = अपालन में प्रतिषेध होने के कारण रुधादिगणीय भुज का ही ग्रहण विज्ञापित होता है, न कि तुदादिगणीय 'भुज कौटिल्ये' [कुटिल = वक्र होना] का। अतः यहाँ आत्मनेपद नहीं होता है—विभुजति पाणिम् [हाथ टेढ़ा करता है]॥ ६६॥

'कर्तृगामी क्रियाफल रहने पर 'णिचश्च' (पा० सू० १.२.३) से आत्मनेपद सिद्ध ही है। अकर्तृगामी क्रियाफल रहने पर आत्मनेपद के विधानार्थ यह सूत्र बनाया गया है। णिजन्त धातु से आत्मनेपद होता है; किस प्रकार? अणिजन्त अवस्था में जो कर्म णिजन्त में भी वही कर्म है, यदि वही कर्ता बन जाता है, [उत्कण्ठापूर्वक स्मरण] नहीं होना चाहिये; उसे छोड़कर। उदा०—आरोहन्ति हस्तिनं हस्तिपकाः। [महावत हाथियों पर चढ़ते हैं] 'आरोहयते हस्ती स्वयमेव। [हाथी उन्हें स्वयं चढ़ाता है] उपसिञ्चन्ति हस्तिनं हस्तिपकाः [महावत हाथियों को पानी से नहलाते हैं।]

**ण्यन्तादात्मनेपदं भवति, कथम् ? अणौ यत्कर्म णौ चेत्तदेव कर्म, स एव कर्त्ता भवति, अनाध्याने = आध्यान वर्जयित्वा । आरोहन्ति हस्तिनं हस्तिपकाः (म० भा० १.३.६७) । आरोहयते हस्ती स्वयमेव । उपसिञ्चन्ति हस्तिनं हस्तिपकाः । उपसेचयते हस्ती स्वयमेव । पश्यन्ति भृत्या राजानम् (म० भा० १.३.६७) । दर्शयते राजा स्वयमेव ।**

**न्यासः**

प्रयोजकत्वेन विवक्ष्यते, हस्तिपकास्तु प्रयोज्यत्वेन । हस्ती हस्तिपकान् प्रयुङ्क्ते—मामारोहतेति, ततश्च प्रयोज्यप्रयोजकभावे विवक्षिते हेतुमण्णिच् । एवमुत्तरत्रापि कर्मणः कर्तृत्वस्य विवक्षितत्वात् प्रयोजकभावविवक्षायां णिज् विधेयः । ततस्तस्मिन्नुत्पन्ने यदा निर्ज्ञातस्वरूपत्वाच्चरितार्थत्वात् प्रयोज्या न विवक्ष्यन्ते, तदा निवृत्तत्वात् प्रयोज्यप्रयोजकभावस्य न्यग्भवनमात्रे ण्हिर्वर्तते । अत्रेदमुदाहरणम्—आरोहयते हस्ती स्वयमेवेति । तदा हि, यदेवाण्यन्ते कर्मासीत् स एव ण्यन्ते हस्ती कर्त्ता भवति । न च प्रयोज्यप्रयोजकभावे निवृत्तेऽपि णिचो निवृत्तिर्भवति, निवृत्तिकारणाभावात् । यथैव हि देवदत्तस्य व्यापारे निवृत्तेऽपि पचिः पाकान्न निवर्तते—पच्यत ओदनः स्वयमेवेति, तथेहापि निवृत्ते प्रयोज्यप्रयोजकव्यापारे णिचो निवृत्तिर्न भवतीति वेदितव्यम् ।

**पदमञ्जरी**

एवं [illegible] ग्रहणेन [illegible] 'इत्यर्थाणि' इत्येतावदेव वाच्यम्; कर्त्तरीत्येव ण्यन्तादात्मनेपदं भवति, 'अणौ कर्मणि कर्तरि' इत्युक्ते को शरीरश्रुत्या [illegible]ऽर्थो न सिद्धयति ! 'सः' इत्येतच्चानर्थकम्; यत्तदोर्नित्यसम्बन्धादेवाध्याहारतः सिद्धेः । तस्मा- भवति; न त्वने[illegible] विवक्षितमिति मत्वा पृच्छति—**कथमिति** ।

विशेषः, य[illegible] इतरोऽपि वाक्यभेदाश्रयणेन परिहरति—**अणौ यत्कर्मेत्यादि** । णेरात्मनेपदं भवति आध्यानादन्यत्रे- दृष्टे[illegible] वाक्यम्, ततोऽणौ यत्कर्मेति द्वितीयम् । अत्र वाक्ये यत्तदोर्नित्यसम्बन्धाद्यच्छब्देन तच्छब्द आक्षिप्यते । [illegible] कर्मान्तरस्य चानिर्देशाद् उद्देश्यतयापि श्रुतं कर्मत्वमेव विधीयते । तच्च विधीयमानं सामर्थ्याण्णेरिति सन्निहितत्वाण्ण्यन्तावस्थायामेव । विधीयते । किं तत्सामर्थ्यम् ? अणौ यत्कर्मेत्यनुवादसामर्थ्यादेवाणौ कर्मत्वसिद्धेस्तत्रैव तद्विधानस्यासम्भवः । तदेवमणौ यत्कर्मेत्येतावत एवाणौ यत्कर्म णौ चेत्तत्कर्मेत्यर्थो भवति । अनेन च कर्मान्तरनिवृत्तिः क्रियते, न त्वणौ कर्मणो णौ कर्मभावः प्रतिपाद्यते । स कर्तेति वाक्यान्तरेण तस्य कर्तृत्वप्रतिपादनात् एकस्य युगपदेकस्यां क्रियायां कर्मत्वकर्तृत्वयोरुभयोरसम्भवात् । ततो णौ चेदिति तृतीयं वाक्यम्—अणौ यदित्येव, अणौ यत्प्रतिपाद्यं वस्तु णौ चेत्तदेव प्रतिपाद्यमित्यर्थः । ततः स कर्तेति चतुर्थम् । अत्राणौ यत्कर्म णौ चेदिति सर्वमनुवर्त्तते । 'अनाध्याने' इत्येतदपि प्रसज्यप्रतिषेधे पञ्चमं वाक्यम् ।

**भावबोधिनी**

उपसेचयते हस्ती स्वयमेव । [हाथी अपने आप पानी फेंक कर नहाता है ।] पश्यन्ति भृत्या राजानम् [नौकर राजा को देखते हैं ।] दर्शयते राजा स्वयमेव [राजा स्वयं अपने को दिखा रहा है ।]

**विमर्श**—शुद्ध वाक्य में जिसे कर्म बनाया गया है वही यदि णिजन्त वाक्य में भी कर्म रहता है । ऐसा कर्म जब कर्ता रूप से विवक्षित होता है तब इस सूत्र से आत्मनेपद होता है । उदा०—आरोहन्ति हस्तिनं हस्तिपकाः = महावत हाथी पर चढ़ते हैं । यहाँ हस्ती = हाथी कर्म है । जब सिखाने के बाद शिक्षित होकर हाथी अपने आप महावत को चढ़ा लेता है तब कर्म = हाथी कर्ता बन जाता है—आरोहयते हस्ती स्वयमेवं [हाथी स्वयं झुक कर महावत को चढ़ा लेता है ।] यहाँ आत्मनेपद-विधान के लिये यह सूत्र है । जहाँ क्रियाकृत कोई विशेष [प्रभाव] कर्म में नहीं दिखाई देता है वहाँ कर्तृस्थभावकत्व माना जाता है । वहीं पर यह सूत्र आत्मनेपद करता है । जहाँ क्रियाकृत विशेष कर्म में दिखाई देता है वहाँ तो 'कर्मवत् कर्मणा तुल्यक्रियः' (पा० सू० ३।१।८७) से कर्मवद्भाव होकर आत्मनेपद सिद्ध हो जाता है ।

**णेरिति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः, आरोहयमाणो हस्ती साध्वारोहति ।**

**अणाविति किम् ? गणयति गोगणं गोपालकः, गणयति गोगणः स्वयमेव** (म० भा० १.३.६७ वा० ६) । **कर्मग्रहणं किम् ? लुनाति दात्रेण, लावयति दात्रं स्वयमेव ।**

**न्यासः**

**सिञ्चन्तीत्यादि** । अत्रापि सिच्यमानो हस्ती कर्म यदा सुशिक्षितत्वात् सुविधेयत्वाच्च सेचनक्रियां प्रति प्रकृष्टमानुकूल्यं भजते, तदा तस्य प्रयोजकत्वे विवक्षिते हस्तिपकानाञ्च प्रयोज्यत्वे णिच् । तत्र कृते पूर्ववत् प्रयोज्येष्वविवक्षितेषु यदेवाण्यन्ते कर्म स एव ण्यन्ते कर्त्ता भवति । **पश्यन्तीत्यादि** । अत्रापि दृश्यमानस्य राज्ञः दर्शनक्रियायामतिशयेनानुकूल्यभावोपगमनात् प्रयोजकत्वे विवक्षिते भृत्यानाञ्च प्रयोज्यत्वे णिच् । तत्र विहिते पूर्ववत् प्रयोज्याविवक्षायां यदेव दृशेरण्यन्ते कर्म राजा स एव ण्यन्ते कर्ता । क्रियापि च सर्वेष्वेतेषूदाहरणेषु यैवाण्यन्तावस्थायाम्, सैव ण्यन्तेऽपि । सत्यपि च णिचि प्रयोज्यप्रयोजकभावस्य निर्वर्त्तितत्वात् क्रियान्तरस्य चानुत्पत्तेः ।

**गणयतीत्यादि** । 'गण संख्याने' चुरादावदन्तः पठ्यते । ततो णिच्, 'अतो लोपः' इत्यकारलोपः । तस्य पूर्वविधौ कर्तव्ये स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न भवति । **गणयति गोगणं गोपालक** ।

**पदमञ्जरी**

तत्र वृत्तिकारेण त्रीणि वाक्यानि स्ववाचा दर्शितानि—(१) ण्यन्तादात्मनेपदं भवतीत्येकं [illegible] अणौ यत्कर्म णौ चेत्तदेव कर्मेति द्वितीयम्, (३) स एव कर्त्ता भवतीति तृतीयम् । 'णौ चेद्' ग्रहणं [illegible]धीयते । मिति तु वक्ष्यति, अतस्तदपि वाक्यमभ्युपगतमेव ।

**आरोहन्तीत्यादि** । अणौ कर्मप्रदर्शनार्थमिदमुक्तम्, इदं तत्रोदाहरणम्—आरोहयते हस्ती स्वयं [illegible] आङ्पूर्वो रुहिः न्यग्भवनोपसर्जने न्यग्भावने वर्तते, न्यग्भवन्तं हस्तिनं न्यग्भावयतीत्यर्थः । यदा तु हस्तिनः सौकर्यातिशयप्रतिपादनाय हस्तिपकव्यापारो न विवक्ष्यते, तदा न्यग्भावमात्रे रुहिर्वर्तते, तत्र च हस्तिनः कर्तृत्वम् । उक्तं च—

निवृत्तप्रेषणं कर्म स्वक्रियावयवे स्थितम् ।
निवर्तमाने कर्मत्वे स्व[1]कर्तृत्वेऽवतिष्ठते ॥ (वा० प० ३-७-५६) इति ।

अस्य च कर्तुः कर्मस्थक्रियेषु कर्मकार्याण्यतिदिश्यन्ते—'कर्मवत्कर्मणा तुल्यक्रियः' इति, तद्यथा—लूयते केदारः स्वयमेवेति । लुनातिर्हि द्विधाभवनोपसर्जने द्विधाभावने वृत्तः कर्तृव्यापाराविवक्षायां द्विधा भवनमात्रे वर्तते । दुहिस्तु कर्तृस्थक्रियत्वात् कर्मकार्याणि न लभत इत्येतावत् ततो न्यग्भवनवृत्ते रुहेर्हस्तिपक-व्यापारे णिजुत्पद्यते, तदा च य एवार्थं आरोहयन्ति हस्तिनं हस्तिपकाः, स एवार्थं आरोहन्ति हस्तिपका इति । पुनः सौकर्यातिशयविवक्षायामविवक्षिते हस्तिपकव्यापारे न्यग्भवनमात्रे रोहिर्वर्तते—आरोहयते हस्ती स्वयमेवेति । सुष्ठु न्यग्भवतीत्यर्थः । उक्तं च—

**भावबोधिनी**

(अनु०) णेः—णिजन्तात्—इसका क्या फल है ? आरोहन्ति हस्तिनं हस्तिपकाः [महावत हाथी पर चढ़ते हैं ।] 'आरोहयमाणः हस्ती साधु आरोहति । [आरोहति = न्यग्भवति = झुकता है, यहाँ णिजन्त न होने से आत्मने-पद नहीं होता है ।]

अणौ—[अण्यन्तावस्था में] इसका क्या फल है ? गणयति गोगणं गोपालकः [गोपाल गायों के समुदाय को गिनता है ।] गणयति गोगणः स्वयमेव [गायों का समुदाय स्वयं गिनती करा देता है । यहाँ णिजन्त का ही कर्म गण था न कि अणिजन्त का । क्योंकि गण धातु के चुरादिगणीय होने से प्रारम्भ में ही णिच् हो जाता है ।]

---

१. 'स्वे कर्तृत्वे' इति पाठः वाक्यपदीये ।

का० द्वि०/१०

**'णौ चेद्' ग्रहणं समानक्रियार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः, आरोह्यमाणो हस्ती भीतान् सेचयति मूत्रेण।**

**न्यासः**

**गणयति गोगणः स्वयमेवेति।** अत्र स गण्यमानो यदा गणनं प्रत्यानुकूल्यं भजमानः प्रयोजकत्वेन विवक्ष्यते, गोपालकस्तु प्रयोज्यत्वेनः तदा हेतुमण्णिच्। तस्मिन् कृते पूर्ववत् प्रयोज्याविवक्षायां यदेव कर्म स एव कर्त्ता भवति। तथाप्यणाविति वचनादात्मनेपदं न भवति, न हि गणः प्रागणौ कर्मासीत्, किं तर्हि? ण्यन्त एव। ननु च "'अणावकर्मकाच्चित्तवत् कर्तृकात्' इत्यत्र 'अणौ' इति किम्? चेतयमानं प्रयोजयति चेतयते इति केचित् प्रत्युदाहरन्ति" इत्युक्त्वा **वृत्तिकारो** वक्ष्यति, तदयुक्तम्, 'हेतुमण्णिचो विधिः। प्रतिषेधोऽपि प्रत्यासत्त्या तस्यैव न्याय्यः' इति, तच्चेत्, सत्यम्; गणयति गोगणं गोपालकः, गणयति गोगणः स्वयमेवेत्येतदपि प्रत्युदाहरणमयुक्तमेव स्यात्, नैतदस्ति; भेदस्याविवक्षितत्वात्। यदि हि भेदो विवक्ष्यते, तदा हेतुमण्णिचो विधिरिति प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव स्यात्, न हि विप्रकृष्टस्य चुरादिणिचः। न चेह भेदो विवक्षितः, 'णेः' इति जातिनिर्देशात्। तस्माण्णिज्मात्राद्विधिः, अतः प्रतिषेधोऽपि णिज्मात्रस्यैव स्यादिति युक्तमेतत् प्रत्युदाहरणम्। 'अणावकर्मकात्' इत्यादौ सूत्रेऽणाविति हेतुमण्णिच एव ग्रहणम्। अत एव हेतुमण्णिच एव विधिरिति प्रत्यासत्तेस्तस्यैव प्रतिषेधो युक्तः। यथा तत्र हेतुमण्णिचो ग्रहणं तथा तत्रैव प्रतिपादयिष्यामः। न

**पदमञ्जरी**

न्यग्भावनं न्यग्भवनं रुहौ शुद्धे प्रतीयते।
न्यग्भावनं न्यग्भवनं ण्यन्तेऽपि प्रतिपद्यते॥
अवस्थां पञ्चमीमाहुर्ण्यन्तानां[1] कर्मकर्तरि।
निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते॥ (वा० प० ३-७-५९-६०) इति।

एवं सिञ्चतेरप्यार्द्रीभवनोपसर्जनमार्द्रीभावनमर्थः। ततो निवृत्तप्रेषणमित्यादि पूर्ववत्। सेचयते हस्ती स्वयमेव, सेचनेऽत्यन्तमनुकूलो भवतीत्यर्थः। एवं दृशिरपि कर्मव्यापारमात्रवृत्तिः, णिजुत्पन्ने पुनस्तत्रापरोऽपि, तदुदाहरणम्—दर्शयते राजा स्वयमेव, दर्शनेनानुकूलो भवतीत्यर्थः। सोऽयं निवृत्तप्रेषणपक्ष उच्यते।

अपरः प्रकारः—आरोहन्ति हस्तिनं हस्तिपकाः, तान् सौकर्यातिशयाद्धस्ती प्रयुङ्क्ते इति; हस्तिव्यापारे णिजुत्पद्यते—आरोहयति हस्ती हस्तिपकानिति। तत्र सौकर्यातिशयप्रतिपादने तात्पर्यमिति कर्म न विवक्ष्यते, ततोऽकर्मको भवति; यथा—नेह पच्यते, नेह भुज्यते इति पाकमात्रप्रतिषेधे तात्पर्यमिति कर्माविवक्षायां भावे लो भवति—आरोहयते हस्ती स्वयमेव, सुष्ठु न्यग्भवतीत्यर्थः। एष एव हि हस्तिनः प्रयोजकव्यापारः। एवमितरयोरपि द्रष्टव्यम्। सोऽयमध्यारोपितप्रेषणपक्ष इति गीयते।

तदेवमुभयोरपि पक्षयोः सैव क्रिया, याऽण्यन्तावस्थायाम्। न च कर्मान्तरमस्ति, कर्तापि स एवेत्युदाहरणोपपत्तिः। स्वयमिति वचनं कर्त्रन्तरव्युदासार्थम्।

**भावबोधिनी**

कर्मग्रहण का क्या फल है? लुनाति दात्रेण (हसिया से काटता है)। लावयति दात्रं स्वयमेव। (हसिया स्वयं ही कटवाता है। यहाँ कर्म न होकर करण है। आत्मनेपद नहीं होता है।)

णौ चेत्—णिजन्तावस्था में यदि—इसका ग्रहण समान = एक क्रिया के लिये है। [अर्थात् प्रयोज्य प्रयोजक किसी भी अवस्था में क्रिया बदलनी नहीं चाहिये। वही रहनी चाहिये] आरोहन्ति हस्तिनं हस्तिपकाः, (महावत हाथी पर चढ़ते हैं), आरोह्यमाणो हस्ती भीतान् सेचयति मूत्रेण [चढ़ा जाता हुआ हाथी भयभीत लोगों को मूत्र से गीलाकर देता है। यहाँ पहले आरुह—है और बाद में सिञ्चन—है। क्रियाभेद के कारण सेचयति में आत्मनेपद नहीं होता है]।

---

१. 'ण्यन्ते ताम् इति' पाठः वाक्यपदीये।

**यत्सग्रहणमनन्यकर्मार्थम्। आरोहन्ति हस्तिनं हस्तिपकाः। आरोहयमाणो हस्ती स्थलमारोहयति मनुष्यान्।**

न्यासः

चात्र तथाविधं किञ्चिन्निबन्धनमस्ति, यतो णेरिति हेतुमण्णिच एव ग्रहणमवसीयते, चौरादिकानामप्यनित्यण्यन्तत्वात्, विभाषितणिचां च केषाञ्चिद् विद्यमानत्वात् येषामण्यन्तानामेव यत् कर्म, तेषामेव चुरादिणिजन्तानां तस्यैव कर्तृत्वसम्भवात्। तस्मादिह णेरिति णिज्मात्रस्य ग्रहणं सूत्रकारस्याभिमतमिति लक्ष्यते।

अथ गणयति: गोगणः स्वयमेवेत्यत्र 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यतिदेशात् कस्मादात्मनेपदं न भवति? कर्तृस्थभावकत्वात्। अत्र हि गणयतिरयं संख्यानिमित्ते परिच्छेदे ज्ञानविशेषे वर्त्तते, यस्य हि संख्यानमित्याख्या। स च ज्ञानविशेषः कर्त्तरि वर्त्तते; तत्र तस्य समवेतत्वात्, न कर्मणि। तस्मात् कर्तृस्थभावकत्वादिहात्मनेपदं न भवति। कर्मस्थक्रियाणां कर्मस्थभावकानाञ्च कर्मवद्भावातिदेशेनात्मनेपदमिष्यते, नेतरेषाम्।

**लुनाति दात्रेणेत्यादि।** दात्रस्य तीक्ष्णतया करणस्यापि सतो विशिष्टव्यापारभूतत्वाल्लावकपुरुषान् प्रति प्रयोजकत्वविवक्षायां णिच्।

**णौ चेद् ग्रहणमित्यादि।** इह णौ चेदिति न वक्तव्यम्। णेरणौ यत् कर्म स कर्त्तेत्येतावत्युच्यमानेऽणौ यत् कर्म तस्य सामर्थ्याण्णावेव कर्तृत्वं विज्ञायत इति किं णौ चेदित्यनेन? तदेतण्णौ चेद्ग्रहणं क्रियमाणं समानक्रियार्थं विज्ञायते—यदि यैव कर्मावस्थायां क्रिया, सैव कर्त्रवस्थायां भवतीति। एतदुक्तं भवति—?

पदमञ्जरी

**णेरिति किमिति।** अणौ कर्मत्वानुवादेन णौ कर्तृत्वविधानात् प्राधान्याण्ण्यन्तादेव प्रत्ययोत्पत्तिरधीयते। प्रश्नः। **साध्वारोहतीति।** साधु न्यग्भवतीत्यर्थः। अत्र कर्मव्यापारमात्रे रुहिर्वर्तते, कर्तृस्थक्रियत्वात्तु कर्मवद्भावाभावाद्यगात्मनेपदे न भवतः, शप्परस्मैपदे भवतः, अणौ यत्कर्मेत्यण्यन्तावस्थायामपि श्रुतत्वात्ततोऽपि स्यादिति भावः। ननु प्राधान्याण्ण्यन्तादेव भविष्यतीत्युक्तम्, किमर्थमणो यत्कर्म णौ चेत्स कर्तेति? अयमुपाधिर्यस्मिन्नेव प्रयोगे संभवति; तत्रैवात्मनेपदं युक्तम्, साध्वारोहतीत्यत्र च नायं प्रकारः सम्भवति। आरोहयते हस्तीत्यत्र तु णिचः प्रकृतिभूते रुहावण्यन्ते यत्कर्म ण्यन्ते स एव कर्त्तेति तत्रैव भविष्यति, सत्यम्; तदेवमुत्तरार्थमवश्यं णेरिति वक्तव्यमिहापि विस्पष्टार्थं भविष्यतीति मन्यते।

**अणाविति किमिति।** कर्मत्वकर्तृत्वयोर्यौगपद्यासम्भवात् णौ च कर्तृत्वस्य श्रुतत्वादवस्थान्तरे णावेव कर्मत्वं विज्ञास्यत इति प्रश्नः। **गणयतीति।** 'गण संख्याने' चुरादावदन्तः पठ्यते, अतो लोपस्य स्थानिवद्भावाद् उपधावृद्ध्यभावः। गण्यमानो गणो यदा गणनक्रियायामानुकूल्यं प्रतिपद्यते, तदा तद्व्यापारमात्रवृत्तेर्हेतुमण्णिचि पुनः कर्मव्यापारमात्रे आरोपितस्यैवायं प्रयोगः। **गणयति गोगणः स्वयमेवेति।** अत्र णावेव गणेः कर्म, णावेव कर्ता इत्यात्मनेपदं न भवति। कर्मवद्भावेनापि न भवति; कर्तृस्थक्रियत्वात्। गणनं हि संख्यानिमित्तः परिच्छेदो ज्ञानविवेषः। **भाष्ये तु** भागशोऽवस्थापने गणिर्वर्तते। भागशोऽवतिष्ठमानं गणं गोपालकोऽवस्थापयतीत्यर्थमङ्गीकृत्य तत्रानुकूलत्वाद् गणस्यैव कर्तृत्वविवक्षायामस्ति कर्मस्थभावकत्वमिति कर्मवद्भावादात्मनेपदमुदाहृतम्। ननु चाणावकर्मकादित्यत्र वक्ष्यति—'हेतुमण्णिचो विधिः' इति, प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्य इति, तच्चेत्, सत्यम्; इदमपि प्रत्युदाहरणमयुक्तमेव, उच्यते—युक्तं तत्र हेतुमण्णिचो

भावबोधिनी

'यत् सः'—( अण्यन्तावस्था में जो कर्म ण्यन्तावस्था में भी वही कर्म कर्ता बनता है, दूसरा कर्म कर्ता नहीं बनता है ) इसका ग्रहण—दूसरा कर्म न हो—इसके लिये है। आरोहन्ति हस्तिनं हस्तिपकाः; आरोहयमाणो हस्ती स्थलम् आरोहयति मनुष्यान्' [यहाँ हस्ती कर्म है, बाद वाले वाक्य में मनुष्यान् यह भी कर्म है। अतः इससे आत्मनेपद नहीं होता है।]

**कर्त्तेति किम् ? आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति महामात्रः । अनाध्याने इति किम् ? स्मरति वनगुल्मस्य कोकिलः, स्मरयत्येनं वनगुल्मः स्वयमेव** (म० भा० १.३.६७ वा० ७)।

**न्यासः**

धात्वर्थस्य यत् कर्म तस्यैव यदि तत् कर्तृत्वेन [illegible]विवक्ष्यत एवमात्मनेपदं भवति, नान्यथेति । तेन **आरोहन्ति हस्तिनं हस्तिपकाः, आरोह्यमाणो हस्ती भीतान् सेचयति मूत्रेणेत्यत्र** सेचयतेरात्मनेपदं न भवति; भिन्नत्वात् क्रियायाः । तथा हि, न्यग्भावनक्रियायां प्राक् हस्ती कर्मत्वेन विवक्षितः, सेचनक्रियायां तूत्तरकालं कर्तृत्वेन । **यत्सग्रहणमनन्यकर्मार्थमिति** । अण्यन्ते यत् कर्म ण्यन्तेऽपि यदि तदेव कर्म कर्त्ता भवति न कर्मान्तरम्, एवमात्मनेपदं भवति; नान्यथा । ननु विप्रतिषिद्धमेतत्—एकस्यैवैकदा कर्मत्वं कर्तृत्वञ्च ? नैतद् विप्रतिषिद्धम्; एको हि वस्तुधर्मः, अपरश्च विवक्षाधर्मः, स्वातन्त्र्याविवक्षायां कर्तृत्वस्य विवक्षाधर्मत्वात् वस्तुधर्मत्वाच्चारुह्यमाणतया कर्मत्वम् । **स्थलमारोहयति मनुष्यानिति** । अत्र कर्मान्तरमप्यस्ति । मनुष्यानिति न केवलं हस्त्येवेति न भवत्यात्मनेपदम् । यद्येवम्, भीतान् सेचयति मूत्रेणेत्यत्र कर्मान्तरसद्भावादात्मनेपदं न भविष्यति, अस्ति ह्यत्रापि कर्मान्तरम्—भीतानिति, अतो न वक्तव्यम्—समानक्रियार्थं णौ चेदित्येतत् ? नैतदस्ति, न हि

**पदमञ्जरी**

ग्रहणेन [illegible]रिति; तत्र बुधादिसूत्रे 'णेः' इति वर्तते, बुधादिभ्यश्च हेतुमण्णिजेव सम्भवति । इह तु सामान्येन ग्रहणं शरीरश्[illegible]भावात् । ननु चाणौ यत्कर्मेत्युच्यते चुरादीनां च नित्यण्यन्तत्वात्केवलानां प्रयोगाभवाद् अणौ कर्मणोऽ[illegible]त्रापि हेतुमण्णिच एव विधिः, नेत्याह; 'आ धृषाद्वा' इति विभाषितणिचामपि केषाञ्चित्सम्भवात् । भवति; न त्वने[illegible]तुमण्णिचो विधिरिति स्थितम् । **लावयति दात्रं स्वयमेवेति** । करणस्य दात्रस्यापि तैक्ष्ण्यातिशयेन [illegible]शेषः, य[illegible]न यदानुकूल्यं तत्प्रतिपादनाय लावकान्प्रति प्रयोजकत्वविवक्षायां णिच् ।

इह ण्यन्तादात्मनेपदं भवत्यणौ यत्कर्म स चेत्कर्तेत्युक्ते गम्यत एतद्—यस्माद् ण्यन्ताद्विधिः तत्रैवाण्यन्ते यत्कर्म स चेत्कर्त्तेति, अतो णौ चेद्ग्रहणमनर्थकम्, तत्राह—**णौ चेद्ग्रहणं समानक्रियार्थमिति** । प्रयोज्यप्रयोजकभावलक्षणेऽपि क्रियाभेदे मा भूत्, णिच्प्रकृत्यर्थभूतायामेव क्रियायां यथा स्यादित्यर्थः । यथा पुनरयं शब्दार्थस्तथोक्तं पुरस्तात् । **आरोह्यमाणो हस्ती भीतान् सेचयति मूत्रेणेति** । येन प्रयोज्यप्रयोजकभावलक्षणेऽपि क्रियाभेदे आत्मनेपदं वार्यत एवानेन धातुभेदादत्यन्तभेद इति मत्वैतत्प्रत्युदाहृतम्, भीताश्चात्रारोहयतेः कर्म । **आरोह्यमाण इति** । 'णिचश्च' इत्यात्मनेपदं शानच् भीता ह्यारोह्यमाणा भीत्या मूत्रयन्ति, तेन हस्ती सिच्यते । कर्माविवक्षायां तु सेचयतेरकर्मकत्वम् ।

उद्देशप्रतिनिर्देशात् लब्धे यत्सग्रहे पुनस्तद्ग्रहो वाक्यभेदेन कर्मान्तरनिवृत्तये इत्याह—**यत्सग्रहणमनन्यकर्मार्थमिति** । स्थलमारोहयति मनुष्यानित्यत्र कर्मान्तरमप्यस्ति मनुष्याः, रुहेर्गत्यर्थत्वान्मनुष्याणां कर्मसंज्ञा । कथं पुनरत्राणौ कर्मणो णौ कर्तृत्वम्, यावता स्थलमणौ कर्म हस्ती तु णौ कर्त्ता ? स्यादेतत्—आरोह्यमाण इत्यत्राणौ कर्मणो हस्तिन् एव कर्तृत्वम्, स एव च स्थलमारोहयतीत्यत्रापि कर्त्तेति । एवमपि प्रत्यासत्तेरेवात्र न भविष्यति, तथा हि ण्यन्तादात्मनेपदं भवति । अणौ यत्कर्म णौ चेत् स कर्त्तेत्युक्ते प्रत्यासत्तेरेतद् गम्यते—येन णिचा ण्यन्तादात्मनेपदं विधित्सितं तेनैव णिचाऽण्यन्ते तत्प्रकृतिभूते धातौ यत्कर्म स एव चेत्कर्ता तस्मिन्नेव ण्यन्त इति । अत्र च यत्रायमुपाधिः, कृतमेव तत्रात्मनेपदम्—आरोहयमाण इति ।

**भावबोधिनी**

कर्ता—[कर्ता में ही आत्मनेपद होता है । भाव या कर्म में नहीं] इसका क्या फल है ? आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति महामात्रः । [यहाँ कर्म हाथी कर्ता नहीं है अपितु महामात्र है जो कर्म नहीं था ।]

अनाध्यान (= उत्कण्ठापूर्वक स्मरण न होने में)—यह किसलिये है ? स्मरति वनगुल्मस्य कोकिलः, स्मरयति एनं वनगुल्मः स्वयमेव । [कोयल वनगुल्म = वनवृक्ष को याद करती है, वनगुल्म इसे स्वयम् याद कराता है ।]

**ननु चात्र कर्मकर्त्तरि मूलोदाहरणानि, तत्र कर्मवद्भावेनैव सिद्धमात्मनेपदम्, किमर्थमिदमुच्यते ? कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्मवदतिदेशो विज्ञायते । कर्तृस्थार्थोऽयमारम्भः ।**

**न्यासः**

भीतानिति सेचयतेः कर्म, किं तर्हि ? आरोहयतेः, भीतानारोहयमाणः सन् मूत्रेणात्मानं सेचयतीत्यर्थः, अयुक्तमेतत्, एवं ह्यारोहयमाण इत्यत्रात्मनेपदं शानच्च न स्यात्, कर्मान्तरसद्भावात् । नैवं तर्हि शानजेवात्र विहितः, किं तर्हि ? 'ताच्छील्यवयोवचनशक्तिषु' चानश्प्रत्ययः । तत्र यदि समानक्रियार्थं णौचेद्ग्रहणं न क्रियेत, तदा यदेवारोहयतेरण्यन्ते कर्म, स एव हस्ती सेचयतेर्ण्यन्ते कर्त्ता भवतीति तदेव कर्म, स एव कर्तेति स्यादेवात्मनेपदम् । तस्माण्णौ चेद् ग्रहणं समानक्रियार्थं कर्त्तव्यम् ।

**कर्तेति किमिति ?** कर्त्तर्येवात्मनेपदमनेन विधीयते; भावकर्मणोस्तु 'भावकर्मणोः' इत्यनेनैव सिद्धत्वात् । तस्माद् सामर्थ्यलब्धः कर्त्तेत्यभिप्रायः । कर्तृग्रहणं यदेवाण्यन्ते कर्म तस्मिन्नेव कर्तृत्वेन विवक्षिते सत्येवात्मनेपदं भवति, नान्यथेत्येवमर्थं क्रियत इति दर्शयितुमाह—**आरोहन्ति हस्तिनं हस्तिपकाः, तानारोहयति**

**पदमञ्जरी**

यत्र तु न कृतम्—स्थलमारोहयतीति, न तत्रायमुपाधिरिति नैवात्मनेपदप्रसङ्गः । इह तर्हि—आरोहन्ति हस्तिनं हस्तिपकाः तानारोहयति हस्तीति ? किं पुनरत्र नेष्यते ? वृत्तिकृता नेष्यते, भागवृत्तिकारेण त्विष्यते । माघः प्रयुङ्क्ते—'करेणुरारोहयते निषादिनम्' इति ।

**कर्तेति किमिति ।** भावकर्मणोः सिद्धत्वात् कर्त्तर्येव भविष्यतीति मन्यते । अणौ यत्कर्म ... विधीयते । कर्त्तरि यथा स्यात्, कर्त्रन्तरे मा भूदित्येवमर्थं कर्तृग्रहणमिति दर्शयन्नाह—**तानारोहयति महामात्र** इति । गत्यर्थत्वाच्च रुहेः हस्तिपकानां कर्मसंज्ञा । यद्येवम्, कर्मान्तरसम्भवादेवात्र न भविष्यति ? नैतदेवम् ? अस्ति ह्यत्राणौ कर्मणो हस्तिनो णावपि कर्मत्वेनान्वयः । न वा सति कर्तृत्वविधौ कर्मान्तरव्यावृत्तिर्लभ्यते । यद्वा—प्रयोजकव्यापारमात्रे तात्पर्याद्यदा हस्तिपकाः कर्मत्वेनाविवक्षिताः, तदेदं प्रत्युदाहृणं द्रष्टव्यम् । **वनगुल्मस्येति ।** कर्मोपलक्षणमेतत्, न त्वत्र वनगुल्मस्य कर्मत्वमस्ति; शेषत्वेन विवक्षितत्वात् । तस्माद्वनगुल्ममिति प्रदर्शनीयम् । **स्मरयत्येनमिति ।** 'स्मृ आध्याने' घटादिः, वनगुल्मस्य रमणीयत्वप्रतिपादनाय प्रयोजकत्वे विवक्षिते णिच् । **एनमिति ।** बुद्ध्यर्थत्वात्कोकिलस्य कर्मसंज्ञा । एतदप्युपलक्षणम्, अत्र हि कर्मान्तरसद्भावादेव प्राप्तिर्नास्ति कर्माविवक्षायां प्रत्युदाहरणं द्रष्टव्यम् ।

**ननु चात्र कर्मकर्तरि मूलोदाहरणानीति ।** ननु चाध्यारोपितप्रेषणपक्षे आरोहयतो हस्तिनः कर्मत्वाभावात्कर्मणा समानधातौ तुल्यक्रियत्वाभावात् पचत्योदनं देवदत्तो राध्यत्योदनं स्वयमेवेतिवत्कर्मवद्भावो न प्राप्नोति, सत्यम्; आरब्ध एवास्मिन् सूत्रे सोऽपि पक्षः सम्भवात् प्रदर्शितः, अनारब्धे तु निवृत्तप्रेषणपक्षप्रक्रियैवाश्रयिष्यते । ननु तत्रापि व्यापारद्वयाभिधायिषु रुहादिषु भवत्येवम्, ये तु केवलकर्तृव्यापारवाचिनो दृश्यादयः तेषु कथम्, न हि दृशिः कर्मव्यापारं कञ्चिदाचष्टे ? स्यादेतत्—विषयभावापत्तिः कर्मव्यापारस्तदापादनं कर्तृव्यापार इति । यद्येवम्, इच्छापि दृश्यर्थः स्यात् । नन्वत्रापि विषयभावापत्तिः, तदापादनं च विद्यते, अथ दर्शनविषयभावापादनं दृश्यर्थः, ननु तदेव निरूप्यते किं नाम तद्दर्शनम् इति, अत्रोच्यते; मा नामाख्यातकर्मव्यापारः, अस्ति तावत्कर्मणोऽपि व्यापारः, कारकत्वात्, तत्र णिजुत्पत्तिदशायां तावत्येव वर्तिष्यते, उदाहरण-

**भावबोधिनी**

इसमें कर्मकर्ता अर्थ में ही प्रमुख उदाहरण मिलते हैं, और उस ( कर्मकर्ता ) में तो कर्मवद्भाव के द्वारा [अतिदेश से ही] आत्मनेपद सिद्ध होता है, तो यह किसलिये कहा जा रहा है ? कर्मस्थभाव वाले और कर्मस्थक्रिया वाले का कर्मवद्भाव अतिदिष्ट होता है यह ज्ञात होता है । यह सूत्र कर्तृस्थभाव- वाले के लिये है और इसीलिये

**तथा च रुहिः कर्तृस्थक्रियः, दृशिः कर्तृस्थभावकः उदाहृतः।**

**न्यासः**

**महामात्र इति।** अत्र यदेवाण्यन्ते हस्ती कर्म न तदेव ण्यन्ते कर्तृत्वेन विवक्षितम्, किं तर्हि ? महामात्रः, तेनात्मनेपदं न भवति। एतच्च कर्तृग्रहणाल्लभ्यते, तस्यानन्यार्थत्वात्। ननु च यत्सग्रहणमनन्यकर्मार्थमित्युक्तम्, इह च कर्मान्तरं हस्तिपकाख्यमस्ति, अतो यत्सग्रहणादेव न भविष्यति, तत् किमेतन्निवृत्त्यर्थेन कर्तृग्रहणेन ? नैतदस्ति; एवं सति हि कर्तृग्रहणेऽणौ यत् कर्म णौ चेत् स कर्त्ता तदेव कर्म कर्त्ता भवतीत्यस्यार्थस्य च प्रतिपादनाय क्रियमाणं यत्सग्रहणमर्थवद् भवतीति। असति तु कर्तृग्रहणे तन्न कर्त्तव्यमेव स्यादिति कुतः समानकर्मता प्रतीयते ?

**स्मरति वनगुल्मस्येति।** अणौ कर्मप्रदर्शनार्थमेतत्। कर्मविषयेण शेषत्वेन विषयिणा विषयं दर्शयितुमुक्तम्। नन्वत्र न कर्मास्ति; तस्य शेषत्वेन विवक्षितत्वात्। तथा हि 'शेष' इत्यनुवर्तमाने 'अधीगर्थ' इत्यादिना कर्मणि शेषत्वेन विवक्षिते षष्ठीयं विहिता। तस्मादेवं दर्शयितव्यम्,—स्मरति वनगुल्ममिति। अथ वा—यद्यपि तच्छेषत्वेन विवक्षितम्, तथापि स्मर्यमाणत्वात् तस्य कर्मत्वं वस्तुनोऽस्त्येवेति। **स्मरयतीति।** 'स्मृ आध्याने',

**पदमञ्जरी**

ग्रहणेन [illegible]ायां ण्यन्तोऽपीति मन्यते। तथा च रुहिः कर्तृयुक् कर्मणाभिधेय इति युक्तं केवलकर्तृव्यापारवाचिनां शरीरश्रुत्यात्म[illegible]शिप्रभृतीनां कर्तृस्थक्रियत्वम्; कथं तु विक्लित्युपसर्जनविक्लेदवचनः पचिः, द्विधाभवनोपसर्जनद्विधाभावन[illegible]ाङ्गतिः कर्मस्थक्रियः, न्यग्भवनोपसर्जनन्यग्भावनवचनस्तु रुहिः कर्तृस्थक्रियः ? उच्यते; रुहिरपि [illegible] भ[illegible]त्र 'यद्धितुपरं छन्दसि' इत्यत्र **भाष्यकारो** वक्ष्यति—हस्तिनमारोहतीत्यत्र हि उपरिगमनलक्षण भवति; न त्वने[illegible]; तत्पुनर्न्यग्भवनहेतुत्वाद् न्यग्भावनमित्युच्यते, उपरिगमनरहितं तु न्यग्भावनमात्रं रुहेरर्थो न शेषः, य[illegible]ति, यदा खलु क्वचिद् भूमावेव तिष्ठन् वृक्षस्य शाखां हस्ताभ्यामवनमयति, तदा नासावारोहतीत्युच्यते। तस्माद् गतिविशेष एव रुहेरर्थः। कस्तर्हि क्रियाणां कर्मकर्तृस्थतायां हेतुः ? उक्तमत्र—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता[1]॥ इति। (वा० प० ३.७.६६)

विशेषदर्शनेन शब्दानुसारेण वा क्रियायास्तात्स्थ्यं कथ्यते। एतच्च कारणगतमारोहस्य कर्तृस्थत्वं प्रतिपादयति, न तु कर्मस्थताम्। न हि हस्तिनमारोहति, वृक्षमारोहति, पर्वतमारोहतीत्यादौ कर्मभेदेऽप्यारोहणे रूपभेदः प्रतीयते, यथा—घृतमांसतण्डुलादिषु पाकः। न च हस्ती न्यग्भवत्वित्येवं कारकव्यापारः किं तर्हि ? हस्तिपका उपर्यासीरन्निति। पाके तु तण्डुलादिगतो विक्लित्यादिरूपो विशेषो यथा स्यादित्येव कारकव्यापारः। तस्मात्कर्मभेदे रूपभेदादुद्देशस्य च कर्मगतत्वात् पचिः कर्मस्थक्रियः, विपर्ययाद्रुहिः कर्तृस्थक्रिय इति सिद्धम्। एवं चारुह्यते हस्ती स्वयमेवेति कर्मवद्भावं प्रदर्शयन्तो भाष्यन्यायविरोधादुपेक्ष्याः। **दृशिकर्तृस्थभावक इति।** अथ सिचिः कस्मादुपेक्षितः ? कर्मस्थक्रियत्वाद्। आर्द्रीभवनं ह्यत्र प्रधानम्, तदर्थत्वात्कारकव्यापारस्य। किमर्थं तर्ह्युदाहृतः ? विशेषाभावात्। न ह्यत्रानेन 'कर्मवत्कर्मणा' इत्यनेन वा आत्मनेपदे सति कश्चिद्विशेषः, तेनापि सति यक्चिणौ न भवतः, 'णिश्रन्थिग्रन्थि' इति प्रतिषेधात्। भाष्येऽपि कर्मवद्भावस्य सिद्धिमाशङ्क्या-

**भावबोधिनी**

'कर्तृस्थक्रियक' रुह धातु तथा कर्तृस्थभावक दृश् धातु को ही उदाहरणरूप में प्रस्तुत किया है।

**विमर्श**—पहले यह बताया जा चुका है कि जहाँ क्रियाफल से कर्म में कोई परिवर्तन आदि लक्षित होता है वहाँ कर्मस्थाक्रिया मानी जाती है। जैसे—तण्डुलं पचति आदि। परन्तु जहाँ ऐसा वैलक्षण्य दृष्टिगोचर नहीं होता है वहाँ कर्तृस्था क्रिया मानी जाती है। कुछ वैयाकरणों ने यह व्यवस्था शब्दों के आधार पर की है इसमें भर्तृहरि की कारिका प्रमाण है—

---

१. 'प्रकाश्यते'—इति वा पाठः।

## २१६. भीस्म्योर्हेतुभये ॥ ६८ ॥ (२५९४)

**न्यासः**

वनगुल्मस्य प्रयोजकत्वे विवक्षिते णिच्, घटादित्वात् मित्संज्ञा, 'मितां ह्रस्वः' इति ह्रस्वत्वम्। **एनमिति।** 'गतिबुद्धिप्रत्यवसानार्थ' इत्यादिना कर्मसंज्ञायां सत्याम् 'द्वितीयाटौस्स्वेनः' इत्येनादेशः। ननु च यत्सग्रहणमनन्यकर्मार्थम्, इह च कर्मान्तरमस्ति कोकिलः, ततश्च कर्मान्तरसद्भावादात्मनेपदं न भविष्यतीति किमेतन्निवृत्त्यर्थेनानाध्यानग्रहणेन? नैतदस्ति; आध्यानमात्रं विवक्षित्वेदं प्रत्युदाहरणमुपन्यस्तम्। एनमिति तु वचनं वनगुल्मः कर्त्ता न कोकिलः इत्यर्थोपदर्शनपरं वेदितव्यम्। अथ वनमित्यनेनेन स एव वनगुल्मः परामृश्यते। यदेव कर्म स एव कर्त्तेत्यर्थस्य प्रदर्शनार्थमेनमित्युक्तम्। एवं वनगुल्मं वनगुल्मो स्मरयति। आत्मानमात्मना स्मरयतीत्यर्थः। णिच्युत्पन्ने कोकिलस्य प्रयोज्यस्य विवक्षितत्वान्निवृत्ते प्रयोज्यप्रयोजकभावे स्मरयतेर्ण्यन्तस्य प्रकृत एवार्थो भवति। ननु च स्मरणं चेतनावतां धर्मः, वनगुल्मश्चाचेतनः, तत् कथमसौ स्मरेत्? नैतदस्ति; अचेतनेष्वपि चेतनावद्धर्मोपचारः—यथा नदीकूलं पिपतिषतीति। **रुहिः कर्तृस्थक्रिय** इति। तदर्थस्य न्यग्भावनात्मनो हस्तिपकेषु समवेतत्वात्। **दृशिश्च कर्तृस्थभावक इति।** तदर्थस्य दर्शनस्य कर्तृषु=भृत्येषु व्यवस्थितत्वात् ॥ ६७ ॥

**भीस्म्योर्हेतुभये ॥ हेतुभय इति।** हेतोर्भयं हेतुभयमिति। 'पञ्चमी भयेन' इति समासः। भीतिर्भयम्।

**पदमञ्जरी**

ध्यानप्रतिषेधार्थमित्युक्त्वा स्मरतेः कर्तृस्थभावकत्वात् कर्मवद्भावस्य प्राप्तिर्नास्तीत्यभिधायोक्तम्, धीयते। सिद्धे सति यदाध्यानप्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः—भवत्येवञ्जातीयकानामात्मनेपदमिति। किं ... ज्ञापने प्रयोजनम्? पश्यन्ति भृत्या राजानम्; दर्शयते भृत्यान् राजा स्वयमेव—अत्रात्मनेपदं सिद्धं भवतीति। एवञ्जातीयकानामिति कर्तृस्थक्रियाणामित्यर्थः। एवं च ब्रुवता विध्यर्थमेतदित्युक्तं भवति, विशेषप्रतिषेधेन सामान्यविधेरनुमानात्। अत्र दर्शयते भृत्यान् राजेत्येतदेकमुदाहरणमनुपपन्नम्; कर्मान्तरसद्भावात्। तत्र **वृत्तिकारः** 'त्यजेदेकं कुलस्यार्थे' इति न्यायाद् उदाहरणमेतद्गमयितव्यं मन्यते। अस्मिन्नुदाहरणे कर्मव्यापारमात्रे विवक्षिते सिद्धं भवतीत्यर्थः।

अन्ये त्वाहुः—अस्मादेवोदाहरणादणौ ये कर्तृकर्मणी तद्व्यतिरिक्तकर्मान्तरसद्भाव एवात्मनेपदं न भवति, यथा—स्थलमारोहयति मनुष्यानिति, इह त्वणौ कर्तृणां भृत्यानां णौ कर्मत्वमिति। एवं स्मारयत्येनमिति कोकिलस्य कर्मत्वेऽपि प्रत्युदाहरणमुपपन्नम्, 'करेणुरारोहयते निषादिनम्' [माघः] इति प्रयोगश्चोपपन्न इति तेषां सूत्राक्षराण्येव तावदधिकानि, भाष्यं च सर्वमुदाहरणवर्जमनुपपन्नम् ॥

प्रयोगाणां तु निर्वाहो णिचश्चेत्यात्मनेपदात्।<br>
जयादित्यस्य हृदयं गूढमेतत्प्रकाशितम् ॥ ६७ ॥

**भीस्म्योर्हेतुभये ॥** भयमनिष्टापातशङ्कासाधनमात्रं लौकिको हेतुः, न चान्तरेण साधनं क्रिया सम्भव-

**भावबोधिनी**

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।<br>
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥ [वा० प० ३।७।६६]

**'कर्मवत् कर्मणा तुल्यक्रियः' ( पा० सू० १।२।३ ) वहीं कर्मवद्भाव का अतिदेश करता है जहाँ कर्मस्था क्रिया रहती है। अतः देखना, जाना, चढ़ना आदि कर्तृस्थक्रियाओं के विषय में आत्मनेपद—विधानार्थ यह सूत्र बनाया गया है ॥ ६७ ॥**

**'णेः' (णिजन्त से) इसकी अनुवृत्ति होती है। अकर्तृगामी क्रियाफल के लिये यह सूत्र बनाया गया है।**

'णेः' इति वर्त्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। बिभेतेः स्मयतेश्च ण्यन्तादात्मनेपदं भवति हेतुभये। हेतुः=प्रयोजकः कर्त्ता लकारवाच्यः, ततश्चेद्भयं भवति। भयग्रहणमुपलक्षणार्थम्, विस्मयोऽपि तत एव। जटिलो भीषयते। मुण्डो भीषयते। जटिलो विस्मापयते।

हेतुभय इति किम्? कुञ्चिकयैनं भाययति। रूपेण विस्माययति। अत्र कुञ्चिका भयस्य करणम्, न हेतुः॥

**न्यासः**

त्रासः, अनिष्टापाताशङ्का। ततश्चेद् भयं भवति। यदि ततो हेतुसंज्ञकात् प्रयोजकाद् भयं भवत्येवमात्मनेपदं भवति, नान्यथेति। यद्येवम्, स्मयत्यर्थो न विशेषितः स्यात्; यस्माद् भयं बिभेतेरेवार्थो न स्मयतेः, ततश्च रूपेण विस्माययतीत्येवमादावप्यात्मनेपदं स्यात्। मुण्डो विस्मापयत इत्यादौ न स्यादित्यत आह—भयग्रहणमित्यादि। भयग्रहणं हि धात्वर्थोपलक्षणार्थम्। धात्वर्थश्चेत् प्रयोजकाद्भवतीत्ययमर्थो विवक्षितः। तेन विस्मयोऽपि यदि तत एव हेतोर्भवति यद्येषोऽर्थो लभ्यत इति स्मयत्यर्थोऽपि विशेषित एव। विस्मयः = आश्चर्यम्। मुण्ड इति। मुण्डगुणोपेतत्वान् मुण्डः। भीषयते इति। 'ञिभी भये', 'विभाषा लीयतेः' इत्यतो विभाषाग्रहणानुवृत्तेः 'बिभेतेर्हेतुभये' इति पक्ष आत्त्वम्। 'भियो हेतुभये षुक्' इति षुक्। विस्मापयत इति। 'स्मिङ् ईषद्धसने'। 'नित्यं स्मयतेः' इत्यात्त्वम्, 'अर्त्तिह्री' इत्यादिना पुक्।

कुञ्चिकयैनं भाययतीति। करणादत्र भयम्, न हेतोः प्रयोजकात्। तेनात्मनेपदं न भवति। षुगप्यत्र न भवति; न त्वने... हीकारान्तस्यैवेष्यते, 'भियो हेतुभयो षुक्' इत्यत्र भी ई—इतीकारप्रश्लेषनिर्देशात्। रूपेण विस्माययतीति। अत्र करणादेव विस्मयः; न हेतोः॥ ६८॥

**पदमञ्जरी**

तीति विशेषणसामर्थ्यात् कृत्रिमत्वाच्च पारिभाषिकस्य हेतोर्ग्रहणमित्याह—हेतुः प्रयोजक इत्यादि। ततश्चेद्भयं भवतीति। यद्येवम्, स्मयत्यर्थो न विशेषितः स्यात्, न हि स्मयतेर्भयमर्थः, अत आह—भयग्रहणमिति। चित्तविकारस्योपलक्षणमित्यर्थः। विस्मयोऽपि तत एवेति। अत्र चेद्भवतीत्यनुषङ्गः। भीषयत इति। 'भियो हेतुभये षुक्'। भाययत इति। 'बिभेतेर्हेतुभये' इति वैकल्पिकमात्त्वम्। एवं च अत्र षुक् न भवति; तद्विधावाकारप्रश्लेषात्। विस्मापयत इति। 'नित्यं स्मयतेः' इत्यात्त्वम्। 'अर्त्तिह्री' इत्यादिना पुक्। कुञ्चिकयेति। कारणादत्र भयम्, न हेतोः। यद्यपि तद्व्यापारे णिज्विधानात् प्रयोजकसाध्यमेव भयम्, तथापि विशेषणोपादानसामर्थ्यादेवं विज्ञायते—अन्यनिरपेक्षाद्धेतोरेव यद्भयमिति। एवं च मौण्ड्येनं भाययतीत्यत्रापि गुणगुणिनोर्भेदविवक्षायां न भवति। उदाहरणे तु तादात्म्यस्य विवक्षितत्वाद्धेतोरेव भयम्॥ ६८॥

**भावबोधिनी**

णिजन्त 'भी' तथा 'स्मि' धातुओं से, हेतुभय [हेतु से भय] रहने पर आत्मनेपद होता है। यहाँ हेतु = प्रयोजक कर्ता लकार का वाच्य (लिया जाता है), यदि उससे भय होता है, तभी आत्मनेपद होता है। भयग्रहण [चित्तविकार का] उपलक्षण है, विस्मय भी उसी (हेतु = प्रयोजककर्ता से) होना चाहिये। उदा०—जटिलो भीषयते। मुण्डो भीषयते (जटाधारी डरवाता है, मुंड़े हुये शिर वाला डरवाता है।) जटिलो विस्मापयते, मुण्डो विस्मापयते। (जटाधारी विचित्र हँसकर डरवाता है, मुण्ड भी डरवाता है।)

हेतुभये = [हेतु = प्रयोजक कर्ता से भय रहने पर)—यह किसलिये है? कुञ्चिकया एनं भाययति, रूपेण विस्माययति। यहाँ कुञ्चिका = कूची भय का करण = साधन है, प्रयोजक कर्ता = हेतु नहीं है। [अतः आत्मनेपद नहीं होता है। इसलिये षुक् आगम और आत्व भी नहीं होता है]॥ ६८॥

## २१७. गृधिवञ्च्योः प्रलम्भने ॥ ६९ ॥ (२७३९)

'णेः' इति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । 'गृधु अभिकाङ्क्षायाम्' (धा० पा०–१२४७) 'वञ्चु गतौ' (धा० पा० १८९) इत्येतयोर्ण्यन्तयोः प्रलम्भने वर्तमानयोरात्मनेपदं भवति । प्रलम्भनम् = विसंवादनम्, मिथ्याफलाख्यानम् । माणवकं गर्धयते । माणवकं वञ्चयते ।

प्रलम्भन इति किम् ? श्वानं गर्धयति । गर्धनमस्योत्पादयतीत्यर्थः । अहिं वञ्चयति । परिहरतीत्यर्थः ॥

## २१८. लियः सम्माननशालीनीकरणयोश्च ॥ ७० ॥ (२५९२)

'णेः' इति वर्तते । अकर्त्रभिप्रायार्थोऽयमारम्भः । 'लीङ् श्लेषणे' (धा० पा० ११३९) इति दिवादौ पठ्यते, 'ली श्लेषणे' (धा० पा० १५०१) इति च क्र्यादौ; विशेषाभावाद् द्वयोरपि ग्रहणम् । लियो ण्यन्ता-

**न्यासः**

**गृधिवञ्च्योः प्रलम्भने ॥ लियः सम्माननशालीनीकरणयोश्च ॥ विशेषाभावादिति ।** कथं पुनर्विशेषाभावः, यावता निरनुबन्धकत्वं सानुबन्धकत्वञ्चानयोर्विशेषोऽस्त्येव, ततश्च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इत्यनया परिभाषया न लीङो ग्रहणेन भवितव्यम् तदयुक्तमुक्तं विशेषाभावाद् द्वयोरपि ग्रहणमिति ? नैष दोषः; उत्सृष्टानुबन्धको हि लीङ् ल्यन्तो भवति । उत्सृष्टे चानुबन्धे द्वयमेवाभेदकं भवति—अर्थः, शब्दान्तरत्वञ्च । तत्रार्थस्तावदनयोरेक एव शब्दान्तरत्वमपि नास्ति । शब्दान्तरत्वञ्च प्रकृतिभेदविकरणभेदाभ्याम्, न चानयोर्ण्यन्तयोः प्रकृतिभेदः, नापि विकरणभेदोऽस्ति; शब्विकरणत्वात् । यदपि 'विभाषा लीयतेः' तदप्युभयोर्भवति । तथा च वक्ष्यति—'किमिदं लीयतेरिति ? लीनातिलीयत्योरागन्तुकेन यका निर्देशः' ... **न्यग्भावनमिति** । अभिभवनमित्यर्थः । **जटाभिरिति** । हेतौ तृतीया । जटा हि पूजाद्यधिगमहेतुभूताः । तथा हि-यस्य जटाः सन्ति लोके महानयं तपस्वीत्युपजातसंप्रत्ययैः पूज्यते ॥ ६९ ॥

**मिथ्योपपदात् कृञोऽभ्यासे ॥ मिथ्योपपदादिति ।** उपोच्चरितं पदमुपपदम्, मिथ्याशब्द उपपदं यस्य स तथोक्तः । **पदं मिथ्या कारयत इति ।** अत्रात्मनेपदेनाभ्यासस्य द्योतितत्वात् 'नित्यवीप्सयोः' इति द्विर्वचनं न

**पदमञ्जरी**

**गृधिवञ्च्योः प्रलम्भने । परिहरतीत्यर्थ इति ।** वर्जयतीति यावत् ॥ ६९ ॥

**लियः सम्माननशालीनीकरणयोश्च ॥ विशेषाभावादिति ।** निरनुबन्धकपरिभाषा तु 'वामदेवाड्ड्यड्ड्यौ' इत्यत्र ज्ञापिता प्रत्ययग्रहणविषयैवेति मन्यते । **संमानने शालीनीकरणे च वर्तमानादिति ।** संमाननं विषयः, न धात्वर्थः । यदाह—**पूजामधिगच्छतीत्यर्थ इति ।** धात्वर्थे तु पूजयतीति वाच्यं स्यात्, यथा न्यक्करो-

**भावबोधिनी**

'णेः' ( णिजन्त से ) इसकी अनुवृत्ति होती है । अकर्तृगामी क्रियाफल के लिये यह आरम्भ किया गया है । प्रलम्भन अर्थ में विद्यमान 'गृधु अभिकाङ्क्षायाम्' और 'वञ्चु गतौ' इनसे आत्मनेपद होता है । प्रलम्भन = विसम्वाद, मिथ्याफलकथन । ( ठगना अर्थ ) । उदा०—माणवकं गर्धयते ( बच्चे को प्रलोभन देता है ); माणवकं वञ्चयते [बच्चे को ठगता है ।]

'प्रलम्भने' ( ठगना ) इसका क्या फल है ? श्वानं गर्धयति । इस ( कुत्ते ) की इच्छा उत्पन्न कराता है, यह अर्थ है । अहिं वञ्चयति । साँप को दूर करता है—यह अर्थ है ॥ ६९ ॥

'णेः' की अनुवृत्ति होती है । अकर्तृगामी क्रियाफल के विषय में यह सूत्र बनाया गया है । 'लीङ् श्लेषणे' यह दिवादि गण में पढ़ा गया है और 'ली श्लेषणे' यह क्र्यादि में । कोई विशेष कारण न होने से इन दोनों का ग्रहण होता है । सम्मानन, शालीनीकरण और प्रलम्भन—इन अर्थों में वर्तमान, णिजन्त 'ली' धातु से आत्मनेपद होता है । सम्मानन = पूजन । शालीनीकरण = न्यग्भावन = दबाना । उदा०—जटाभिरालापयते । जटाओं के कारण पूजा प्राप्त

त्सम्मानने शालीनीकरणे च वर्त्तमानादात्मनेपदं भवति, 'च' शब्दात् प्रलम्भने च। सम्माननम् = पूजनम्। शालीनीकरणम् = न्यग्भावनम्। जटाभिरालापयते। पूजां समधिगच्छतीत्यर्थः। श्येनो वर्त्तिकामुल्लापयते। न्यक्करोतीत्यर्थः। प्रलम्भने—कस्त्वामुल्लापयते। विसंवादयतीत्यर्थः। 'विभाषा लीयतेः' (६.१.५१) इति वाऽऽत्वं विधीयते। तदस्मिन् विषये नित्यमन्यत्र विकल्पः। व्यवस्थितविभाषा हि सा।

सम्माननादिष्विति किम्? बालकमुल्लापयति॥

## २१९. मिथ्योपपदात् कृञोऽभ्यासे॥ ७१॥ (२७४०)

'णेः' इति वर्त्तते। अकर्त्रभिप्रायार्थोऽयमारम्भः। ण्यन्तात्करोतेर्मिथ्योपपादात्मनेपदं भवति अभ्यासे। अभ्यासः = पुनः पुनः करणम्, आवृत्तिः। पदं मिथ्या कारयते। सापचारं स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः।

### न्यासः

भवति। **सापचारमिति**। सदोषम्। अनेन मिथ्याशब्दस्यार्थमाचष्टे। **स्वरादिदुष्टमिति**। पूर्वस्यैवार्थं व्यक्तीकरोति। आदिशब्देन रूपस्य परिग्रहः। **असकृदिति**। अभ्यासशब्दार्थमुदाहरणेन दर्शयति॥ ७०॥

**स्वरितञितः कर्त्रभिप्राये क्रियाफले॥ कर्त्रभिप्राय इति**। कर्त्तारमभिप्रैतीति 'कर्मण्यण्'। यदि [illegible]न्येन यत्र क्रियाफलं कर्त्तारमभिप्रैति तत्रात्मनेपदम्, तदेहापि स्यात्—पचन्ति पाचकाः, यजन्ति याजका शरीरे[illegible]था ह्यत्र क्रियाफलं दक्षिणा याजकान् कर्त्तॄनभिप्रैति, भृतिश्च पाचकानित्यत आह—**क्रियायाः फल**-[illegible] प्रधानभूतं यत् फलं क्रियायास्तदिह गृह्यते। न च दक्षिणादिकं क्रियाफलं प्रधानभूतम्, ततो न भवति; न त्व[illegible]ङ्गः। किं पुनस्तत्प्रधानभूतमित्यत आह—**यदर्थमित्यादि**। एतेन यदुद्दिश्यासौ यागादिक्रियारभ्यते विशे[illegible] प्रधानभूतमिति दर्शयति। तत् पुनः स्वर्गादि, न तु दक्षिणादि। तथा हि—स्वर्गाद्यर्थं यागादिक्रियारभ्यते, न तु दक्षिणाद्यर्थम्। **यदर्थमिति**। क्रियाविशेषणमेतत्। यच्छब्देन क्रियायाः प्रधानभूतं फलं निर्दिश्यते। यदर्थः

### पदमञ्जरी

तीत्यर्थ इति। अकर्मकश्चायमस्मिन् प्रयोगे पूजाख्यस्य कर्मण आत्मनेपदसहितेन धातुनैवोपात्तत्वात् पुत्रीयतीतिवदित्याहुः। **जटाभिरिति**। हेतौ तृतीया, यस्य हि जटाः सन्ति लोके स पूज्यते॥ ७०॥

**मिथ्योपपदात् कृञोऽभ्यासे**॥ उपोच्चारितं पदमुपपदम्, मिथ्याशब्द उपपदं यस्य स तथोक्तः। **मिथ्या कारयते इति** आत्मनेपदेनेवाभ्यासस्य द्योतितत्वात् 'नित्यवीप्सयोः' इति द्विर्वचनं न भवति। **सदोषमिति**। एतेन मिथ्याशब्दस्यार्थमाचष्टे। अस्यैव विवरणम्—**स्वरादिदुष्टमिति**। आदिशब्देन रूपं गृह्यते।

### भावबोधिनी

करता है, यह अर्थ है। श्येनो वार्त्तिकामुल्लापयते। बाज बतख को दबाता है, यह अर्थ है। प्रलम्भन में—कः त्वाम् उल्लापयते—कौन तुमको ठगता है यह अर्थ है। 'विभाषा लीयतेः' (पा० सू० ६।१।५१) विकल्प से आत्व का विधान करता है। वह आत्व इस सूत्र के विषय में नित्य होता है, अन्यत्र विकल्प है। क्योंकि वह व्यवस्थित विभाषा है।

सम्माननादि में—इसका क्या फल है? बालकम् उल्लापयति। (बालक को प्यार करता है, यहाँ नहीं होता है।)॥ ७०॥

'णेः' इसकी अनुवृत्ति होती है। अकर्तृगामी क्रियाफल के लिये यह सूत्र बनाया गया है। मिथ्या जिसके उपपद है ऐसी णिजन्त कृञ् धातु से अभ्यास अर्थ में आत्मनेपद होता है। अभ्यास = बार-बार करना, आवृत्ति। उदा०—पदं मिथ्या कारयते। सापचार = स्वरादिदोष से दुष्ट पद का अनेक बार उच्चारण कराता है, यह अर्थ है।

मिथ्या उपपद हो—इसका क्या फल है? पदं सुष्ठु कारयति। पद का शुद्ध उच्चारण कराता है। [यहाँ आत्मनेपद नहीं होता है।]

**मिथ्योपपदादिति किम् ? पदं सुष्ठु कारयति । कृञ इति किम् ? पदं मिथ्या वाचयति । अभ्यास इति किम् ? पदं मिथ्या कारयति । सकृदुच्चारयति ॥**

## २२०. स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥ ७२ ॥ (२५५१)

**'णेः' इति निवृत्तम् । शेषात्कर्त्तरि परस्मैपदे (१.३.७८) प्राप्ते स्वरितेतो ये धातवो ञितश्च तेभ्य आत्मनेपदं भवति, कर्त्तारं चेत्क्रियाफलमभिप्रैति । क्रियायाः फलं = क्रियाफलं प्रधानभूतं यदर्थमसौ क्रिया आरभ्यते तच्चेत् कर्तुर्लकारवाच्यस्य भवति । यजते । पचते । ञितः खल्वपि—सुनुते । कुरुते । स्वर्गादि प्रधानफलमिह कर्त्तारमभिप्रैति ।**

**न्यासः**

प्रयोजनं यस्य क्रियारम्भस्य तत् तथोक्तम् । कथं पुनः सामान्योक्तौ प्रधानस्य क्रियाफलस्य ग्रहणं शक्यते विज्ञातुम् ? फलग्रहणात् । यदीह फलमात्रस्य ग्रहणमभिप्रेतं स्यात्, तदा फलग्रहणमनर्थकं स्यात्; व्यवच्छेद्याभावात् । नास्त्येव हि स विषयो यत्र क्रियाफलं कर्त्तारं नाभिप्रैति; ततश्च कर्त्रभिप्राये क्रियाया इत्येवं ब्रूयात् । एवमप्युक्ते षष्ठ्या क्रियाया सम्बन्धिनि कर्त्रभिप्राये प्रत्यायिते सामर्थ्यात् फलमेव क्रियायाः कर्त्रभिप्रायं गम्यते । न हि फलादन्यत् क्रियासम्बन्धि कर्त्तारमभिप्रैति । तस्मात् फलग्रहणसामर्थ्यात् प्रधानं फलं गृह्यते । अथ वा—प्रधानत्वादेव प्रधानं फलं गृह्यते । तथा चोक्तम्—'प्रधाने कार्यसंप्रत्ययात् सिद्धमिति' । अस्मिन् व्याख्याने ग्रहणं स्पष्टार्थम्, कर्तर्यात्मनेपदविधानात् । प्रत्यासत्तेर्यस्तस्य वाच्यः कर्त्ता यदि तस्यैव तत् फलं विज्ञायत इत्याह—**तच्चेत्यादि** । गतार्थम् । **स्वर्गादीति** । आदिशब्देनौदनादिकमपि गृह्यते ॥७१ ॥ धीयते ।

**तथापित्यादिना** दक्षिणादेः फलस्याप्राधान्यं दर्शयति । यदर्थं सा क्रियारभ्यते तत्प्रधानमिह।५

**पदमञ्जरी**

**असकृदिति** अभ्यासं दर्शयति । **उच्चारयतीत्यर्थ इति** ण्यन्तस्य करोतेरुच्चारणे वृत्तिरनेकार्थत्वाद्धातूनाम् । एवं च प्रकृतिभूतः करोतिरुच्चारणे वर्त्तते, अकर्मकश्च ॥ ७१ ॥

**स्वरितञितः कर्त्रभिप्राये क्रियाफले ॥** कर्तारमभिप्रैतीति कर्त्रभिप्रायम्, 'कर्मण्यण्', क्रियाफलं चेह कर्मैवेति नास्ति नियमः तेनाकर्मकेभ्योऽपि यजिप्रभृतिभ्यः स्वर्गादिके फले कर्तृगामिन्ययं विधिर्भवत्येव । **कर्त्तारं चेदिति** । क्रियाफलस्य कर्तृगामित्वद्योतनायात्मनेपदं भवतीत्यर्थः । यदि यच्च यावच्च क्रियानन्तरभावि फलं तत्र कर्तृगामिन्ययं विधिर्भवति, इहापि स्याद्—यजन्ति याजकाः, पचन्ति पाचका इति; दक्षिणादेः कर्तृगामित्वादित्यत्र आह—**प्रधानभूतमिति** । किं पुनस्तदित्यत आह—**यदर्थमिति** । यदुद्दिश्येत्यर्थः । **क्रिया आरभत इति** । सामग्रीसमवधानात्मिका आद्या प्रवृत्तिः = आरम्भः, यामन्तरेण याजकादीनामप्रवृत्तिः, स्वर्गादिकं हि फलं प्रेक्षुः सामग्रीं समवधाप्य प्रवर्तयति, सा प्रवर्तिता यथायथं प्रवर्त्तते । कथं पुनरेतल्लभ्यते—प्रधाने फले कर्त्रभिप्राय इति ? प्रधानत्वादेव । किञ्च—यत् किंचन फलं सर्वत्र कर्त्रभिप्रायं भवति । ननु यत्र क्रियाभ्यासमात्रे

**भावबोधिनी**

कृञः—इसका क्या फल है ? पदं मिथ्या वाचयति । पद को अशुद्ध कहलवाता है ।

अभ्यासे—इसका क्या फल है ? पदं मिथ्या कारयति । पद का एक बार अशुद्ध उच्चारण कराता है ॥७१॥

'णे' इसकी निवृत्ति होती है । 'शेषात् कर्तरि परस्मैपदम्' ( पा० सू० १।३।७८ ) इससे परस्मैपद प्राप्त रहने पर स्वरितेत् और ञित् जो धातुयें हैं उनसे आत्मनेपद होता है यदि क्रिया का फल कर्ता से सम्बद्ध होता है, करने वाले को ही प्राप्त होता है । क्रिया का फल = क्रियाफल प्रधानभूत, जिसके लिये वह क्रिया आरम्भ की जाती है, वह यदि लकारवाच्य कर्ता का ही होता है । [क्रियाफल कर्तृगामी रहने पर ही आत्मनेपद होता है ।] उदा०—यजते (अपने लिये याग करता है ।) पचते (अपने लिये पकाता है, इन दोनों में स्वरित स्वर इत् है ।) ञित् से भी आत्मनेपद होता है—सुनुते । कुरुते । यहाँ यागादि का प्रधान फल कर्ता को ही प्राप्त होता है । [षुञ्, कृञ्—ञित् हैं ।]

**'कर्त्रभिप्राये' इति किम् ? यजन्ति याजकाः । पचन्ति पाचकाः । कुर्वन्ति कर्मकराः । यद्यपि दक्षिणा भृतिश्च कर्तुः फलमिहास्ति, तथापि न तदर्थः क्रियारम्भः ॥**

**२२१. अपाद् वदः ॥ ७३ ॥ (२७४१)**

**'कर्त्रभिप्राये' इति वर्त्तते । अपपूर्वाद्वदेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति । धनकामो न्यायमपवदते । 'न्यायापवादेन धनमर्जयिष्यामि' इति मन्यते ।**

**न्यासः**

फलम् । स्वर्गाद्यर्थञ्च यागादिक्रियारभ्यते, न दक्षिणाद्यर्थम् । अतोऽप्रयोजकत्वात् तदप्रधानम् । तेन यद्यपि तत् कर्त्तारमभिप्रैति तथाप्यात्मनेपदं न भवति ।

अथाभिप्रग्रहणं किमर्थम् ? विप्रकृष्टेऽपि फले यथा स्यात् । द्विविधं हि क्रियाफलम्—आसन्नम्, विप्रकृष्टञ्च । **तत्रासन्नम्**—यस्य व्यापारानन्तरमेव निष्पत्तिः । **विप्रकृष्टन्तु**—उपरतेषु व्यापारेषु यन्निमित्तान्तरमपेक्ष्य कालविप्रकर्षकृतं संस्कारपरिपाकाच्चिराद् भवति । तत्राद्यमासन्नत्वाद् दृष्टत्वादुत्पत्ति प्रत्ययव्यभिचाराच्च प्रधानम् । इतरत् पुनर्विप्रकृष्टत्वादनुमेयत्वात् सम्भवव्यभिचाराच्चाप्रधानम् । सम्भवति हि विप्रकृष्टस्य कालान्तरसम्बन्धिनः फलस्य सहकारिवैकल्याद् विरुद्धप्रत्ययोपनिपाताच्चोत्पत्तिं प्रति व्यभिचारः । यद्यपि तदु-[illegible]स्य क्रियारम्भात् तदपि प्रधानम्, तथाप्यविप्रकृष्टफलापेक्षया तस्याप्राधान्यमस्त्येव । तत्र यद्यभिप्रग्रहणं न शरीर[illegible]द्धा लुनीत पुनीत इत्यादावेव स्याद्—यत्राविप्रकृष्टं क्रियाफलम् । यजते इत्यादौ तु न स्याद्—यत्र [illegible]र्गादिकं क्रियाफलम्, प्रधाने कार्यसंप्रत्ययात् । अभिप्रग्रहणे तु न दोषः; यस्मादभिराभिमुख्ये वर्त्तते, भवति; न त[illegible]

विशे-

**पदमञ्जरी**

[illegible]त्पर्यम्, तत्र न किञ्चित्फलं कर्तृगामि ? तत्रापि किञ्चित्फलं कर्तृगामि; किं कौशलम् ? पुनः पुनरभ्यासे हि क्रियासु कौशलं भवति, तस्मात्प्रधाने फले कर्त्रभिप्राय इति सिद्धम् । **यजत इति** । केचिदाहुः—'देवतायै इदं न मम' इत्येवंविधो मानसः सङ्कल्पो याग इति, तेषां यजन्ति याजका इति ऋत्विग्व्यापारे प्रयोगो नोपपद्यते । अन्ये त्वाहुः—'होमादिष्वभिष्टवादिऋत्विग्व्यापारो यागः' इति, तेषां यजतिव्यापारप्रयोगो नोपपद्यते । एवं तर्ह्युभयं यजेरर्थः—ऋत्विग्व्यापारश्च, यजमानव्यापारश्च । तदुक्तम्—यजादिषु चाविपर्यासो नानाक्रियाणां यज्यर्थत्वादिति ।

**न तदर्थः क्रियारम्भ इति** । ननु ऋत्विजामारम्भस्तदर्थ एव, नैतदेवम्; 'आद्या प्रवृत्तिरारम्भः' इत्युक्तम्, सा च यजमानस्य—स्वर्गमहं लभेयेति, न पुनरिमे दक्षिणां लभेरन्निति । यथा—अवघाते क्रियमाणे स्वेदश्च भवति वैतुष्यं च भवति, भृतिश्च लभ्यते, अथ च वैतुष्यार्थ एवावघातः; तद्वदत्रापि । तदुक्तं हरिणा—

यस्यार्थस्य प्रसिद्ध्यर्थमारभ्यन्ते पचादयः ।
तत्प्रधानं फलं तेषां न लाभादि प्रयोजनम् ॥ (वा० प० ३·१२·१८) इति ।

**भावबोधिनी**

**कर्त्रभिप्राये**—[ कर्ता को प्राप्त होने वाला होने पर ] यह किसलिये है ? यजन्ति याजकाः पचन्ति पाचकाः । कुर्वन्ति कर्मकराः [ याजक यज्ञ करते हैं, रसोइये भोजन पकाते हैं, नौकर काम करते हैं ।] यद्यपि इनमें दक्षिणा और वेतन फल कर्ता लोगों को मिलता है तथापि यह प्रधान फल नहीं है, इन फलों के लिए क्रियायें नहीं की जाती हैं । [ इसीलिए भर्तृहरि का कहना है कि जिस फल को लक्ष्य मान कर कोई क्रिया की जाती है वही उसका प्रधान फल है, वही कर्ता को मिलने पर आत्मनेपद होता है । ] ॥७२॥

**'कर्त्रभिप्राये'** [ कर्तृगामी क्रियाफल रहने पर ] इसकी अनुवृत्ति होती है । कर्तृगामी क्रियाफल प्रतीत होने पर 'अप' पूर्वक वद् धातु से आत्मनेपद होता है । उदा०—धनकामो न्यायमपवदते ( धन का लोभी व्यक्ति न्याय छोड़कर बोलता है ।) न्याय छोड़ कर धन पैदा करूंगा—ऐसा मानता है ।

'कर्त्रभिप्राये क्रियाफले' इत्येव—अपवदति ॥

## २२२. णिचश्च ॥ ७४ ॥ (२५६४)

'कर्त्रभिप्राये क्रियाफले' इति वर्त्तते। णिजन्तादात्मनेपदं भवति, कर्त्रभिप्राये क्रियाफले। कटं कारयते। ओदनं पाचयते।

कर्त्रभिप्राय इत्येव—कटं कारयति परस्य ॥

## २२३. समुदाङ्भ्यो यमोऽग्रन्थे ॥ ७५ ॥ (२७४२)

### न्यासः

प्रशब्दस्त्वारम्भे। तेन प्रारम्भमात्रस्याभिमुख्ये फलनिष्पत्तौ बुद्धावाश्रीयमाणायां सर्वत्र सिद्धं भवति। ननु चासत्यभिप्रग्रहणे प्रकृतीनां यजिप्रभृतीनामनुबन्धविशेषासञ्जनादेव विप्रकृष्टेऽपि फले भविष्यति; अन्यथा हि तस्य वैयर्थ्यं स्यात्, न; अभिचारादौ यत्राविप्रकृष्टं फलं दृष्टमस्ति तत्र तस्य सार्थकत्वात्। तस्माद् विप्रकृष्टेऽप्यप्रधाने फले यथा स्यादित्येवमर्थमभिप्रग्रहणं कर्तव्यमेव ॥ ७२ ॥

अपाद्वदः ॥ न्यायापवादेनेत्यादिना येनाभिप्रायेण धनकामो न्यायमपवदते तं दर्शयति ॥ ७३ ॥

णिचश्च ॥७४॥ समुदाङ्भ्यो यमोऽग्रन्थे ॥ उद्यच्छतीति। चिकित्सां वैद्य इति। चिकित्साशास्त्रमधि-

### पदमञ्जरी

इह स्वामिदासौ पचत इति। क्रियामात्रविवक्षायां परस्मैपदं भवति। स्वामिगते तु धर्मे दासे धीयते। पिते स्वामिदासौ पचेते इत्यात्मनेपदं भवति।

अथाभिप्रग्रहणं किमर्थम्? विप्रकृष्टेऽपि फले यथा स्याद्। द्विविधं क्रियाफलम्, दृष्टम्—अन्नपुत्रवृष्टिशत्रुवधादिकम्, अदृष्टं च स्वर्गादि। तत्र पूर्वं प्रत्यासन्नमवश्यम्भावीति प्रधानम्, इतरत्तु विधुरप्रत्ययोपनिपाते सति व्यभिचारसंभवाद्विप्रकृष्टत्वाच्चाप्रधानम्। संभवति ह्यविकलमनुष्ठातुं यागस्यापि मध्ये वैराग्योत्पत्तौ मोक्षार्थप्रवृत्तौ सत्यामनुत्पत्तिः स्वर्गस्य। ततश्चेह तस्य ग्रहणं न स्याद्। अभिप्रग्रहणे तु सति अभिराभिमुख्ये वर्तते, प्रशब्दस्त्वारम्भ इति कर्त्तारं प्रत्याभिमुख्येन क्रियाफलं चेत्तत्प्रैति एतुम्=आरभते एवमात्मनेदं भवतीत्यर्थो भवति। तथा च यद्यपि स्वर्गादिकं स्वरूपेणान्नादिवत् तदानीं नैति तस्य त्वङ्कुरावस्था कर्त्तारमेतीति तद्द्वारेण फलमेवैतुमारभत इति सर्वत्र सिद्ध्यति। फलस्यैव ह्यङ्कुरावस्था पूर्वशब्दवाच्या ॥ ७२ ॥

अपाद्वदः ॥७३॥ णिचश्च ॥ अत्र कश्चिदाह—इदमात्मनेपदं चुरादिणिचो न भवति, कुतः? ज्ञापकात्। किं ज्ञापकम्? लक्षयतेः स्वरितेत्त्वमिति। नात्रासभाषितमस्ति। पारायणेऽपि चुरादिणिच आत्मनेपदमुदाहृतम्—एष विधिश्चुरादिणिजन्तात्स्यादिति। कश्चन निश्चुनुते स्म—अप्राप्तवचनेऽत्र न किंचन दृष्टम्, लक्षयतेः स्वरितेत्त्वमनार्षम् ॥ ७४ ॥

समुदाङ्भ्यो यमोऽग्रन्थे ॥ उद्यच्छति चिकित्सामित्यत्र अधिगमपूर्वके उद्यमे यमिर्वर्त्तते, चिकित्सा-

### भावबोधिनी

कर्त्रभिप्राये (कर्तृगामी क्रियाफल रहने पर)—इतना ही देखना चाहिए-अपवदति (झूठ बोलता है।) ॥७३॥

'कर्त्रभिप्राये क्रियाफले' इसकी अनुवृत्ति होती है। कर्तृगामी क्रियाफल रहने पर णिजन्त धातु से आत्मनेपद होता है। उदा०—कटं कारयते। चटाई बनवाता है। ओदनं पाचयते। चावल पकवाता है। [ यहाँ बनवाने वाले को ही चटाई और भात मिलता है। ] कर्त्रभिप्राये—इतना ही; कटं कारयति परस्य ( दूसरे की चटाई बनवाता है। आत्मनेपद नहीं होता है। ) ॥७४॥

'कर्त्रभिप्राये' इसकी अनुवृत्ति होती है। कर्तृगामी क्रियाफल रहने पर, सम्, उद्, आङ्, ये जिसके पूर्व में हैं ऐसी यम् धातु से आत्मनेपद होता है, अगर ग्रन्थविषय का प्रयोग न हो। उदा०—व्रीहीन् संयच्छते। चावल इकट्ठे

**'कर्त्रभिप्राये'** इति वर्त्तते। सम्, उद्, आङ्—इत्येवम्पूर्वाद् यमेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति, ग्रन्थविषयश्चेत्प्रयोगो न भवति। व्रीहान् संयच्छते। भारमुद्यच्छते। वस्त्रमायच्छते। आङ्पूर्वाद-कर्मकाद् 'आङो यमहनः' (१.३.२८) इति सिद्धमेवात्मनेपदम्। सकर्मकार्थमिदं पुनर्ग्रहणम्।

अग्रन्थ इति किम्? उद्यच्छति चिकित्सां वैद्यः।

कर्त्रभिप्राय इत्येव—संयच्छति, उद्यच्छति, आयच्छति॥

## २२४. अनुपसर्गाज् ज्ञः॥ ७६॥ (२७४३)

**'कर्त्रभिप्राय'** इति वर्त्तते। अनुपसर्गाज्जानातेः कर्त्रभिप्राये क्रियाफले आत्मनेपदं भवति। गां जानीते, अश्वं जानीते।

अनुपसर्गादिति किम्? स्वर्गलोकं न प्रजानाति मूढः।

'कर्त्रभिप्राय' इत्येव—देवदत्तस्य गां जानाति॥

## २२५. विभाषोपपदेन प्रतीयमाने॥ ७७॥ (२७४४)

### न्यासः

गन्तुमुद्यमं करोतीत्यर्थः॥ ७५॥

**अनुपसर्गाज् ज्ञः॥** नास्योपसर्गाः सन्तीति बहुव्रीहिः। सकर्मकार्थश्चेदम्। अन्यत्र 'अकर्मकाच्च' इत्येवं [illegible]त्॥ ७६॥

**विभाषोपपदेन प्रतीयमाने॥** तत्र 'स्वरितञितः' इत्यादीनि पञ्च सूत्राण्यनुवर्त्तन्ते। कर्त्रभिप्राये [illegible] [illegible]फले द्योत्य इति। केन द्योत्ये? प्रकृतत्वादात्मनेपदेनेति विज्ञेयम्। तदुपपदेन द्योतिते न प्राप्नोतीति।

### पदमञ्जरी

शास्त्रमधिगन्तुमुद्यमं करोतीत्यर्थः॥ ७५॥

**अनुपसर्गाज्ज्ञः॥** सकर्मकार्थमिदम्, अन्यत्र 'अकर्मकाच्च' इति सिद्धत्वात्। **गां जानीत इति। स्वर्गलोकं न प्रतिजानातीति।** 'संप्रतिभ्यामनाध्याने' इत्यनेनापि न भवति; आध्यानविषयत्वात्। **प्रजानातीति वा पाठः॥** ७६॥

**विभाषोपपदेन प्रतीयमाने॥** अप्राप्तविभाषेयमित्याह—**तदुपपदेनेति।** अत्र च 'स्वरितञितः' इत्या-

### भावबोधिनी

करता है। भारम् उद्यच्छते। बोझा उठाता है। वस्त्रम् आयच्छते। वस्त्र फैलाता है। 'आङ्' उपसर्गयुक्त अकर्मक यम् से 'आङो यमहनः' (पा० सू० १।३।२८) से ही आत्मनेपद सिद्ध है, सकर्मक के लिए यह सूत्र पुनः बनाया गया है।

'अग्रन्थे' इसका क्या फल है? उद्यच्छति चिकित्सां वैद्यः। [ वैद्य चिकित्साशास्त्र पढ़ने का उद्योग करता है। ]

कर्त्रभिप्राये—इतना ही होना चाहिए—संयच्छति, उद्यच्छति, आयच्छति। ( यहाँ क्रियाफल दूसरे को मिलने के कारण परस्मैपद होता है) ॥७५॥

'कर्त्रभिप्राये' इसकी अनुवृत्ति होती है। कर्तृगामी क्रियाफल रहने पर उपसर्गरहित ज्ञा धातु से आत्मनेपद होता है। उदा०—गां जानीते (अपनी गाय को जानता है); अश्वं जानीते (अपने घोड़े को पहचानता है)।

अनुपसर्गात्—इसका क्या फल है? स्वर्गं लोकं न प्रजानाति मूढः। मूर्ख पुरुष स्वर्ग को नहीं जानता है।

कर्त्रभिप्राये—इतना ही—देवदत्तस्य गां जानाति (देवदत्त की गाय जानता है, यहाँ कर्तृगामी फल नहीं है। अतः आत्मनेपद नहीं होता है।) ॥७६॥

'स्वरितञितः' ( पा० सू० १।२।३ ) आदि पाँच सूत्रों से वहाँ आत्मनेपद किया गया है जहाँ कर्तृगामी क्रिया फल द्योतित रहता है, किन्तु उपपद द्वारा द्योतित रहने पर आत्मनेपद नहीं प्राप्त होता है, अतः यह सूत्र आरम्भ किया

'स्वरितञितः' (१.३.७२) इति पञ्चभिः सूत्रैरात्मनेपदं कर्त्रभिप्राये क्रियाफले द्योतिते विहितम्, तदुपपदेन द्योतिते न प्राप्नोतीति वचनमारभ्यते। समीपे श्रूयमाणं शब्दान्तरम् = उपपदम्, तेन प्रतीयमाने कर्त्रभिप्राये क्रियाफले विभाषाऽऽत्मनेपदं भवति। स्वं यज्ञं यजति, स्वं यज्ञं यजते। स्वं कटं करोति, स्वं कटं कुरुते। स्वं पुत्रमपवदति, स्वं पुत्रमपवदते। एवं पञ्चसूत्र्यामुदाहार्यम् ॥

## २२६. शेषात् कर्तरि परस्मैपदम् ॥७८॥ (२१५९)

पूर्वेण प्रकरणेनात्मनेपदनियमः कृतः, न परस्मैपदनियमः, तत् सर्वतः प्राप्नोति, तदर्थमिदमुच्यते। येभ्यो धातुभ्यो येन विशेषणेनात्मनेपदमुक्तं ततो यदन्यत्स शेषः। शेषात्कर्तरि परस्मैपदं भवति शेषादेव नान्यस्मात्। 'अनुदात्तङित आत्मनेपदम्' (१.३.१२) उक्तम्—आस्ते, शेते। ततोऽन्यत्र परस्मैपदं भवति—याति, वाति। 'नेर्विशः' (१.३.१७) आत्मनेपदमुक्तम्–निविशते। ततोऽन्यत्र परस्मैपदम्–आविशति, प्रविशति।

**न्यासः**

उक्तार्थानामप्रयोगात्। एतेनाप्राप्तविभाषेयमिति दर्शयति। ननु च स्वं यज्ञं यजते इत्यत्र स्वशब्दस्योपपदत्वन्नोपपद्यते ? यतः 'तत्रोपपदं सप्तमीस्थम्' इति द्वितीयधात्वधिकारे यत् सप्तमीनिर्दिष्टं तदुपपदसंज्ञं भवति, न च स्वशब्द एवंविध इत्याह—**समीपे श्रूयमाणमित्यादि**। एतेनोपोच्चारितं पदमुपपदमित्यन्वर्थस्योपपदस्य ग्रहणम्, न पारिभाषिकस्येति दर्शयति। एतच्च पारिभाषिकस्यासम्भवाल्लभ्यते। **स्वं यज्ञमित्यादिना** पञ्चसूत्र्यां यदाद्यं सूत्रं तत्रोदाहरति। **स्वं पुत्रमित्यादिना** यद् द्वितीयं तत्र। **एवं पञ्चसूत्र्यामुदाहार्यमिति**। अन्यत्रापीति शे.. पञ्चसूत्र्यन्तर्गते सूत्रे यदुदाहृतं ततोऽन्यत्राप्युदाहार्यमित्यर्थः। स्वं कटं कारयते, कारयति वा। स्वं धीयते। संयच्छते, संयच्छति वा। स्वं भारमुद्यच्छते, उद्यच्छति वा। स्वं वस्त्रमायच्छते, आयच्छति वा। ..... जानीते, जानाति वेति। एतानि 'णिचश्च' इत्यादिषु सूत्रेषु यथायोगमुदाहरणानि ॥ ७७ ॥

**शेषात् कर्त्तरि परस्मैपदम्** ॥ **पूर्वेणेति**। 'अनुदात्तङित' इत्यादिना। **सर्वत्र प्राप्नोतीति**। अशेषेभ्योऽपि। **तदर्थमिदमुच्यत इति**। सर्वत्र परस्मैपदे प्रसक्ते तन्निवृत्त्यर्थम्; अर्थशब्दस्य निवृत्तिवचनत्वात्, यथा—मशकार्थो धूम इति। तदेतेनैतत् नियमार्थमित्युक्तं भवति। **येभ्यो धातुभ्य** इत्यादिना शेषत्वं दर्शयति। **येन विशेषणेनेति**। अनुबन्धादिना। **याति, वातीत्य**नुबन्धशेषस्योदाहरणम्। **आविशति, प्रविशती**त्युपसर्गशेषस्यार्थ-

**पदमञ्जरी**

रभ्य पञ्च सूत्राण्यनुवर्तन्ते। **समीपे श्रूयमाणमिति**। न तु पारिभाषिकम्; असंभवात्। **एवं पञ्चसूत्र्यामुदाहार्यमिति**। न केवलमुदाहृतयोर्द्वयोः; अपि तु पञ्चस्वपि सूत्रेष्वित्यर्थः। स्वं यत्नं कारयते कारयति वा। स्वं व्रीहिं संयच्छते संयच्छतीति वा। स्वां गां जानीते जानातीति वा। ७७ ॥

**शेषात्कर्त्तरि परस्मैपदम्**। **आत्मनेपदनियमः कृत इति**। प्रकृत्याश्रयोऽर्थाश्रयश्च, अनुदात्तङितोरेवात्मनेपदं भावकर्मणोरेवेति। **सर्वत इति**। सर्वाभ्यः प्रकृतिभ्यः सर्वेषु चार्थेष्वित्यर्थः। **तदर्थमिति**। सर्वतः प्राप्तिनिवृत्त्यर्थमित्यर्थः। **येन विशेषणेनेति**। अनुबन्धादिना। याति वातीत्यनुबन्धशेषः, आविशति प्रविशतीत्युप-

**भावबोधिनी**

जा रहा है, समीप में सुनाई देने वाला दूसरा शब्द उपपद होता है, उसके द्वारा कर्तृगामी क्रियाफल प्रतीत कराये जाने पर विकल्प से आत्मनेपद होता है। उदा०—स्वं यज्ञं यजति, स्वं यज्ञं यजते। अपना यज्ञ करता है। स्वं कटं करोति, स्वं कटं कुरुते। अपनी चटाई बनाता है। स्वं पुत्रमपवदति, स्वं पुत्रमपवदते। अपने पुत्र को झूठ सच कहता है। इस प्रकार पाँच सूत्रों के और उदाहरण देने चाहिये ॥७७॥

पूर्वोक्त प्रकरण द्वारा आत्मनेपद का नियम किया गया है, परस्मैपद का नहीं। वह परस्मैपद सभी से प्राप्त होता है, उसका नियम करने के लिए यह कहा जा रहा है। जिन धातुओं से जिस विशेषण के साथ आत्मनेपद कहा गया है, उससे भिन्न जो है, वह शेष है। शेष से कर्ता अर्थ में परस्मैपद होता है—शेष से ही होता है, अन्य से नहीं।

कर्त्तरीति किम् ? पच्यतें, गम्यतें ।

कर्मकर्तरि कस्मात्परस्मैपदं न भवति—पच्यतें ओदनः स्वयमेव ? 'कर्त्तरि कर्मव्यतिहारे (१.३.१४) इति द्वितीयं कर्तृग्रहणमनुवर्त्ततें; तेंन कर्त्तेव यः कर्त्ता (म० भा० १.३.३८), तत्र परस्मैपदं भवति, कर्मकर्त्तरि न भवति ॥

## २२७. अनुपराभ्यां कृञः ॥ ७९ ॥ (२७४५)

### न्यासः

शेषस्यापि । एवं गन्धनादिभ्योऽन्यत्र करोतीत्येवमादिकमुदाहरणं वेदितव्यम् । ननु शेषादित्यनेन पञ्चम्यन्तेन धातुसमानाधिकरणेन धातुरेव विशिष्यते, नार्थः, ततश्चाशेषेषु गन्धनादिष्वर्थेषु परस्मैपदं प्राप्नोति, नैतदस्ति; गन्धनादयो हि प्रकृतेरेवार्थाः, तत्रासौ शेषग्रहणान्निवर्त्तमानस्तानपि निवर्त्तयति

पच्यते, गम्यते इति । ननु च यद्यत्र परस्मैपदं स्यात्, तदा 'भावकर्मणोः' इति वचनमनर्थकं स्यात्; अनवकाशत्वात्, नैतदस्ति; अस्ति हि तस्यावकाशः । कः पुनरसौ ? यो न शेषः—आस्यते, शय्यते, क्रियत इति । अनुदात्तेत्त्वं ङित्त्वञ्चाशेषः । 'शेषात् कर्तरि' इत्यत्र कर्तृग्रहणं सामान्यमुपात्तमिति यो देशयेत् तं प्रत्याह—कर्मकर्त्तरीत्यादि । 'कर्तरि कर्मव्यतीहारे' इत्यादिना परिहरति । कर्त्तेव यः कर्तेति । शुद्धो यः कर्त्ता, कर्तृवद्भावरहितो यः कर्तेत्यर्थः ॥ ७८ ॥

अनुपराभ्यांकृञः ॥ ७९ ॥

### पदमञ्जरी

भवति... गन्धनादेरन्यत्र करोतीत्यादिरर्थशेषः । गन्धनादिविशिष्टो हि कृञादिः शेषग्रहणेन पञ्चम्यन्तेन निवर्त्यमानो नागृहीतविशेषणन्यायेन विशेषणं गन्धनाद्यपि व्यावर्त्तयति । शेषादेव नान्यस्मादिति । उपलक्षणमेतत्, कर्तर्येव नान्यत्रेत्यपि द्रष्टव्यम् ।

पच्यते, गम्यत इति । ननु क्रियमाणेऽपि कर्तरिग्रहणे यदि तावदेवं नियमः—कर्तरि यदि भवति शेषादेवेति; ततोऽशेषात्कर्तरि मा भूत्, शेषात्तु भावकर्मकर्तृषु त्रिष्वपि प्राप्नोति । अथाप्येवं नियमः—शेषाद्यदि भवति कर्तर्येवेति, ततः शेषाद्भावकर्मणोर्मा भूद्, अशेषात्तु त्रिष्वपि प्राप्नोति । उक्तोऽत्र परिहारः—'योगविभागोऽत्राभिप्रेतः' इति । तत्र प्रथमे योगे शेषादेवेति नियमः, द्वितीये तु कर्तर्येवेति । कर्मकर्तरीत्यपि भावकर्मणोरित्यत्रोक्त एवार्थो विस्मरणशीलाननुग्रहीतुं पुनरपि स्मारितः ॥ ७८ ॥

अनुपराभ्यां कृञः ॥ अत्रापि द्वितीयं कर्तृग्रहणमनुवर्तते । अनुक्रियते स्वयमेव, पराक्रियते स्वयमेव ॥ ७९ ॥

### भावबोधिनी

'अनुदात्तङित आत्मनेपदम् (पा० सू० १।३।१२) यह कहा गया है—आस्ते, शेते । इससे भिन्न स्थल पर परस्मैपद होता है—याति, वाति । 'नेर्विशः' (पा० सू० १।२।३) इससे आत्मनेपद कहा है—निविशते । इससे भिन्न में आत्मनेपद नहीं होता है परस्मैपद होता है—आविशति, प्रविशति ।

कर्तरि [कर्ता अर्थ में]—इसका क्या फल है ? पच्यते, गम्यते । [यहाँ कर्म अर्थ में नहीं होता है] कर्मकर्ता में परस्मैपद क्यों नहीं होता है—पच्यते ओदनः स्वयमेव ?. 'कर्तरि कर्मव्यतिहारे' (पा० सू० १।३।१४) इससे दूसरे 'कर्तरि' की अनुवृत्ति होती है । इसके कारण—कर्ता ही जो कर्ता होता है वहीं परस्मैपद होता है, कर्मकर्ता में परस्मैपद नहीं होता है ॥७८॥

कर्तृगामी क्रियाफल में और गन्धन [सूचन] आदि अर्थों में 'कृ' धातु से आत्मनेपद का विधान किया गया है, उसका अपवाद परस्मैपद किया जा रहा है । अनु तथा परा—इन दो उपसर्गों के साथ 'कृ' धातु से परस्मैपद ही होता है । उदा० अनुकरोति (अनुकरण करता है), पराकरोति (दूर करता है) ॥ ७९ ॥

कर्त्रभिप्राये क्रियाफले गन्धनादिषु च करोतेरात्मनेपदं विहितम्, तदपवादः परस्मैपदं विधीयते। अनु, परा—इत्येवंपूर्वात्करोतेः परस्मैपदं भवति। अनुकरोति, पराकरोति ॥

## २२८. अभिप्रत्यतिभ्यः क्षिपः ॥ ८० ॥ (२७४६)

'क्षिप प्रेरणे' (धा० पा० १२८६) स्वरितेत्, ततः कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते। अभि, प्रति, अति—इत्येवं पूर्वात् क्षिपः परस्मैपदं भवति। अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति।

अभिप्रत्यतिभ्य इति किम् ? आक्षिपते।

द्वितीयमपि कर्तृग्रहणमनुवर्त्तते, तेनेह न भवति—अभिक्षिप्यते स्वयमेव ॥

## २२९. प्राद्वहः ॥ ८१ ॥ (२७४७)

'वह प्रापणे' (धा० पा० १००४) स्वरितेत्, तत्र कर्त्रभिप्रायक्रियाफलविवक्षायात्मनेपदे प्राप्ते परस्मैपदं विधीयते। प्रपूर्वाद्वहतेः परस्मैपदं भवति। प्रवहति, प्रवहतः, प्रवहन्ति।

प्रादिति किम् ? आवहते ॥

## २३०. परेर्मृषः ॥ ८२ ॥ (२७४८)

'मृष तितिक्षायाम्' (धा० पा० ११६५) स्वरितेत्, ततस्तथैवात्मनेपदे प्राप्ते परस्मैपदं विधीयते। परिपूर्वाद् मृष्यतेः परस्मैपदं भवति। परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति।

### न्यासः

**अभिप्रत्यतिभ्यः क्षिपः ॥** अभिक्षिपतीति। तुदादित्वाच्छः ॥ ८० ॥

**प्राद्वहः परेर्मृषः ॥** परिमृष्यतीति। दिवादित्वाच्छ्यन् ॥ ८१ ॥

### भावबोधिनी

'क्षिप् प्रेरणे' यह स्वरितेत् है, इससे कर्तृगामी क्रियाफल की विवक्षा में आत्मनेपद प्राप्त रहने पर परस्मैपद का विधान किया जाता है। अभि, प्रति, अति—ये जिसके पूर्व में हैं ऐसी क्षिप् धातु से परस्मैपद होता है। उदा०—अभिक्षिपति (इधर उधर फेंकता है), प्रतिक्षिपति (बदले में फेंकता है), अतिक्षिपति (बहुत अधिक फेंकता है।) अभि-प्रति-अतिभ्यः—[इनसे परे] इसका क्या फल है ? आक्षिपते। [यहाँ आङ् के योग में आत्मनेपद हो जाता है।]

यहाँ भी द्वितीय कर्तृग्रहण की अनुवृत्ति होती है, [अतः कर्ता ही जो कर्ता है, कर्मकर्ता नहीं है वहीं होता है] अतः यहाँ नहीं होता है—अभिक्षिप्यते स्वयमेव [बाण आदि स्वयं फिंक जाता है। यह कर्मकर्तृ प्रयोग है।] ॥८०॥

'वह प्रापणे' ( प्रापण = पहुँचाना ) स्वरितेत् है। इसमें कर्तृगामी क्रियाफल की विवक्षा में आत्मनेपद प्राप्त रहने पर परस्मैपद का विधान किया जाता है। 'प्र' पूर्वक वह धातु से परस्मैपद होता है। उदा०—प्रवहति, प्रवहतः, प्रवहन्ति। [बहता है।]

'प्रात्' [ प्र से परे ] इसका क्या फल है ? आवहते [ यहाँ आङ् के योग में परस्मैपद न होकर आत्मनेपद होता है। ] ॥ ८१ ॥

'मृष तितिक्षायाम्' ( तितिक्षा = क्षमा = सहन करना अर्थ में मृष) स्वरितेत् है, इससे कर्तृगामी क्रियाफल में आत्मनेपद प्राप्त रहने पर परस्मैपद का विधान किया जाता है। परिपूर्वक मृष् धातु से परस्मैपद होता है। उदा०—



**परेरिति किम् ? आमृष्यते ।**

**वहतिमपि केचिदत्रानुवर्त्तयन्ति—परिवहति ॥**

## २३१. व्याङ्परिभ्यो रमः ॥ ८३ ॥ (२७४९)

**'रमु क्रीडायाम्'** (धा० पा० ८५४), **अनुदात्तेत्त्वादात्मनेपदे प्राप्ते परस्मैपदं विधीयते। वि, आङ्, परि—इत्येवंपूर्वात् रमतेः परस्मैपदं भवति। विरमति, आरमति, परिरमति।**

**एतेभ्य इति किम् ? अभिरमते ॥**

## २३२. उपाच्च ॥ ८४ ॥ (२७५०)

**न्यासः**

**व्याङ्परिभ्यो रमः ॥ ८३ ॥ उपाच्च ॥** उपाच्चेति चकारः पूर्वापेक्षया समुच्चयार्थः। **उपरमति देवदत्तमिति।** ननु चोपपूर्वो रमिरकर्मक एव भवति। तथा ह्युपपूर्वस्यास्य विनाशोऽर्थो भवति, यथा—उपरतानि, नष्टानीति गम्यते। निवृत्तिर्वा भवति, स्वाध्यायादुपरमति, निवर्तत इति गम्यते। न चास्मिन्नर्थे वर्तमानस्य सकर्मकत्वमुपपद्यते, तत् कथं सकर्मकस्योदाहरणं युज्यत इत्याह—**उपरमयतीति यावदिति।** एतेन ण्यर्थवृत्तितामुपरमतेर्दर्शयन् सकर्मकतामुपपादयतीति। अकर्मको हि धातुर्ण्यर्थे वर्त्तमानः सकर्मको भवति, अथ पुनरण्यन्तस्य ण्यर्थवृत्तितोपपद्यते कथम्? अत आह—**अन्तर्भावितण्यर्थो रमिरित्यादि।** अन्तर्भावितो बुद्ध्यानुवेशितो ण्यर्थः प्रयोज्यप्रयोजकभावो यस्य स तथोक्तः। एवंविधस्य तस्य प्रयोज्येन कर्मणा सकर्मकत्वमुपपद्यत एव।

अथ किमर्थं पृथग् योगः क्रियते, 'न व्याङ्पर्युपेभ्यो रमः' इत्येक एव योगः क्रियतामित्याह—**पृथग्योगकरणमित्यादि।** गतार्थम् ॥ ८४ ॥

**पदमञ्जरी**

**उपाच्च ॥** उपपूर्वो रमिर्निवृत्तिविनाशयोर्वर्तते, उपरतोऽध्ययनाद्, उपरतो निधनादिति। न चानयोरुभयोरप्यर्थयोः सकर्मकत्वमुपपद्यते, तत्कथं सकर्मकस्योदाहरणम्? अत आह—**उपरमयति यावदिति।** कथं पुनरण्यन्तो ण्यर्थे वर्तते? अत आह—**अन्तर्भावितण्यर्थ इति** ॥ ८४ ॥ ८५ ॥

**भावबोधिनी**

परिमृष्यति, परिमृष्यतः, परिमृष्यन्ति। [ सब प्रकार से सहन करता है। ]

परेः—[ परि के बाद ] यह किसलिये है? आमृष्यते [ यहाँ आङ् के योग में आत्मनेपद होता है। ]

कुछ आचार्य इसमें वह धातु की भी अनुवृत्ति करते हैं—परिवहति ॥ ८२ ॥

'रमु क्रीडायाम्' यह अनुदात्तेद् है अतः आत्मनेपद प्राप्त रहने पर परस्मैपद का विधान किया जा रहा है। वि, आङ, परि—इन उपसर्गों से परे रम् धातु से परस्मैपद होता है। उदा०—विरमति [रुकता है], आरमति [खेलता है;] परिरमति [ चारों ओर खेलता है]।

इन उपसर्गों से परे ही क्यों? अभिरमते। [यहाँ अभि के योग में परस्मैपद नहीं होता है।] ॥ ८३ ॥

रम् से ही, उपपूर्वक रम् धातु से परस्मैपद होता है। उदा०—देवदत्तमुपरमति, यज्ञदत्तमुपरमयति। देवदत्त को हटाता है, यज्ञदत्त को हटाता है। यहाँ [प्रेरणा] अन्तर्भूत है।

यह अलग सूत्र बनाना आगे वाले सूत्र में अनुवृत्ति के लिये है जिससे अकर्मक धातु से विकल्प कहा जायगा, वह केवल उपपूर्वक धातु से हो ॥ ८४ ॥

'रमः' इत्येव उपपूर्वात् रमतेः परस्मैपदं भवति। देवदत्तमुपरमति। यज्ञदत्तमुपरमति। उपरमयतीति यावत्। अन्तर्भावितण्यर्थोऽत्र रमिः।

पृथग्योगकरणमुत्तरार्थम्। अकर्मकाद् विभाषां वक्ष्यति, सा उपपूर्वादेव यथा स्यात्॥

**२३३. विभाषाऽकर्मकात् ॥ ८५ ॥ (२७५१)**

'रम' 'उपात्' इति च वर्त्तते। पूर्वेण नित्ये परस्मैपदे प्राप्ते विकल्प आरभ्यते। उपपूर्वाद्रमतेरकर्मकाद्विभाषा परस्मैपदं भवति। यावद्भुक्तमुपरमति, यावद्भुक्तमुपरमते। निवर्तत इत्यर्थः॥

**२३४. बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ ८६ ॥ (२७५२)**

**न्यासः**

**विभाषाऽकर्मकात् ॥ यावद्भुक्तमिति।** 'यावदवधारणे' इत्यव्ययीभावः। **भुक्तमिति।** 'नपुंसके भावे क्तः' इति क्तप्रत्ययः। यावन्ति भोजनानि तावद्भ्यो निवर्त्तत इत्यर्थः। अथ वा यावद्भुक्तमिति यथार्थे वीप्सायामव्ययीभावः। भोजनाद् भोजनाद् निवर्त्तत इत्यर्थः॥ ८५॥

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥** 'बुध अवगमने', 'युध संप्रहारे', 'णश अदर्शने', 'जनी प्रादुर्भावे' 'इङ् अध्ययने', च्युङ् छ्युङ् ज्युङ् झ्युङ् प्रुङ् प्लुङ् गतौ', 'द्रु द्रु गतौ', 'सु स्रु गतौ', जनयतीति। 'जनीजॄष्' इत्यादिना मित्संज्ञा। मितां ह्रस्वत्वम्। **अध्यापयतीति। एतद्विषयाण्युदाहरणानीति।** प्राप्तिविलयनस्यन्दनविषयाण्येतानि। प्रावयतीत्याद्युदाहरणानि यथाक्रममित्यर्थः। स्यन्दनं चलनमिति लोके प्रसिद्धम्। ततोऽन्यत्र स्यन्दयतीति बोद्धव्यम्। प्रावयति = प्रापयति। द्रावयति = विलापयति। स्रावयति = स्यन्दयतीत्यर्थः॥ ८६॥

**पदमञ्जरी**

**बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः ॥ प्राप्नोतीति।** गम्यत इति वचनं तु प्राप्तिहेतुर्व्यापारः।

**कुण्डिका स्रवतीति।** कुण्डिकायामुदकं कुण्डिकोदकव्यापारो वा कुण्डिकायां छिद्रवत्यामुपचर्यते। ननु स्यन्दनमपि द्रवद्रव्यकर्तृकं चलनमेव; तथा प्रसिद्ध्यभावात्॥ ८६॥

**भावबोधिनी**

'रम' तथा 'उपात्' इनकी अनुवृत्ति होती है। पूर्व सूत्र द्वारा नित्य परस्मैपद प्राप्त रहने पर यह विकल्प आरम्भ किया जा रहा है। अकर्मक, उपपूर्वक रम धातु से विकल्प से परस्मैपद होता है। उदा०—यावत् भुक्तम् उपरमति, यावद् भुक्तम् उपरमते। (यहाँ यावत् = वीप्सा अर्थ में हैं।) भोजन भोजन से हटता है। उपरमते = निवृत्त होता है। ॥ ८५॥

कर्तृगामी क्रियाफल की विवक्षा में 'णिचश्च' (पा० सू० १।३।७४) से आत्मनेपद प्राप्त रहने पर इससे परस्मैपद का विधान किया जाता है। बुध, युध, नश, जन, इङ्, प्रु, द्रु और स्रु—इन णिजन्त धातुओं से परस्मैपद होता है। उदा०—बोधयति, (बोध कराता है), योधयति (लड़ाता है), नाशयति (नाश करता है), जनयति (उत्पन्न करता है।), अध्यापयति (पढ़ाता है), प्रावयति (प्राप्त कराता है।) द्रावयति (पिघलाता है), स्रावयति (टपकाता है)।

इस सूत्र में जो धातुयें अकर्मक हैं उनका तो 'अणावकर्मकाच्चित्तवत्कर्तृकात्'—(पा० सू० १।२।३) इसीसे परस्मैपद सिद्ध रहने पर यह सूत्र अचित्तवान कर्ता वाली धातुओं के लिये है। बोधयति पद्मम्। योधयति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्। [ यहाँ सभी कर्त्ता चित्तरहित जड़ पदार्थ हैं। अतः इसीसे परस्मैपद होगा। ]

इसमें जो धातुयें चलना अर्थवाली हैं उनको तो 'निगरणचलनार्थेभ्यश्च' (पा० सू० १।२।३) इससे सिद्ध रहने पर जब चलना अर्थ नहीं है उसके लिये यह सूत्र है। उदा०—प्रवते=प्राप्त करता है—यह अर्थ प्रतीत होता है। अयो द्रवति। विलीन होता है। कुण्डिका स्रवति-स्यन्दित होती है, यह अर्थ है। इनको विषय बनाने वाले उदाहरण हैं [ प्रावयति = प्रापयति, द्रावयति = विलापयति, स्रावयति = स्पन्दयति—इनमें परस्मैपद के लिये है। ] ॥ ८६॥

'णिचश्च' (१.३.७४) इति कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदे प्राप्ते परस्मैपदं विधीयते। बुध, युध, नश, जन, इङ्, प्रु, द्रु, स्रु—इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं भवति। बोधयति। योधयति। नाशयति। जनयति। अध्यापयति। प्रावयति। द्रावयति। स्रावयति।

येऽत्राकर्मकास्तेषाम् 'अणावकर्मकाच्चित्तवत्कर्तृकात्' (१.३.८८) इत्येवं सिद्धे वचनमिदमचित्तवत्कर्तृकार्थम्। बोधयति पद्मम्। योधयन्ति काष्ठानि। नाशयति दुःखम्। जनयति सुखम्।

येऽत्र चलनार्था अपि तेषां 'निगरणचलनार्थेभ्यश्च' (१.३.८७) इति सिद्धे यदा न चलनार्थास्तदर्थं वचनम्—प्रवते। प्राप्नोतीति गम्यते। अयो द्रवति। विलीयत इत्यर्थः। कुण्डिका स्रवति। स्यन्दत इत्यर्थः। तद्विषयाण्युदाहरणानि [प्रावयति, द्रावयति, स्रावयति]।

## २३५. निगरणचलनार्थेभ्यश्च ॥ ८७ ॥ (२७५३)

'णेः' इति वर्त्तते। कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते। निगरणम्=अभ्यवहारः। चलनम्=कम्पनम्। निगरणार्थेभ्यश्च धातुभ्यो ण्यन्तेभ्यः परस्मैपदं भवति। निगारयति। आशयति। भोजयति। चलनार्थेभ्यः—चलयति, चोपयति, कम्पयति।

अयमपि योगः सकर्मकार्थः, अचित्तवत्कर्तृकार्थश्च।

### न्यासः

**निगरणचलनार्थेभ्यश्च ॥** चलयतीति। 'चल कम्पने' घटादिः। आदयते देवदत्तेनेति। 'गतिबुद्धि' इत्यादिनाऽणौ कर्तुः कर्मसंज्ञा प्राप्ता, 'अत्तिखाद्योः प्रतिषेधः' इति वचनान्न भवति ॥ ८७ ॥

### पदमञ्जरी

**निगरणचलनार्थेभ्यश्च ॥** निगारयतीति। 'गॄ निगरणे'। आशयतीति। 'अश भोजने'। भोजयतीति। 'भुज पालनाभ्यवहारयोः'। चलयतीति। 'चल कम्पने'। घटादित्वान्मित्त्वम्, पूर्ववद्ध्रस्वः। चोपयतीति। 'चुप मन्दायां गतौ'। कम्पयतीति। 'कपि चलने'। अयमपि योगः सकर्मकार्थः, अचित्तवत्कर्तृकार्थश्चेति। तद्विपरीतेभ्यः 'अणावकर्मकाच्चित्तवत् कर्तृकात्' इत्यनेनैव सिद्धत्वात्। तत्र येषामुदाहरणान्युपन्यस्तानि, तेषु चलिकम्पी अकर्मकौ द्वौ; तयोरचित्तवत्कर्तृकार्थोऽयं योगः। शेषाणान्तु सकर्मकार्थः।

वक्तव्य इति व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—'विभाषाऽकर्मकात्' इत्यतो विभाषाग्रहणं मण्डूकप्लुत्यानुवर्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनादेरन्येभ्यो नित्यं परस्मैपदम्, अदेस्तु न भवत्येव। आदयते देवदत्तेनेति। अत्र 'गतिबुद्धि इत्यादिना कर्मसंज्ञा न भवति; 'आदिखादिनीवहीनां प्रतिषेधः' इति वचनात् ॥ ८७ ॥

### भावबोधिनी

'णेः' इसकी अनुवृत्ति होती है। कर्तृगामी क्रियाफल की विवक्षा में आत्मनेपद का अपवाद यह परस्मैपद किया जा रहा है। निगरण=भक्षण। चलन=काँपना। णिजन्त निगरण=निगलना अर्थवाली धातुओं से परस्मैपद होता है। उदा०—निगारयति (निगलवाता है।) आशयति (खिलाता है), भोजयति (भोजन कराता है।) चलनार्थक से—चलयति (चलाता है), चोपयति (धीरे धीरे चलाता है), कम्पयति (कँपाता है)। [चलयति यहाँ मित् होने के कारण 'मितां ह्रस्वः' (पा० सू० ६।४।९२) से उपधा का ह्रस्व हुआ है।]

यह सूत्र भी सकर्मक के लिये और अचित्तवत्कर्तृक [चित्तरहित कर्तावाली] धातुओं के लिये है।

'अद् का प्रतिषेध कहना चाहिये।' उदा०—अत्ति देवदत्तः। आदयते देवदत्तेन [देवदत्त खाता है। देवदत्त खिलाता है। यहाँ परस्मैपद का निषेध हो जाने पर आत्मनेपद होता है।] ॥ ८७ ॥

*अदेः प्रतिषेधो वक्तव्यः[1]* । अत्ति देवदत्तः । आदयते देवदत्तेन ॥

## २३६. अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ ८८ ॥ (२७५४)

'णेः' इति वर्तते । कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विधीयते । अण्यन्तो यो धातुरकर्मकश्चित्तवत्कर्तृकश्च तस्माद् ण्यन्तात्परस्मैपदं भवति । आस्ते देवदत्तः, आसयति देवदत्तम् । शेते देवदत्तः, शाययति देवदत्तम् ।

### न्यासः

**अणावकर्मकाच्चित्तवत्कर्तृकात् ॥ चेतयमानमिति ।** 'चिती संज्ञाने', चौरादिकः । अयञ्चाकर्मकश्चित्तवत्कर्तृकश्च । **हेतुमण्णिचो विधिरिति ।** बुधादेः सूत्रादिह णिज्ग्रहणमनुवर्तते, स च हेतुमण्णिजेव; बुधादिभ्योऽन्यस्य णिचोऽसम्भवात् । यतश्च हेतुमण्णिचो विधिः, प्रत्यासत्तेस्तस्यैव प्रतिषेधो युक्तः । यथाभूत एव विधिभाक्, तथाभूतेनैव प्रतिषेधभाजा भवितव्यम्; प्रत्यासत्तेः । तथा हि—ब्राह्मणाः प्रवेश्यन्तामन्यत्रानधीयानेभ्य इत्युक्ते यथाजातीयकानां प्रवेशो विहितस्तथाजातीयकानामेव प्रत्यासत्तेः पर्युदासो विज्ञायते । **आरोहयमाण इति ।** णेरणावादिसूत्रेणात्मनेपदम् । यद्यप्यत्र हस्तिपकान् प्रति हस्तिनः प्रयोजकत्वे विवक्षिते णिज् विहितः; तथापि ण्यन्तावस्थायां हस्तिपकाः प्रयोज्यत्वेन न विवक्ष्यन्ते; अन्यथा ह्यणौ यत् कर्म तदेव णौ कर्त्ता न स्यात् । तत्र प्रयोज्यत्वाविवक्षायामारोहयमाण इत्यस्य स्वयमेवारोहयतीत्येषोऽर्थो भवति । तमारोहयमाणं यदान्यः

### पदमञ्जरी

**अणावकर्मकच्चित्तवत्कर्तृकात् ॥ अणाविति किमिति ।** ण्यन्तस्य प्रयोज्येन कर्मणा सकर्मकत्वमवश्यम्भावीति मन्यमानस्य प्रश्नः । **चेतयमानमिति ।** 'चिती संज्ञाने' चुरादिः । **हेतुमण्णिचो विधिरिति ।** बुधादिसूत्रादिह णिज्ग्रहणमनुवर्तते, बुधादिभ्यश्च हेतुमत्येव णिच् सम्भवति, तस्मादिहापि तस्यैव ग्रहणमिति भावः । तत्र यथा—'ब्राह्मणा आनीयन्तामन्यत्रानधीयानेभ्यः' इत्युक्ते प्रत्यासत्तेर्यदध्ययनं ब्राह्मणानां सम्भवति तदधीयानेभ्य इति गम्यते, न त्वध्येतव्यमात्रमधीयानेभ्य इति, तद्वदिहापि प्रतिषेधोऽपि तस्यैव गम्यते यज्जातीयस्य विधौ ग्रहणमिति ।

### भावबोधिनी

'णेः' इसकी अनुवृत्ति होती है । कर्तृगामी क्रियाफल की विवक्षा में आत्मनेपद का अपवाद परस्मैपद किया जा रहा है । अणिजन्त जो धातु अकर्मक तथा चित्तवत्कर्तृक ( चेतनकर्तावाली ) हो, उस णिजन्त से परस्मैपद का विधान होता है । उदा०—आस्ते देवदत्तः, देवदत्तम् आसयति (देवदत्त को बैठाता है), शेते देवदत्तः, शाययति देवदत्तम् ( देवदत्त को सुलाता है) ।

अणौ ( अणिजन्त में )—इसका ग्रहण किसलिये है ? चेतयमानं प्रयोजयति इति चेतयते (यहाँ नहीं होता है) —ऐसा प्रत्युदाहरण कुछ लोग देते हैं, परन्तु यह ठीक नहीं है क्योंकि प्रयोजककर्ता=हेतुमान् अर्थ वाली धातु से णिच् होता है, अतः प्रत्यासत्त्या (उपस्थित होने के कारण) प्रतिषेध भी हेतुमान् अर्थ में होने वाले णिच् का ही होना चाहिये (न कि चौरादिक स्वार्थिक णिच् का ) । इसलिये यहाँ 'चेतयति' यह प्रत्युदाहरण है—आरोहयमाणं प्रयुङ्क्ते, आरोहयते ( स्वयं बैठाते हुये हाथी को प्रयुक्त करता है ) ।

अकर्मकात्—इसका क्या फल है ? कटं कुर्वाणं प्रयोजयति, कारयते । चटाई बनाते हुये को प्रेरित करता है । ( यहाँ कृ धातु सकर्मक है । )

---

१. आकरे नोपलब्धः ।

अणाविति किम् ? चेतयमानं प्रयोजयति = चेतयते इति केचित् प्रत्युदाहरन्ति, तदयुक्तम्; हेतुमण्णिचो विधिः, प्रतिषेधोऽपि प्रत्यासत्तेस्तस्यैव न्याय्यः। तस्मादिह चेतयतीति परस्मैपदेनैवभवितव्यम्। इदं तु प्रत्युदाहरणम्—आरोहयमाणं प्रयुङ्क्ते, आरोहयते।

अकर्मकादिति किम् ? कटं कुर्वाणं प्रयोजयति, [प्रयुङ्क्ते] कारयते। चित्तवत्कर्तृकादिति किम् ? शुष्यन्ति व्रीहयः, शोषयते व्रीहीनातपः॥

## २३७. न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः॥ ८९॥ (२७५५)

पूर्वेण योगद्वयेन कर्त्रभिप्रायक्रियाफलविवक्षायामात्मनेपदापवादः परस्मैपदं विहितम्, तस्य प्रतिषेधोऽयमुच्यते। यत्कर्त्रभिप्रायविषयमात्मनेपदं तदवस्थितमेव न प्रतिषिध्यते। पा, दमि, आङ्यम, आङ्यस,

### न्यासः

प्रयुङ्क्ते, तदा द्वितीयो हेतुमण्णिच्। तदन्तात् 'णिचश्च' इत्यात्मनेपदं भवति। तेनारोहयत इति युक्तमेव प्रत्युदाहरणम्॥ ८८॥

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः**। 'पा' इति 'लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणम्' इत्यनेन 'पा पाने' इत्यस्यैव ग्रहणम्, न 'पा रक्षणे' इत्येतस्य। 'दमु उपशमे', 'यम उपरमे' 'यसु प्रयत्ने' आङ्पूर्वावितौ। 'मुह वैचित्त्ये', परिपूर्वः, 'रुच दीप्तौ', 'नृती गात्रविक्षेपे' 'वद व्यक्तायां वाचि', 'वस निवासे', आच्छादनार्थस्य वसेर्ग्रहणं पूर्वोक्तादेव हेतोर्न भवति। **पूर्वेण योगद्वयेनेति**। अनन्तरेणेत्यर्थः। **नृतिश्चलनार्थोऽपीति**। अपिशब्दाच्चित्तवत्कर्तृकार्थश्च। **पाययत इति**। 'शाच्छासाह्वाव्यावेपां युक्'। पातेस्त्वकर्मकत्वविवक्षायां परस्मैपदं भवति। **पालयतीति**। 'पातेर्लुग् वक्तव्यः' इत्युपसंख्यानाल्लुगागमः। **दमयत इति**। पूर्ववत् 'मितां ह्रस्वः' **आयामयत इति**। ननु चात्रापि मित्त्वे सति ह्रस्वेन भवितव्यमित्यत आह—**यमोऽपरिवेषण इति**। तत्र हि 'न कम्यमिचमाम्' इत्यतो नेत्यनुवर्तते। **आङिति**। ङिद्विशिष्टस्याकारस्योपादानमुपसर्गप्रतिपत्त्यर्थम्। तेनोपसर्गप्रतिरूपको य आकारस्तस्य ग्रहणं न भवति।

### पदमञ्जरी

**आरोहयमाणमिति**। 'णेरणौ' इत्यात्मनेपदं शानच् तत्रैवास्याकर्मकत्वमुपपादितम्। **प्रयुङ्क्त इति** पाठः। **प्रयोजयतीति** पाठे णेरर्थो मृग्यः॥ ८८॥

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः**॥ लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ग्रहणमिति पिबतिवसत्योर्ग्रहणम्, न पातिवस्त्योः; तेनाणावकर्मकत्वविवक्षायां परस्मैपदं भवत्येव। **पाययते इति**। 'शाच्छासाह्वाव्यावेपां युक्'।

### भावबोधिनी

चित्तवत्कर्तृकात् (चित्तवाला = चेतन प्राणी कर्ता हो—) इसका क्या फल है ? शुष्यन्ति व्रीहयः ( धान सूखते हैं ), शोषयते व्रीहीन् आतपः। आतप = धूप धान को सुखाते हैं। [ यहाँ आतप चित्तवान् नहीं हैं। अतः निषेध नहीं होता है। ]॥ ८८॥

पूर्ववर्ती दो सूत्रों द्वारा, कर्तृगामी क्रियाफल की विवक्षा में आत्मनेपद का अपवाद परस्मैपद किया गया है, उसका यह प्रतिषेध कहा गया है। कर्तृगामी क्रियाफलविषयक जो आत्मनेपद है, वह अवस्थित है, प्रतिषिद्ध नहीं होता है। पा, दम्, आङ्यम, आङ्यस्, परिमुह, रुच्, नृत्, वद और वस्—इतनी णिजन्त धातुओं से परस्मैपद नहीं होता है। 'णिचश्च' ( पा० सू० १।३।७४ ) इससे आत्मनेपद हो जाता है। इनमें पा = पीने अर्थ वाली, दम् आदि चित्तवान् कर्तावाली है, नृति-चलनार्थक भी है। इनका परस्मैपद नहीं होता है। उदा०—पाययते ( पिलाता है ), दमयते,

परिमुह, रुचि, नृति, वद, वस—इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं न भवति। 'णिचश्च' (१.३.७४) इत्यात्मनेपदं भवति। तत्र पिबतिर्निगरणार्थः। दमिप्रभृतयश्चित्तवत्कर्तृकाः। नृतिश्चलनार्थोऽपि। एषां परस्मैपदं न भवति। पा—पाययते। दमि—दमयते। आङ्यम—आयामयते। 'यमोऽपरिवेषणे' (ग० सू० १९३) इति मित्संज्ञा प्रतिषिध्यते। आङ्यस—आयासयते। परिमुह—परिमोहयते। रुचि—रोचयते। नृति—नर्तयते। वद—वादयते। वस—वासयते।

*पादिषु धेट उपसंख्यानम् (म० भा० १.३.८९ वा० १)*। धापयेते शिशुमेकं समीची (ऋ० १.१९६.५)॥

## २३८. वा क्यषः ॥९०॥ (२६६९)

'लोहितादिडाज्भ्यः क्यष्' (३.१.१३) इति वक्ष्यति, तदन्ताद्धातोर्वा परस्मैपदं भवति। लोहितायति, लोहितायते। पटपटायति, पटपटायते।

### न्यासः

**पादिषु धेट उपसंख्यानमिति।** पादिष्विति विषयसप्तमी। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। धेटः पादिविषयस्य परस्मैपदप्रतिषेधस्य प्रतिपादनं कर्तव्यम्। योऽयं पादिविषयः परस्मैपदप्रतिषेधः, स धेटोऽपि भवतीत्यर्थः। तत्रेदं प्रतिपादनम्—नेति योगविभागः क्रियते, तेन धेटोऽपि प्रतिषेधो भविष्यति। यद्येवम्, नेत्यनेनैव सिद्धत्वात् पादीनां ग्रहणमनर्थकम्? नानर्थकम्; पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थत्वात्। **धापयेते इति।** 'धेट् पाने'। 'आदेचः' इत्यादिनात्वम्, पूर्ववत् पुक्। **शिशुमिति।** 'गतिबुद्धि' इत्यादिना कर्मसंज्ञायां द्वितीया ॥ ८९ ॥

**वा क्यषः ॥ लोहितायतीति।** अलोहितो लोहितो भवतीत्यत्रार्थे 'लोहितादिडाज्भ्यः क्यष्' इति क्यष्। 'अकृत्सार्वधातुकयोः' इति दीर्घः। **पटपटायतीति।** पटच्छब्दस्य डाचि विषयभूते 'डाचि बहुलं द्वे'

### पदमञ्जरी

**पादिष्विति।** धेडप्यस्मिन् सूत्रे पठितव्य इत्यर्थः। **समीची इति।** प्रथमाद्विवचने 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥ ८९ ॥

**वा क्यषः ॥ लोहितायते इति।** अलोहितो लोहितो भवतीत्यत्रार्थे क्यष्, 'अकृत्सार्वधातुकयोः' इति दीर्घः। **पटपटायतीति।** पटच्छब्दस्य डाज्विषये द्विर्वचनम्, 'अव्यक्तानुकरणात्' इति डाच्, टिलोपः, 'नित्यमाम्रेडिते डाचि'। **कथमिति।** न कथञ्चिदित्यर्थः। किं कारणमित्याह—**यावतेति।** न नियमेन व्यावर्तितमात्मनेपदमनेन शक्यं प्रापयितुम्, ह्यशक्यार्थे वचनस्य व्यापारः, वावचनं तु केवलस्य लस्य प्रयोगार्थं स्यादिति भावः। **एवं तर्हीत्यादि**—परिहारः। विकल्पितं विभाषितम्, पाक्षिकमित्यर्थः। कथं पुनः परस्मैपदप्रकरणेन विच्छिन्नमात्मनेपदं शक्यं विधातुम्, अत आह—**तच्चेति।** ननु शाब्दः सन्निधिः सम्बन्धकारणम्, प्रतिषेधेन

### भावबोधिनी

(दबाता है), आयामयते (फिकवाता है), 'यमोऽपरिवेषणे' इससे मित् संज्ञा का निषेध होता है (अतः ह्रस्व नहीं होता।) आङ्यस्—आयासयते (फिकवाता है)। परिमुह—परिमोहयते (अच्छी तरह मोह कराता है)। रुच्—रोचयते (पसन्द कराता है)। नृत् = नर्तयते (नचाता है)। वद = वादयते (कहलाता है)। वस् = वासयते (बसाता है)।

*'पादि में धेट् को भी कहना चाहिये।* उदा० धापयते शिशुमेकं समीची। (ऋ० १।१९६।५) एक शिशु को पिलवाती है ॥ ८९.॥

'लोहितादिडाज्भ्यः क्यष्' (पा० सू० ३।१।३) यह आगे कहा जायगा, क्यषन्त धातु से विकल्प से परस्मैपद होता है। उदा०—लोहितायति, लोहितायते। लाल होता है। पटपटायति, पटपटायते [पट पट शब्द करता है।]

**युष्मद्युपपदे सति व्यवहिते चाव्यवहिते सति समानाधिकरणे = समानाभिधेये तुल्यकारके स्थानिनि प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि मध्यमपुरुषो भवति। त्वं पचसि, युवां पचथः, यूयं पचथ। अप्रयुज्यमानेऽपि— पचसि, पचथः, पचथ॥**

**न्यासः**

**समानाधिकरण** इत्यनेन समानाभिधेये इति व्याचक्षाणोऽयमधिकरणशब्दोऽभिधेयवचनः सूत्र उपात्त इति दर्शयति। तत् पुनरभिधेयं यत्र लकार उत्पद्यते कर्तरि कर्मणि वा कारके प्रत्यासत्तेस्तदेव विज्ञायते इत्याह—**तुल्यकारक इत्यादि**। तुल्यं कारकं यस्य तत् तथोक्तम्। तुल्यशब्देन समानशब्दस्यार्थो दर्शितः। **प्रयुज्यमानेऽप्रयुज्यमानेऽपीति**। अनेन स्थानिन्यपीत्यस्यार्थमाचष्टे। स्थानशब्दः प्रसङ्गवाची—स्थानमस्यास्तीति स्थानी। कस्य च स्थानम्? तस्यैव स्थानमस्ति यस्यार्थो गम्यते; शब्दो न प्रयुज्यते। तदेतदुक्तम्भवति—अप्रयुज्यमानेऽपि युष्मदि, अपिशब्दात् प्रयुज्यमानेऽपि। समानाधिकरणग्रहणं किम्? 'त्वया पच्यते' इत्यत्र मा भूत्, भिन्नं ह्यत्राधिकरणम्। तथा हि—'त्वया' इत्येतत् कर्तृवाचि; कर्तरि तृतीयाविधानात्। 'पच्यते' इति कर्मवाचि; कर्मणि लकारविधानात्॥ १०५॥

**पदमञ्जरी**

कर्मणि षष्ठी, पुरुषद्वारको नियमः पुरुषनियमः, पुरुषद्वारेण ते नियम्यन्त इत्यर्थः। उपोच्चरितं पदमुपपदम्, शाकपार्थिवादित्वादुत्तरपदलोपी समासः, उपशब्दः सामीप्ये, ततश्च व्यवहिते न भवितव्यमिति शङ्कामपनयति। **व्यवहिते चेति**। समीप इत्येव सिद्धे उपपदग्रहणादापेक्षिकस्यापि सामीप्यस्य ग्रहणम्। व्यवहितमपि च व्यवहिततरापेक्षया संनिकृष्टमिति भावः। उपपदग्रहणं तु पूर्वभूतेऽपि युष्मदि यथा स्यात्, अन्यथा 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परभूते एव स्यात्। ननु यथा स्थानिन्यपीति वचनात् सर्वथाऽप्रयुज्यमानेऽपि भवति तथा पूर्वप्रयोगेऽपि परभूतस्याप्रयोगात् स्थानिनीति भविष्यति, नैतदस्ति; सप्तमीनिर्देशात् प्रयोगपक्षे परभूत एव स्यात्।

**समानाभिधेय इति**। अधिकरणशब्दोऽभिधेयवचन इति दर्शयति। पुनः समानाभिधेये लकारेण नियम्यमानेन वा पुरुषेण। त्रिविधं चाभिधेयं लकाराणाम्—भावः कर्म कर्ता च, तत्र द्रव्यवाचिनोर्युष्मदस्मदोर्भाववाचिना लान्तेन सामानाधिकरण्यासंभवात् कर्तृकर्मणोरेव ग्रहणमित्याह—**तुल्यकारक इति**। तुल्यमेकं कारकं यस्य तत्तथोक्तम्, स्थानिन्यपीति स्थानशब्दप्रसङ्गवाची, स्थानमस्यास्तीति स्थानी। तत्र च प्रयुज्यमानस्याप्रयुज्यमानस्य च प्रसङ्गोऽस्ति। उच्यते चेदं स्थानमस्यास्तीति, तत्र सामर्थ्यादिवधारणं विज्ञायते—प्रसङ्ग एव यस्य, न तु प्रयोग इति। स्वनिकायप्रसिद्धिरेषा—यस्य स्थाने आदेशो विधीयते स स्थानीति। इह त्वप्रयुज्यमानता सादृश्यात् युष्मदि प्रयुज्यते, सर्वथा स्थानिन्यपीत्यस्याप्रयुज्यमानेऽपीत्यर्थः। अपिशब्दात्प्रयुज्यमानेऽपि, तदाह—**स्थानिन्यपीत्यादिना**। स्थानिन्यपीति कोऽर्थः? प्रयुज्यमानेऽप्य प्रयुज्यमानेऽपीत्यर्थः। उपपदग्रहणप्राप्तस्य चार्थस्यापिशब्दोऽनुवादः। समानाधिकरण इति किम्? त्वया गम्यत इत्यत्र मा भूत्।

**भावबोधिनी**

उनमें यह पुरुषनियम किया जा रहा है—युष्मद् उपपद रहने पर, व्यवहित और अव्यवहित रहने पर, समानाधिकरण = समान अभिधेय वाले = तुल्यकारकवाची रहने पर, [युष्मद् के] स्थानिनि = प्रयुक्त रहने पर और प्रयुक्त न रहने पर मध्यमपुरुष होता है। [भाव यह है कि युष्मद् शब्द उपपद रहे, उसका प्रयोग हुआ हो अथवा न हुआ हो किन्तु समान कारक अर्थ का प्रतिपादन करने वाला हो अर्थात् तिङ् प्रत्यय और युष्मद् दोनों का एकही कारक—कर्त्ता अथवा कर्म—अर्थ रहने पर मध्यम पुरुष होता है।]

उदा०—त्वं पचसि, युवां पचथः, यूयं पचथ। [तुम पकाते हो, तुम दोनों पकाते हो, तुम सब पकाते हो] युष्मद् का प्रयोग न होने पर भी [मध्यमपुरुष प्रत्यय होते हैं—] पचसि, पचथः, पचथ॥ १०५॥

**३४७. प्र[illegible] मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ १०६ ॥ (२१६३)**

**प्रहासः = [illegible]हस ?, क्रीडा । प्रहासे गम्यमाने मन्योपपदे धातोर्मध्यमपुरुषो भवति, मन्यतेश्चोत्तमः,**

**न्यासः**

**प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ प्रहासे गम्यमान इति ।** यत्र भूतार्थाभावाद् वञ्चनैव केवल तत्र वक्तुरभिप्रायाविष्करणेन प्रहासो गम्यते । **मन्योपपद इति ।** मन्यतिरुपपदमुच्चारितं पदं यस्य स तथोक्तः । मध्यमस्य धातोर्विधानाद् धातुरन्यपदार्थो विज्ञायत इत्याह—धातोरिति । स चैकवदिति । यत्र द्वौ

**पदमञ्जरी**

क्वचित्तु वृत्तावेवायं ग्रन्थः पठ्यते, इह च अतित्वं पचति अत्यहं पचतीत्यत्रातिक्रान्तप्रधानेन समासे युष्मदस्मदोरसामानाधिकरण्यात् प्रथम एव भवति, इह त्वीषदसमाप्तस्त्वं त्वत्कल्पः पचसि, मत्कल्पः पचामीति कालान्तरदृष्टगुणरहितो युष्मदस्मदर्थ एव त्वत्कल्पमत्कल्पशब्दाभ्यामुच्यत इति मध्यमोत्तमौ भवतः, तत्सदृश-पदार्थान्तराभिधाने तु प्रथमः, तथा त्वत्तरः पचसि, मत्तरः पचामि, परमत्वं पचसि, परमाहं पचामीति, कालान्तरा-दृष्टगुणातिशयविशिष्टो युष्मदस्मदर्थ एवोच्यते इति भवत्येव । एवं च युष्मदर्थे मध्यमः, अस्मदर्थं उत्तम इतीयता सिद्धं युष्मदस्मदर्थे चेल्लकार उत्पन्नस्तर्ह्येव मध्यमोत्तमा भवति; प्रकृतेरेव विकाररूपेण सम्पत्तौ कर्तृत्वात् । एतच्च 'आन्महतः' इत्यत्रोपपादयिष्यामः । तथा च मन्त्रे—'यदग्ने स्यामहं त्वं त्वं वा घा स्या अहम्' (ऋ० ८.४४.२३) इति, अहं त्वं स्यां त्वं वाहं स्याम्' इति प्रकृत्याश्रयः पुरुषो दृश्यते इह भवान्पचत्विति युष्मदर्थ-प्रतीतेः स्थानिन्यपीति मध्यमः प्राप्नोति, वा युष्मदर्थत्वात्, अलिङ्गः सम्बोधनविषयश्च युष्मदर्थः । भवदर्थस्तु लिङ्गवान् न च सम्बोधनैकविषयः । यथैव हि माणवकाधीष्वेत्यभिमुखीभावो गम्यते, एवं त्वमधीष्वेत्यपि । तथा च युष्मदः सर्वत्रैव संबोधने प्रथमा आमन्त्रिताद्युदात्तत्वं च भवति, पदात्परत्वे च निघात इति केचिदाहुः । उक्तं च—

सम्बोधनार्थः सर्वत्र मध्यमे कैश्चिदिष्यते ।
तथा सम्बोधने सर्वां प्रथमां युष्मदो विदुः ॥ (वा० प० ३. १०.४)
युष्मदः प्रथमान्तस्य परश्चेन्न पदादसौ ।
युष्मदर्थस्य सिद्धत्वान्नियता चाद्युदात्तता ॥ (वा० प० ३.१०.६) इति ।

सत्यम्; सम्बोधनैकविषयो युष्मच्छब्दः, प्रथमा तु शुद्धैव; अभिमुखीभावेऽस्यापि प्रातिपदकार्थ एवान्तर्भावात् यत्र त्वनन्तर्भावः, तत्र तदभिद्योतनाय सम्बोधने चेति प्रथमा विधीयते स्वरोपि; अन्यथा युवं हि स्थः स्वर्पती (ऋ० ९.१९.२), यूयं पात स्वस्तिभिः (ऋ० ७.१.२०), हये देवा यूयमिदापयः स्थ' (ऋ० २.२९.४) इति पादादावप्यन्तोदात्तत्वं पदात्परत्वेऽप्यनिघातः । तदेवं भवच्छब्दस्यासम्बोधनविषयत्वाल्लिङ्गवत्त्वाच्चा-युष्मदर्थत्वाद् मध्यमो न भवतीति स्थितम् ॥ १०५ ॥

**प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ॥ प्रहासे गम्यमान इति ।** यत्र भूतार्थाभावाद्वञ्चनैव केवलं तत्र वक्तुरभिप्रायाविष्करणे प्रहासो गम्यते । मन्यतिशब्दस्यैकदेशानुकरणं मन्येति, मन्य उपपदं यस्य स तथोक्तः । लस्य धातोर्विधानात्तदादेशत्वाच्च मध्यमस्य धातुरन्यपदार्थ इत्याह । **मन्योपपदे धाताविति ।**

**भावबोधिनी**

प्रहास = परिहास, क्रीड़ा, हँसी-मजाक । प्रहास प्रतीयमान रहने पर, मन्यधातु उपपद रहने पर धातु से मध्यम पुरुष होता है, मन्य धातु से उत्तम पुरुष होता है, और उसका एकवद्भाव हो जाता है । उदा०—एहि, मन्ये ओदनं भोक्ष्यसे इति, न हि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । आइये, सोचते होगे चावल खाऊँगा, नहीं खा पाओगे, उसे तो अतिथि लोग खा गये । आइये, समझते होगे रथ से जाऊँगा, नहीं जा पाओगे, उस रथ से तो तुम्हारे पिता जा चुके

स चैकवद्भवति । एहि मन्ये ओदनं भोक्ष्यसे इति नहि भोक्ष्यसे, भुक्तः सोऽतिथिभिः । एहि मन्ये रथेन यास्यसि, न हि यास्यसि, यातस्तेन ते पिता । मध्यमोत्तमयोः प्राप्तयोः उत्तममध्यमौ विधीयेते । प्रहासे

प्रहासे इति किम् ? एहि मन्यसे ओदनं भोक्ष्ये इति । सुष्ठु मन्यसे, साधु मन्यसे ॥

**३४८. अस्मद्युत्तमः ॥ १०७ ॥ (२१६४)**

**न्यास**

मन्तारौ बहवो वा तत्रायमेकवद्भावो विधीयते । अन्यत्र तु मन्तुरेकत्वादेवैकवचनं सिद्धम् । **मध्यमोत्तमयोरिति ।** यथाक्रमं युष्मदस्मदोरुपपदयोः समानाधिकरणयोरप्रयुज्यमानयोरप्यर्थस्य विद्यमानत्वात् । यथा प्रत्युदाहरणे पूर्वकमुपपदग्रहणं युष्मच्छब्देनाभिसम्बद्धमिहानुवर्ततेति तन्मन्यतिनाऽशक्यमभिसम्बन्धुमिति पुनरुपपदग्रहणं क्रियते । मन्यतेरिति श्यना निर्देशः, 'मन ज्ञाने' इत्यस्य दैवादिकस्य ग्रहणं यथा स्यात्; 'मनु अवबोधने' इत्यस्य तानादिकस्य ग्रहणं मा भूदित्येवमर्थः । तेनेह न भवति—एहि मनुषे रथेन यास्यामि नहि यास्यसि यातस्तेन ते पितेति । एवं हि मनोतेर्भवति ॥ १०६ ॥

**अस्मद्युत्तमः** ॥ यदा युस्मदस्मदी द्वे अप्येते उपपदे स्तः, तदा कथं भवितव्यम् ? यदि कर्तृशक्ती आधारप्रतिनियते अपेक्ष्येते, तदाऽऽख्यातमपि पृथगेव प्रयुज्यते—पचसि पचामि चेति । अथाविरोधाच्छक्तिद्वयेऽपि

**पदमञ्जरी**

प्रकृतिभूते सतीत्यर्थः । **स चैकवदिति ।** अर्थद्वारकश्चोत्तमस्यैकवद्भावः, एकस्य वाचको भवतीत्यर्थः, द्वयोर्बहुषु मन्तृषु एकवचनमेव भवतीति यावत् । यत्र हि द्वौ मन्तारौ बहवो वा, तत्रैकवद्भावो विधेयः; अन्यत्र तु मान्तुरेकत्वादेव सिद्धम् । **एकवच्चेति ।** च शब्दोन्वाचये, तेनैकवद्भावाभावेऽपि एकस्मिन्नपि मन्तरि प्रधानशिष्टौ मध्यमोत्तमौ भवतः ।

अन्वाचयमेव दर्शयितुमयत्नसाध्यमेकं मन्तारमुदाहरति—**एहि मन्ये ओदनं भोक्ष्यस इति ।** सत्यप्योदने भोक्तुमागतं श्यालादिकं प्रति एतत्प्रयुज्यत इति परिहासावगतिः । द्विबह्वोस्तूदाहरणे—एहि मन्ये ओदनं भोक्ष्येथे नहि भोक्ष्येथे भुक्तः सोऽतिथिभिः; एहि मन्ये रथेन यास्यथ यातस्तेन पिता इति । **मध्यमोत्तमयोः प्राप्तयोरिति ।** युष्मदस्मदर्थस्य गम्यमानत्वात् प्रत्युदाहरणवत् प्रकृतमुपपदग्रहणं युष्मदा सम्बद्धम् । तच्च तथैवेहाप्यनुवर्त्यमिह मा भूत्—एतु भवान्मन्यते ओदनं भोक्ष्ये भुक्तः सोऽतिथिभिरिति । तदशक्यं मन्यतिना सम्बन्धुमिदि पुनरिहोपपदग्रहणम्, अन्यथा मन्यतौ परत एव स्यात् । श्यनानिर्देशान्मन ज्ञानइत्यस्य ग्रहणम्, न तु 'मनु अवबोधने' इत्यस्य एहि मनुषे रथेन यास्यामिति एवं तस्य भवति । प्रत्युदाहरणे अतिथि प्रति तथाभूतार्थवचनम् ॥ १०६ ॥

**अस्मद्युत्तमः** ॥ यत्र युष्मदस्मदी द्वे अप्युपपदे भवतस्तत्र यदि कर्तृशक्ती स्वाधारनियते विवक्ष्येते; तदा लकारोऽपि भेदेनोत्पद्यते—त्वं चाहं च पचसि, पचामि चेति । सहविवक्षायां तु द्वयोरपि शक्त्योरेको

**भावबोधिनी**

हैं । [मन्य में] मध्यमपुरुष तथा [भुज् और या में] उत्तम पुरुष के प्राप्त रहने पर [मन्य में] उत्तमपुरुष और [भुज् तथा या में] मध्यम पुरुष का विधान किया जा रहा है । [ये वाक्य हंसी-मजाक के प्रसंग में साले बहनोई आदि के परस्पर वार्तालाप के रूप में हैं । इनमें जहाँ मध्यमपुरुष होना चाहिये था—मन्यसे, वहाँ उत्तमपुरुष किया गया 'मन्ये' और जहाँ उत्तमपुरुष होना चाहिये था 'भोक्ष्ये' 'यास्यामि'; वहाँ मध्यमपुरुष हुआ है—'भोक्ष्यसे, यास्यसि ।'

प्रहासे—इसका क्या फल है ? एहि मन्यसे ओदनं भोक्ष्ये, (आइये, समझते हो चावल खाऊंगा), सुष्ठु मन्यसे, साधु मन्यसे (ठीक ही सोचते हो ।) [यहाँ यथार्थकथन में व्यवस्थानुसार ही पुरुष हुए हैं ।] ॥ १०६ ॥

उत्तमपुरुष का नियम किया जा रहा है । अस्मद् उपपद रहने पर [अस्मद् और तिङ् प्रत्यय का] समान अर्थ रहने पर, प्रयुज्यमान अथवा प्रयुज्यमान न रहने पर दोनों स्थितियों में उत्तमपुरुष होता है । उदा०—अहं पचामि ।

उत्तमपुरुषो [illegible]यते। अस्मद्युपपदे समानाभिप्रेये प्रयुज्यमानेऽप्यप्रयुज्यमानेऽपि उत्तमपुरुषो भवति। अहं पचा[illegible]हम ? [illegible] पचावः। वयं पचामः। अप्रयुज्यमानेऽपि—पचामि। पचावः। पचामः॥

**३४६. शेषे प्रथमः ॥ १०८ ॥ (२१६५)**

'शेषे' इति मध्यमोत्तमविषयादन्य उच्यते। यत्र युष्मदस्मदी समानाधिकरणे उपपदे न स्तः, तत्र शेषे प्रथमपुरुषो भवति। पचति। पचतः। पचन्ति॥

**न्यासः**

लकार उत्पद्यते, तदा विप्रतिषेधादुत्तम एव भवति—त्वञ्चाहञ्च पचाव इति। यद्यपि 'त्यदादीनां यद् यत् परं तच्छिष्यते'[1] इत्यस्मच्छब्दस्य शेषो भवति, तथापि स्थानिन्यपीति मध्यमस्य प्राप्तौ सत्यां परत्वादुत्तम एव भवति। आवां पचाव इत्यत्र ह्यस्मच्छब्दस्य युष्मदर्थोऽपि वाच्यः, अन्यथा हि द्विवचनं न स्यात्। न ह्यस्मच्छब्दस्यैव द्वित्वमुपपद्यते॥ १०७॥

**शेषे प्रथमः ॥ १०८ ॥**

**पदमञ्जरी**

लकार उत्पद्यते। तत्र युष्मदि मध्यमः, अस्मद्युत्तमो विप्रतिषेधेन—'त्वं चाहं च पचावः, अहं च त्वं वृत्रहन् संयुज्याव' इति। यदापि त्यदादीनां यद्यत्परमित्यस्मदः शेषस्तदापि स्थानिन्यपीति मध्यमप्राप्तौ परत्वादुत्तम एव भवति—आवां पचावः॥ १०७॥

**शेषे प्रथमः**॥ उपपद इति निवृत्तम्। शेष इति विषयसप्तमी, न पुनः परत इति तदाह—**शेष इति। मध्यमोत्तमविषयादन्य उच्यत इति**। अन्यो विषय इत्यर्थः। यत्र युष्मदस्मदी समानाधिकरणे न स्तस्तत्र शेष इत्यनेन युष्मदस्मदोरभावः शेषः, न पुनरन्यसद्भाव इति दर्शयति। किं सिद्धं भवति ? त्वं च देवदत्तश्च पचथः, अहं च देवदत्तश्च पचावः, त्वं चाहं च देवदत्तश्च पचाम इति। अत्र यद्यपि युष्मदस्मदोरन्यस्य च यः समुदायः स युष्मदस्मद्भ्यामन्यः, तथापि युष्मदस्मदी तावत्स्त इति तत्सद्भावनिमित्तौ मध्यमोत्तमौ भवतः। न तु तदभावनिमित्तः प्रथमः। अन्यसद्भावे तु निमित्ते स्यादेव प्रथमः। यदाह—तत्र युष्मदन्येषु प्रथमप्रतिषेधः शेषत्वादिति॥ १०८॥

**भावबोधिनी**

आवां पचावः। वयं पचामः। अस्मद् का प्रयोग न रहने पर भी—पचामि, पचावः, पचामः। [मैं पकाता हूँ। हम दोनों पकाते हैं। हम सब पकाते हैं।]॥ १०७॥

मध्यम और उत्तम के विषय से भिन्न को 'शेष' शब्द से कहा जाता है। अर्थात् दोनों के बाद जो भी बचता है सभी में प्रथमपुरुष होता है। जहाँ पर समानाधिकरण = समान अर्थ वाले युष्मद् या अस्मद् उपपद नहीं रहते हैं, वहाँ शेष में प्रथमपुरुष होता है। उदा०—पचति, पचतः, पचन्ति। (वह पकाता है। वे दोनों पकाते हैं। वे सब पकाते हैं।)

**विमर्श**—पुरुषव्यवस्था के लिए सूत्रों में कुछ पारिभाषिक शब्द प्रयुक्त हैं, उनके अर्थ का स्पष्टीकरण आवश्यक है। उपपद = समीपप्रयुक्त पद, सामानाधिकरण। समान = तुल्य है, अधिकरण = अभिधेय अर्थ जिसका, अर्थात् युष्मद् आदि का अर्थ जो कर्ता या कर्म कारक है, वही कारक यदि तिङ् प्रत्यय का भी अर्थ है तो दोनों समानार्थक हो जाते हैं। जैसे—'त्वं पचसि' यहाँ युष्मद् का अर्थ है कर्त्ता और मध्यमपुरुष सिप् का अर्थ है कर्ता। दोनों समान अर्थ के वाचक हैं। अतः मध्यमपुरुष होता है। त्वं दृश्यसे (तुम देखे जाते हो) यहाँ युष्मद् का अर्थ कर्म कारक है और कर्म अर्थ में ही 'थास्' = 'से' प्रत्यय हैं। इस प्रकार दोनों समानार्थक हो जाते हैं और मध्यमपुरुष होता

---

१. इदं 'त्यदादीनि सर्वैर्नित्यम्' इति सूत्रस्थवार्त्तिकानुवादमूलकं वृत्तिकृद्वाक्यम्। कौमुदीकारेणापीदं गृहीतम्।

## ३५०. परः संनिकर्षः संहिता ॥ १०९ ॥ (२८)

परशब्दोऽतिशये वर्त्तते । संनिकर्षः=प्रत्यासत्तिः । परो यः संनिकर्षो [illegible] अर्धमात्राकालव्यवधानम्, स संहितासंज्ञो भवति । दध्यत्र । मध्वत्र ।

न्यासः

परः सन्निकर्षः संहिता ॥ परशब्दोऽतिशये वर्तते इति । यथा परं सुखं परं दुःखमिति । एतेन यद्यपि परशब्दो दिगादिष्वप्यर्थेषु वर्तते, तथापीहातिशये वर्तमानस्य तस्य ग्रहणमिति दर्शयति । सन्निकर्षः= प्रत्यासत्तिः; संश्लेषश्च । तत्रेह प्रत्यासत्तिर्गृह्यत इति दर्शयन्नाह—सन्निकर्षः प्रत्यासत्तिरिति । संश्लेषस्तु न गृह्यते, तस्य वर्णेष्वसम्भवाद् । संश्लेषो ह्येककालानां भवति, न च वर्णानामेककालतापत्तिः; क्रमेणोच्चारितत्वादुच्चरितप्रध्वंसितत्वात् । सत्यामपि चैककालतायां न सम्भवत्येव वर्णानां संश्लेषः । तथा हि—संश्लेषः संयोगतो वा स्यात्, समवायतो वा; तत्र पूर्वको द्रव्यस्यैव स्यात्, न तु शब्दस्य—निर्गुणा गुणा इति कृत्वा । इतरोऽपि नैव शब्दस्य सम्भवति, नहि वर्णो वर्णे समवैति; शब्दस्याकाशसमवायित्वात् । न च संयोगसमवाययोरतिशयः सम्भवति; सर्वत्रैकरूपकत्वात् तथा च 'परः' इति विशेषणं नोपपद्यते । प्रत्यासत्तिस्त्वपेक्षाकृतभेदात् प्रकर्षाप्रकर्षाभ्यां प्रयुज्यमानापरग्रहणेन विशिष्यत इति युक्तं तस्य विशेषणत्वम् । कः पुनरसौ परः सन्निकर्ष इत्याह—अर्द्धमात्रेत्यादि । अर्द्धं मात्राया इति 'अर्द्धं नपुंसकम्' इति समासः । अर्द्धमात्रायाः कालोऽर्द्धमात्राकालः । यावता कालेनार्द्धमात्रोच्चार्यते सोऽर्द्धमात्राकालः । अतिशयेन सन्निकृष्टान् वर्णानुच्चारयति वक्तरि

पदमञ्जरी

परः सन्निकर्षः संहिता ॥ परशब्दोऽतिशये वर्त्तत इति । यथा परं सुखं परं दुःखमिति, दिगादिषु वर्तमानस्य ग्रहणं न भवति सन्निकर्षस्य दिग्देशकालायोगात् । अर्थान्तरापेक्षमन्यत्वम्, अव्यभिचारिसन्निकर्षः प्रत्यासत्तिरिति, न तु संश्लेषः, तस्य वर्णेष्वसम्भवात् । स हि संयोगश्चेद् द्रव्यधर्मत्वान्न शब्दस्य गुणस्य सम्भवति । समवायश्चेन्न वर्णे वर्णः समवैति; शब्दस्याकाशसमवायित्वात् । येषां तु शब्दो द्रव्यं तेषां न क्वापि शब्दः समवैति । अतिशयोऽपि संयोगसमवाययोः कीदृश इति न विद्मः । प्रत्यासत्तेस्त्वपेक्षाभेदात् सम्भवति प्रकर्षाप्रकर्षयोगः, तस्मात्प्रत्यासत्तिरेव सन्निकर्षः ।

ननु च क्रमेणोच्चार्यमाणेषु वर्णेषु पूर्वस्य वर्णस्य ये निष्पादकाः स्थानादयस्तेषां व्यापरोपरतौ वर्णान्तरस्य ये निष्पादकास्तेषां व्यापारारम्भः । तत्रावश्यं मध्ये कियत्यपि कालकला भवति, सूक्ष्मत्वात्तु नोपलभ्यते; पद्मपत्रशतव्यक्तिभेदवत्, तत्कथं परः सन्निकर्ष इत्यत्राह—अर्धमात्राकालव्यवधान इति । सत्यम्,

भावबोधिनी

है । स्थानिनि = स्थानी में, स्थानवाला आदेश होता है, उसका प्रयोग रहता है, इसलिए स्थानिनि = प्रयुज्यमान रहने पर । 'अपि' समुच्चायक है । अतः यह अस्थानी = अप्रयुज्यमान का बोध कराता है । इसलिये युष्मद् के प्रयुक्तत्व और अप्रयुक्तत्व दोनों अवस्थाओं में मध्यमपुरुष होता है । इसीलिये त्वं पचसि, और केवल पचसि दोनों प्रयोग शुद्ध हैं । यही प्रक्रिया उत्तम तथा प्रथम के लिये है ॥ १०८ ॥

'पर' शब्द अतिशय अर्थ में है । सन्निकर्ष = प्रत्यासत्ति, 'समीप होना । पर = अत्यधिक जो सन्निकर्ष = वर्णों की आधी मात्राकाल का व्यवधान, वह संहितासंज्ञक होता है । [अर्थात् उच्चारण के लिये अपेक्षित आधी मात्राकाल से अधिक काल न लगा कर दूसरे वर्ण का उच्चारण कर देने पर दोनों की संहिता होती है] उदा०—दधि + अत्र = दध्यत्र, मधु + अत्र = मध्वत्र । [इकार, उकार के तत्काल बाद आकार का उच्चारण होने से दोनों की संहिता में यण् सन्धिकार्य होता है ।]

संहिताप्रदेशाः 'संहितायाम्' (६.१.७२) इत्येवमादयः ॥

**३५१. विरामोऽवसानम् ॥ ११० ॥ (२७)**

**विरतिः = विरामः, विरम्यतेऽनेनेति वा विरामः । सोऽवसानसंज्ञो भवति । दधिँ । मधुँ (८.४.५७) ।**

**न्यासः**

पूर्वस्य वर्णस्य ये निष्पादकास्ताल्वादयस्तेषां व्यापारोपरतौ वर्णान्तरस्य च ये निष्पादकास्ताल्वादयस्तेषां व्यापारोपवेशनमर्द्धमात्राकालमाहुः । स वर्णानां व्यवधानः = व्यवधायको यस्मिन् सोऽर्द्धमात्राकालव्यवधानः सन्निकर्षः । यदि वर्णानामर्द्धमात्राकालव्यवधानः सन्निकर्षः, कथं तर्हि दध्यत्रेत्यादौ व्यवधायककालो नोपलभ्यते, वर्णाः संश्लिष्टा एवोपलभ्यन्ते ? नैतत्; तस्य कालस्य सूक्ष्मतयोपलब्धुमशक्यत्वान्निरन्तरा वर्णास्तत्रोपलभ्यन्ते, न तु व्यवधायकस्य कालस्याभावात् । किमर्थं पुनरेतदारभ्यते, यावता परमेव सन्निकर्षं संहितेति वदन्त्याचार्याः, तथा हि संहितामधीष्वेत्युक्ते परं सन्निकर्षमेवाधीते शिष्यः ? नैतदेवम्; पदस्य पदान्तरेण यदानन्तर्यं सा संहितेति लोकेऽभिधीयते । तथा च वक्तारो वदन्ति —संहितामधीते न पदानि, पदान्यधीते न संहितामिति । तथा चैकपदे हि संहिताकार्यं न स्यात् 'इको यणचि' इति—कुमार्यौ, कुमार्य इति । सति ह्यस्मिन् वर्णानां सन्निकर्षविशेषस्यानेन संहितासंज्ञा विधीयत इति सर्वत्रैव भवति ॥ १०९ ॥

**विरामोऽवसानम् ॥ विरतिर्विराम इति** भावे घञ् । विरामो वर्णोच्चारणाभावोऽवसानसंज्ञो भवति । **विरम्यतेऽनेनेति विराम इति** विरामशब्दस्य द्वितीयमर्थं दर्शयति । 'कृत्यल्युटो बहुलम्' इति बहुलवचनादसंज्ञायामपि 'हलश्च' इति घञ् । अत्र पक्षे येनान्त्येन वर्णेन विरम्यते सोऽवसानसंज्ञो भवति । तत्र पूर्वस्मिन्

**पदमञ्जरी**

एतावद्व्यवधानमवर्जनीयत्वात्सह्यते, अधिकेन तु कालेन व्यवधानं परग्रहणेन व्यावर्त्यत इत्यर्थः । यद्येवम्, द्रुतायामेव वृत्तौ स्यान्न मध्यमायां विलम्बितायां वा, न हि तथा तयोः सन्निकर्षो यथा द्रुतायां तुल्यः सन्निकर्षः । सर्वासु वृत्तिषु नैरन्तर्येणोच्चारणाद्यवर्णोपलम्भकभेदात्तु वृत्तिविशेषः । द्रुतायां स्वल्प उपलब्धिकालः, मध्यमायामधिकः, विलम्बितायामधिकतरः । द्विविधा हि ध्वनयः—प्राकृताः, वैकृताश्च । प्राकृता वर्णानामुत्पादकाः, वैकृते तु पुनः पुनरुपलम्भः, मध्यवर्ती तु कालः सर्वासु वृत्तिषु तावानेव । यद्वा—यस्यां वृत्तौ यावता कालेन व्यवायोऽवश्यम्भावी, ततोधिकेन व्यवायः परग्रहणेन व्यावर्त्यते । पदस्य पदान्तरेण यदानन्तर्यं तत्रैव लोके संहिताशब्दः प्रसिद्धः । तथा च—संहितामधीते न पदानि, पदान्यधीते न संहिताम् इति वक्तारो भवन्ति, ततश्च कुमार्यावित्यादौ पदावयवे संहिताकार्यं न स्यादिति सूत्रारम्भः ॥ १०९ ॥

**विरामोऽवसानम् ॥ विरतिर्विराम इति ।** विराम इति भावे घञ् । विरामः = वर्णोच्चारणाभावः । अर्थान्तरमाह—**विरम्यतेऽनेनेति वा विराम इति ।** 'कृत्यल्युटो बहुलम्' इत्यसंज्ञायामपि 'हलश्च' इति करणे घञ्, पूर्वत्राभावः संज्ञी उत्तरत्रान्त्यो वर्णः, तेन हि विरम्यते । तत्राद्ये पक्षे 'खरवसानयोः' इति परसप्तमी, कथं पुनरवसानेन, पौर्वापर्यमभावो हि सः, खरा वा, कथम् ? न हि यदा खरस्ति तदा रेफः, यदा रेफस्तदा खर; वर्णानां क्रमभावित्वाद्, उच्चरितप्रध्वंसित्वाच्च । अथ तत्र बुद्धिपरिकल्पितं पौर्वापर्यं तदभावेऽपि समानम् । एवं 'वावसाने' इत्यत्रापि । द्वितीये तु पक्षे खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते—खरि परतो

**भावबोधिनी**

संहिता के प्रदेश 'संहितायाम्' (पा० सू० ६।१।७२) आदि ॥ १०९ ॥

विरति = विराम, रुकना अथवा जिससे रुका जाता है, वह विराम है । विराम की अवसान संज्ञा होती है । उदा०—दधिँ । मधुँ । [अणोऽप्रगृह्यस्यानुनासिकः (पा० सू० ८।४।५७) में 'वाऽवसाने' (पा० सू० ८।४।५६) से अवसाने की अनुवृत्ति होने के कारण अवसान में ही अण् अनुनासिक होता है ।] वृक्षः । प्लक्षः [यहाँ 'खरवसानयोर्विसर्जनीयः' (पा० सू० ८।३।१५) से रेफ का विसर्ग अवसान में होता है ।]

**न्यासः**

पक्षेऽभावे पौर्वापर्याभावात् 'खरवसानयोः' इत्यत्रावसानापेक्षया विषयसप्तमीयं  [illegible] परसप्तमी। खरपेक्षया तु परसप्तमीयम्।

अन्ये तु—यद्यभावे पौर्वापर्यं न सम्भवतीत्यवसानापेक्षया 'खरवसानयोः' इति परसप्तमी नोपपद्यते, तदा 'इको यणचि' इत्यादावपि परसप्तमी नोपपद्यते। कथम्? वर्णानां क्रमभावित्वात्, उच्चरितप्रध्वंसितत्वाच्च। यदेगस्ति तदाज् नास्ति, यदा त्वजस्ति तदेग् नास्ति। अथात्र बुद्धिप्रकल्पितं पौर्वापर्यमाश्रित्य परसप्तमीष्यते, तदा 'खरवसानयोः' इत्यत्रापि तथैवेष्टव्येति मन्यमाना अवसानापेक्षयापि परसप्तमीमिच्छन्ति।

अपरे तु—अन्त्यस्य तु वर्णस्यावसानसंज्ञायां सत्याम् 'खरवसानयोः' इति षष्ठी विज्ञायते। अत्रावसानापेक्षया स्थानषष्ठी। रेफस्यावसानस्य विसर्जनीय इति खरपेक्षया त्वानन्तर्यलक्षणा षष्ठीति वदन्ति। तन्मते स्थानषष्ठ्यां हि 'रो रि' इत्यतो रेफस्यानुवृत्तस्य यत् स्थानित्वं तद् विरुध्यते। तदेवमेकापि विभक्तिर्यथायोगं विभज्यते। ननु चाभावपक्षेऽपि पूर्वस्मिन्नपि भागेऽनुच्चारणमस्ति, तत्रापि विसर्जनीयः प्राप्नोति—रथ इति, अस्ति ह्यत्रापि रेफात् प्रागुच्चारणम्? नैष दोषः; तत्र हि प्रकृतं पदग्रहणं रेफेग विशिष्यते—रेफान्तस्य पदस्येति। न च पूर्वेण रेफेण रेफान्तं पदं भवति। नन्वेवमप्यर्थस्यैषा संज्ञा स्यादिति 'खरवसानयोः' इत्यत्र 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति परिभाषा नोपतिष्ठते। शब्दे हि सप्तमीनिर्दिष्टे सतीयमुपतिष्ठते, नार्थे। तदनुपस्थाने च परेण रेफेग रेफान्तस्य रथ इत्येतस्य पदस्य पूर्वो यो रेफस्तस्य व्यवहितस्यापि विसर्जनीयः स्यात्, नैष दोषः; ज्ञापकान्न भविष्यति, यदयम् 'उरण् रपरः' इति व्यवहितस्य रेफस्य विसर्जनीयमकृत्वा निर्देशं करोति, तज्ज्ञापयति—व्यवहितस्य रेफस्य विसर्जनीयो न भवतीति।

नन्वत्र लोके प्रसिद्धेरेवान्त्ये वर्णेऽवसानशब्दस्य संप्रत्ययो भविष्यति। प्रसिद्धो हि लोके—अन्त्ये वर्णेऽवस्यतेः प्रयोगः। तथा हि केनावस्यतीत्युक्ते वक्तारो वदन्ति—इकारेणोकारेण वेति। इकारादिवर्णेनावसानं करोतीत्यर्थः। ततः प्रदेश एवावसानग्रहणं कर्तव्यमिति नार्थः संज्ञासंज्ञिप्रणयनेन, नैतदस्ति; अवपूर्वो हि स्यतिः परिसमाप्तावपि वर्तते—अवसितो वाद इति, अवगमेऽपि वर्तते—अवसितोऽर्थ इति, पराभवेऽपि वर्तते—द्वयोर्विवादेऽवसितो देवदत्त इति। तत्र यदीयं नारभ्यते, तदावसानग्रहणे सन्देहः स्यात्—किमभिधानावसानशब्दस्य ग्रहणमिति? 'विरामोऽवसानम्' इति तु संज्ञासंज्ञिसम्बन्धे क्रियमाणे परिसमाप्त्यादिरर्थो निर्वर्तितो भवति। एवमपि नार्थः संज्ञासंज्ञिसम्बन्धेन, प्रदेश एव ह्यन्तग्रहणं कर्त्तव्यम्—खरन्त्ययोरिति? एतदपि नास्ति; एवं हि सन्देहः स्यात्—किमन्त्यस्य वर्णस्य? उत पदस्य? आहोस्विद् वाक्यस्येति? तत्रान्त्यस्य विशेषणार्थं वर्णग्रहणं कर्त्तव्यं स्यात्। तस्मात् संज्ञासंज्ञिसम्बन्धः कर्त्तव्यः।

**पदमञ्जरी**

रेफस्य विसर्जनीयो भवति, अवसाने च रेफे स्थानिनि विसर्जनीय इति स्थान्यादेशस्य विषयता विवक्ष्यते। एवं 'वाऽवसाने' इत्यत्रापि।

दधिँ मधुँ इति। 'अणोऽप्रगृह्यस्यानुनासिकः' अत्र 'वावसाने' इति वर्तते। ननु च लोक एवावसानशब्दो विरामे प्रसिद्धः, यद्यप्यवपूर्वः स्यतिरवगतौ वर्तते केनैतदवसीयत इति? पराभवेऽपि अवसितो देवदत्त इति। अवसानशब्दस्तु। विराम एव प्रसिद्धः। न च रेफस्यावगतिपराभवयोः करणत्वं सम्भवतीति नार्थः

**भावबोधिनी**

अवसान के प्रयोगस्थल—'खरवसानयोर्विसर्जनीयः' (पा० सू० ८।३।१५) आदि हैं।

**विमर्श**—भाष्यकार के अनुसार 'संहिता' और 'अवसान' इन दोनों संज्ञाओं को बनाने की आवश्यकता

वृक्षः । प्लक्षः (८.३.१५) [illegible]

अवसान[illegible] 'खरवसानयोर्विसर्जनीयः' (८.३.१५) इत्येवमादयः ॥

इति श्रीजयादित्यविरचितायां काशिकावृत्तौ
प्रथमाध्यायस्य चतुर्थः पादः ॥

॥ समाप्तश्चायं प्रथमाध्यायः ॥

---

### न्यासः

वृक्षः, प्लक्ष इति । 'खरवसानयोर्विसर्जनीयः' । दधिँ मधुँ इति । 'अणोऽप्रगृह्यस्यानुनासिकः' इति । अत्र हि 'वावसाने' इत्यतोऽवसानग्रहणमनुवर्त्तते ॥ ११० ॥

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-
पञ्जिकायां प्रथमाध्यायस्य चतुर्थः पादः समाप्तः ॥

---

### पदमञ्जरी

संज्ञाकरणेन, तदाह—संहितावसानयोर्लोकविदितत्वात् सिद्धमिति । संहिताशब्दोऽपि सन्निकर्षमात्रे प्रसिद्धः, न पदयोरेव सन्निकर्ष इति वार्त्तिककारो मन्यते ॥ ११० ॥

पं० हरदत्तमिश्रविरचितायां पदमञ्जर्यां प्रथमाध्यायस्य चतुर्थः पादः ॥

---

### भावबोधिनी

नहीं थी क्योंकि लोकव्यवहार से ही इनका ज्ञान सम्भव है । 'संहितावसानयोर्लोकविदितत्वात् सिद्धम्' ॥ (म० भा० १।४।११०) परन्तु पाणिनि ने अनेक अन्य संज्ञाओं के समान इन्हें भी स्वीकार किया है ॥ ११० ॥

॥ इस प्रकार जयादित्यविरचित काशिकावृत्ति के प्रथम अध्याय का चतुर्थपाद समाप्त हुआ ॥

॥ जयशङ्करलालत्रिपाठिविरचित भावबोधिनी हिन्दी-व्याख्या में काशिकावृत्ति के
प्रथम अध्याय का चतुर्थ पाद समाप्त हुआ ॥

---

# अथ द्वितीयाध्याये प्रथमः पादः

## ३५२. समर्थः पदविधिः ॥ १ ॥ (६४७)

**परिभाषेयम् । यः कश्चिद् इह शास्त्रे पदविधिः श्रूयते स सर्वः समर्थो वेदितव्यः ।**

**न्यासः**

**समर्थः पदविधिः ॥ परिभाषेयमिति ।** परितो व्यापृता भाषा =परिभाषा । तथा चोक्तम्— 'परिभाषा पुनरेकदेशस्था सती सर्वं शास्त्रमभिज्वलयति प्रदीपवत्, यथा—वेश्म प्रदीपः' (म० भा० २.१.१, पृ० ३१-४) पुनरेतद् विज्ञायते—परिभाषेयम्, नाधिकार इति ? पदविधिग्रहणाल्लिङ्गात् । उत्तरत्र हि सर्वः पराङ्गवद्भावादिरनुक्रंस्यमानः पदविधिरेव । तत्र यद्ययमधिकारः स्यात्, पदविधिग्रहणमनर्थकं स्यात्; व्यावर्त्याभावात् । परिभाषायां त्वस्याम्, परिभाषा ह्येकदेशस्थापि सर्वत्र शास्त्रे व्याप्रियत इत्यसति पदविधि-ग्रहणे वर्णविधावप्युपतिष्ठेत । ततो वर्णविधिनिरासार्थं क्रियमाणं पदविधिग्रहणमर्थवद्भवति । तस्मात् पद-

**पदमञ्जरी**

**समर्थः पदविधिः ॥ परिभाषेयमिति ।** नाधिकारः, पदविधिग्रहणात्, अन्यथा वक्ष्यमाणानां पराङ्ग-वद्भावादीनां पदविधित्वाव्यभिचारादनर्थकं तत्स्यात् । परितः=सर्वतः–पूर्वत्र, परत्र, व्यवहिते च, अनन्तरे च—भाष्यते कार्यमनयेति करणे 'गुरोश्च हलः' इत्यकारप्रत्ययः । भावसाधन एव वाग्भेदोपचारात् सूत्रे प्रयुज्यते । इदंशब्दस्य सूत्रे प्रयुक्तस्यापि विधेयपरिभाषाशब्दसामानाधिकरण्यात् स्त्रीलिङ्गता । **स सर्व इति ।** ननु यः कश्चि-त्पदविधिरिति सामान्यनिर्देशेनैव तद्धर्मभूता व्याप्तिरुक्ता, किं सर्वग्रहणेन ? नैतदस्ति; 'यः कश्चिद् ब्राह्मण आनीयताम्' प्रत्युक्ते क्षत्रियादिनिवृत्तिः प्रतीयते, न व्याप्तिः ।

प्रथमपठितमपि समर्थशब्दमुल्लङ्घ्योद्देश्यसमर्पकत्वबलादार्थेन क्रमेण प्रथमभाविनं पदविधिशब्दं व्याख्यास्यन्विधिशब्दः कर्मसाधन इति दर्शयति—**विधीयत इति विधिरिति ।** कार्यमित्यर्थः । **पदानामिति ।** शेषलक्षणा षष्ठी । पदानां सतां यत्कार्यं विधीयत इत्यर्थः । यदि तु भावसाधनो विधिशब्द आश्रीयेत—विधानं विधिरिति, ततः पदेषु कृद्योगलक्षणा कर्मणि षष्ठी—पदानामसतां निष्पादनं पदविधिरिति, तत्र समासतद्धित-सुब्धातुवृत्तयो न संगृहीताः स्युः । तत्र हि पदानां सतां समासादिकार्यं विधीयते, न पुनः पदत्वम् । ननु च

**भावबोधिनी**

यह परिभाषा [सूत्र] है । इस [पाणिनीय व्याकरण] शास्त्र में जो कोई भी पदविधि सुनी जाती है वह सब समर्थ समझनी चाहिये ।

[विधि शब्द की व्युत्पत्ति—] विधीयते इति विधिः अर्थात् जो की जाय वह विधि = कार्य है, पदानाम् = पदों की [पदसम्बन्धी] विधि = पदविधि है और वह [पदविधि] समास आदि [तद्धित, आदि] हैं ।

**विमर्श**—प्रस्तुत सूत्र 'परिभाषा सूत्र है । परिभाषा इयम्' यह स्त्रीलिङ्ग का प्रयोग विधेय भूत 'परिभाषा' को मानकर किया गया है क्योंकि 'उद्देश्य' एवं विधेय' के परामर्शक सर्वनाम शब्द दोनों में से किसी के भी लिङ्ग का आश्रयण कर लेते हैं । जैसे 'शैत्यं हि यत् सा प्रकृतिः जलस्य' आदि में भी है । परितः = सर्वत्र भाष्यते कार्यमनया— इति परिभाषा—इस व्युत्पत्ति के अनुसार यह सूत्र पदसम्बन्धी विधि में सर्वत्र प्रवृत्त होता है । यदि अधिकार सूत्र माना जाता तब केवल आगे वाले सूत्रों में ही प्रवृत्ति हो पाती । दूसरी बात यह है कि इसके आगे पराङ्गवद्भाव आदि जितनी भी विधियाँ हैं, वे सभी पदविधि ही हैं, अतः इसका व्यावर्त्य कोई होगा ही नहीं, फलतः पदविधि का ग्रहण

**विधीयत इति विधिः, पदानां विधि=पदविधिः। स पुनः समासादिः।**



**न्यास**

विधिग्रहणाल्लिङ्गात् परिभाषेयं नाधिकार इत्यवसीयते। यद्येवम् 'इसुसोः सामर्थ्ये', 'न चवाहाहैवयुक्ते' इत्येवमादिषु योगेषु सामर्थ्यग्रहणं युक्तग्रहणञ्च किमर्थं क्रियते, यावता 'पदस्य' इति तत्रानुवर्तते, तत्र पदविधित्वादेवासामर्थ्ये न भविष्यति ? सत्यमेतत्; यदर्थं तु क्रियते तत् तत्रैव प्रतिपादयिष्यामः।

विधिशब्दोऽयमस्त्येव भावसाधनः—विधानं विधिरिति, अस्ति च कर्मसाधनः—विधीयत इति विधिः। तत्र भावसाधने विधिशब्द आश्रीयमाणे पदानामपरिनिष्पन्नानां परिनिष्पादनं पदविधिरिति पदेषु कर्मणि कृद्योगलक्षणा षष्ठी; तेषां विधिना सम्बन्धात्। कर्मसाधने तु परिनिष्पन्नानां व्यवस्थितानामेव पदानां यत् समासादि कार्यं विधीयते स पदविधिः। तत्र पदेषु च शेषलक्षणा षष्ठी भवति; विधीयमानस्य कार्यस्य पदसम्बन्धित्वेनोपादानात्। तत्र यदीह भावसाधनो विधिशब्द आश्रीयेत तदा विभक्तिविधानमेव संगृहीतं

**पदमञ्जरी**

कर्मसाधनपक्षेऽपि विभक्तिविधानमसंगृहीतं स्यात्, पदान्येव हि तत्र विधीयन्ते न तु पदानां सतां किञ्चिद् ? उच्यते—'कर्मणि द्वितीया' इत्यादिना तु नियमः क्रियते, न पदविधिः। अथाप्येकवाक्यतया स्वादिसूत्रेण विभक्तीनां विधानम् ? एवमपि कारकविभक्तिषु तावत्क्रियाकारकयोरविनाभूतः सम्बन्धः, उपपदविभक्तीनां तु 'अन्तरान्तरेणयुक्ते' इत्यादीनामुपसर्गविभक्तीनां च 'नेर्विशः' इत्यादीनामेकवाक्यतायां भिन्नवाक्यतायां च पदविधित्वमस्त्येव; उपपदानामुपसर्गाणां च पदत्वात्। समासादिरित्यादिशब्देन तद्धितवृत्त्यादीनां ग्रहणम्, तद्धिता अपि सुबन्तादुत्पद्यन्ते। 'समर्थानां प्रथमाद्वा' इत्यस्य तु समर्थग्रहणस्य प्रयोजनं तत्रैव वक्ष्यामः।

एवम् 'इसुसोः सामर्थ्ये' इत्यादीनामपि समर्थः शक्त इति; तत्रैव समर्थशब्दस्य रूढत्वात्। स्वकार्यनिष्पादनक्षमो हि लोके 'समर्थः' इत्युच्यते। अर्थप्रतिपादनं च शब्दानां स्वकार्यम्। स्वकार्यव्युत्पाद्यत्वेन चाधिकृता लौकिकाः वैदिकाश्च यस्य कस्यचित्प्रतिपादने समर्थाः, उच्यते चेदं समर्थ इति, तत्र सामर्थ्याद्विशेषोऽवगम्यते, स तु विशेषः प्रत्यासत्तेरेवंरूप इत्याह—**विग्रहवाक्यार्थाभिधाने इति**। विशेषेण गृह्यते = ज्ञायतेऽनेन समासार्थ इति विग्रहः। तादृशं च तद्वाक्यं चेति विशेषणसमासः। यद्वा—विशेषेण ग्रहणं विग्रहः, तदर्थं वाक्यं विग्रहवाक्यम्, अश्वघासादिवत्षष्ठीसमासः। अथ वा—अभेदोपचाराद्विग्रहार्थवाक्यं विग्रह इति विशेषणसमासः, तद्यथा—राजपुरुष इत्ययं समासः, तदर्थं विग्रहवाक्यं राज्ञः पुरुष इति, अस्य योऽर्थस्तदभिधाने राजपुरुषशब्दः

**भावबोधिनी**

व्यर्थ होगा। इसीलिये प्रस्तुत सूत्र पर महाभाष्य में लिखा है 'परिभाषा' एक स्थान पर रहती हुई भी दीपक के समान सम्पूर्ण शास्त्र को प्रकाशित = उपकृत करती है। इस कारण जहाँ भी पदविधि होती है, वहाँ 'समर्थः' की उपस्थिति होती है। इसीलिये वर्ण विधि में 'समर्थः' की उपस्थिति नहीं होती है।

[अनु०] [विधि शब्द की व्युत्पत्ति] विधीयते इति विधिः—जो किया जाय वह विधि = कार्य है। पदों की विधि = पदविधि, और यह पदविधि समास आदि होती है।

**विमर्श**—विधि शब्द की व्युत्पत्ति दो प्रकार से हो सकती है—(१) 'विधीयते इति विधिः' यहाँ कर्म अर्थ है। (२) 'विधानं विधिः'—यहाँ भाव अर्थ है। वि पूर्वक √ धा धातु से 'उपसर्गे घोः किः' (पा० सू० ३।३।९२) सूत्र से 'कि' प्रत्यय 'क्' लोप विधा+इ, कित् होने से धातु के आ का लोप 'आतो लोप इटि च' (पा० सू० ६।४।६४) सूत्र से। जब कर्म अर्थ में विधि शब्द माना जाता है तब 'पदानाम् विधिः' में शेष = सम्बन्ध अर्थ में षष्ठी होती है और विद्यमान रहने वाले पदों की विधि = कार्य समासादि का ज्ञान होता है। इस पक्ष में पदत्व विधेय नहीं होता है। किन्तु जब भाव अर्थ में विधि शब्द मानेंगे तब 'पदानां विधिः' यहाँ कर्म में षष्ठी होगी। फलतः विधान का कर्म पदत्व होगा।

**समर्थः = शक्तः । विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो वेदितव्यः ।**

**अथ वा समर्थपदाश्रयत्वात् समर्थः । समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानां विधिर्वेदितव्यः । वक्ष्यति—'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२.१.२४)—कष्टं श्रितः कष्टश्रितः ।**

**न्यासः**

स्यात्, समास-पराङ्गवद्भाव-तद्धितवृत्त्यादिकं न संगृह्येत; न हि तत्र पदानामसतां विधानम्, किं तर्हि ? व्यवस्थितानामेव पदानां समासादि कार्यं विधीयते । इतरत्र तु विधिशब्द आश्रीयमाणे तेऽपि संगृहीता भवन्तीति मन्यमानः कर्मसाधनं विधिशब्दमाश्रित्याह—**विधीयत इति विधिरिति** । ननु चात्रापि पक्षे विभक्तिविधानं न संगृह्येत, न हि 'कर्मणि द्वितीया' इत्येवमादिशास्त्रेण व्यवस्थितानां पदानां किञ्चित् कार्यं विधीयते, अपि तु पदान्येव विधीयन्ते ? यदि न संगृहीतं स्यान् न नाम । न च तदसंग्रहे किञ्चिदनिष्टमापद्यत इत्युत्तरत्र प्रतिपादयिष्यामः । **समासादिरिति** । आदिशब्देन तद्धितवृत्त्यादीनां ग्रहणम् ।

**समर्थः शक्त इति** । स्वकार्यनिर्वर्त्तनक्षम इत्यर्थः । स हि लोके समर्थ इत्युच्यते । स्वार्थप्रतिपादनमेव शब्दानां स्वकार्यम् । ये चेह लौकिका वैदिकाश्च शब्दा अधिकृतास्ते सर्वे एव स्वकार्यप्रतिपादनं प्रति समर्थाः । तस्मात् 'समर्थः' इति विशेषणोपादानसामर्थ्याद्विशेषः कश्चिदाश्रीयते । स च विशेषः—वृत्त्यर्थं यद्वाक्यमुपादीयते, प्रत्यासत्तेस्तदर्थप्रतिपादने या शक्तना तल्लक्षणो विज्ञायत इत्याह—**विग्रहवाक्यार्थाभिधान इत्यादि** ।

**पदमञ्जरी**

समर्थः; अतोऽपि तत्प्रतीतेः, स पुना राजविशिष्टः पुरुषः । **समर्थो वेदितव्य इति** । साधुत्वेनेति शेषः । यः पदविधिः स विग्रहवाक्यार्थाभिधाने समर्थः सन्साधुर्भवतीत्यस्मिन्पक्षे सूत्रार्थः, नार्थान्तरं साधयः पश्यामः ।

तत्तु सामर्थ्यं प्रयोगतोऽनुसर्त्तव्यम् । न पुनरियं वृत्तिरस्य वाक्यस्यार्थाभिधानसमर्था, नान्यस्येत्येतत्सूत्राक्षरैर्लभ्यते । अत एवास्मिन्व्याख्यानेऽपरितुष्टः सन्व्याख्यानान्तरमाह—**अथ वेति** । अत्र पक्षे उपचरितवृत्तिः समर्थशब्दः, तदाह—**समर्थपदाश्रयत्वादिति** । समर्थानि पदान्याश्रयो यस्य स तथोक्तः । अन्वर्थश्च समर्थशब्दो न रूढ इत्याह—**समर्थानां पदानां सम्बद्धार्थानां संसृष्टार्थानामिति** । यः पदानां विधिः स समर्थानां वेदितव्यः । समर्थानामिति कोऽर्थः ? संबद्धार्थानां संसृष्टार्थानां वेत्यर्थः । तत्र वाक्ये संबद्धार्थता व्यपेक्षा हि तत्र सामर्थ्यम् । अन्तोऽन्यापेक्षा = व्यपेक्षा । आकांक्षासन्निधियोग्यत्वेषु सत्सु यः परस्परसम्बन्धः सा व्यपेक्षा । वाक्ये हि 'राज्ञः' इति पदमनियतसंबन्ध्यपेक्षयोद्भूतसम्बन्धं विशेषणभूतमर्थमाचष्टे, स्वसंनिहितं योग्यं च पुरुषमपेक्षते ममाय-

**भावबोधिनी**

अविद्यमान = अनिष्पन्न पद की विधि—यह अर्थ होगा, पदों को मानकर विधि—यह नहीं होगा । अतः इष्टसिद्धि के अनुरोध से यहाँ पर कर्म अर्थ वाला ही विधि शब्द माना जाता है । इस प्रकार पदसम्बन्धी समास, तद्धित, नामधातु आदि विधियों के पदसम्बन्धी होने के कारण इनमें 'समर्थः' की उपस्थिति होती है ।

[सूत्र में] समर्थ = शक्त । विग्रह वाक्य के अर्थ के कथन में जो समर्थ = शक्त होता है उसे समर्थ समझना चाहिये ।

अथवा समर्थ पदों पर आश्रित होने के कारण 'समर्थ' [माना जाता] है । समर्थ पदों की = सम्बद्ध अर्थों वालें, संसृष्ट अर्थों वाले पदों की विधि = कार्य समझना चाहिये । जैसा कि आगे कहेंगे—'श्रित, अतीत, पतित, गत, अत्यस्त, प्राप्त और आपन्न—इन शब्दों के साथ द्वितीया विभक्त्यन्त का समास होता है । (पा० सू० २।१।२४) उदा०—कष्टं श्रितः—कष्टश्रितः ।

**विमर्श**—समर्थ शब्द का अर्थ है—शक्त । विशेषेण गृह्यते = ज्ञायतेऽनेन समासादिवृत्तीनाम् अर्थः—इति विग्रहः । जो समासादि वृत्तियों के अर्थ बोधन में शक्त होता है वही समर्थ होता है । इसी को मानकर पदविधि होती

**न्यासः**

विशेषेण गृह्यते वि[illegible]ति विग्रहः, विग्रहश्च तद्वाक्यञ्चेति विग्रहवाक्यम् । अथ वा—विशेषेण ग्रहणं विग्रहः, विग्रहार्थं यद्वाक्यं तद्[illegible]ग्रहवाक्यम् । शाकपार्थिवादित्वान्मध्यमपदलोपी समासः । विग्रहवाक्यस्यार्थो विग्रह-वाक्यार्थः, तदभिधाने तत्प्रत्यायने यः शक्तः स समर्थो वेदितव्यः, यथा—राजपुरुष इत्ययं समासः, एतदर्थं यद्वाक्यं राज्ञः पुरुष इति तस्य योऽर्थस्तदभिधाने राजपुरुष इत्ययं शब्दः शक्तः; ततोऽपि तदर्थस्य प्रतीतेः ! स पुनरर्थः—संसर्गः, भेदश्च; भेदसंसर्गौ वा । तत्र स्वविशेषस्य स्वामिविशेषेण स्वामिविशेषस्य च स्वविशेषेण यः सम्बन्धः स 'संसर्गः' आख्यायते । स्वान्तरस्य स्वाम्यन्तरेभ्यः, स्वाम्यन्तरस्य स्वान्तरेभ्यश्च व्यावृत्तिः 'भेदः' आख्यायते ।

**पदमञ्जरी**

मिति । 'पुरुषः' इत्येनेनापि पुरुषः स्वनिष्ठोऽभिधीयमानः स्वसंनिहितं राजत्वमवच्छेदकत्वेनापेक्षते—अहमस्येति । अतो विशेषणविशेष्यभावेन सम्बन्धः । अनियतसम्बन्धिविषयत्वाच्चापेक्षया यो यः सन्निहितो योग्यश्च तेन सम्बध्यते—राज्ञः पुरुषश्चाश्वश्च, राज्ञो देवदत्तस्य च पुरुष इति, नार्थान्तरस्य । वृत्तौ तु संसृष्टार्थता । एकार्थी-भावो हि तत्र सामर्थ्यम् । वृत्तौ हि राजपदं राजानमभिधायं न तावति पर्यवस्यति, पुरुषमप्याचष्टे, यथा—'गङ्गायां घोषः' इति गङ्गापदं तीरम् । यदि तु तावत्येव पर्यवस्येत्ततो यथा वाक्ये राज्ञः पुरुषोऽश्वश्चेति द्वाभ्यां सम्बन्धो भवति, तथा राजपुरुषोऽश्वश्चेत्यत्रापि स्यात् । स्वविशेषणसम्बन्धोऽपि स्याद्–ऋद्धस्य राजपुरुष इति । यथा ऋद्धस्य राज्ञः पुरुष इति । तथा पुरुषपदमपि राजविशिष्टमेव पुरुषमाचष्टे, न पुरुषमात्रम् । यदि तथा स्यात्ततो यथा वाक्ये राज्ञः पुरुषो देवदत्तस्य चेति द्वाभ्यां सम्बन्धो भवति, तथा राजपुरुषो देवदत्तस्य चेत्यपि स्यात् । अतो यस्य विशेषस्य भावादयं विशेषः स एकार्थीभावः ।

भाष्योक्ताश्चापरे विशेषाः—

'सुबलोपो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः ।

स्वरभेदश्च—

संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणम् ।। (म० भा० २. १. १) ।

चयोगश्च' इति । तथा सुप अलोपश्च भवति वाक्ये—राज्ञः पुरुषः, नीलमुत्पलमिति; समासे तु द्वयोरे-कस्मिन्विशिष्टेऽर्थे वृत्तेः पृथगर्थाभावात्स्वभावत एव विभक्तिर्निवर्त्तते । सैव च स्वाभाविकी निवृत्तिः शास्त्रेणा-न्वाख्यायते—'सुपो धातुप्रातिपदिकयो' इति प्रत्ययलक्षणेन नलोपादिपदकार्यं यथा स्यादिति । पृथगर्थाभावे तु पृथग्विभक्तिर्न भवति । तथा वाक्ये व्यवधानं च पृथगर्थत्व एव दृष्टम्—राज्ञ ऋद्धस्य पुरुष इति, असत्यदृष्टम्, यथा—राजपुरुषपदे न मध्ये पदान्तरं प्रक्षिप्यते । प्रयोगानियमश्च पृथगर्थत्वे दृष्टः—राज्ञः पुरुषः पुरुषो राज्ञ

**भावबोधिनी**

है । विग्रह वाक्यार्थाभिधाने शक्तः—इसका तात्पर्य है—(१) विग्रह रूपी जो वाक्य उसके अर्थ के कथन में, (२) विग्रह के लिये जो वाक्य, उसका जो अर्थ उसके अभिधान में शक्त, (३) इनमें अभेदोपचार से विग्रहार्थ वाक्य विग्रह है, विशेषण समास है । जैसे—राजपुरुषः यह समास है, इसके लिये जो वाक्य है—राज्ञः पुरुषः, इसका जो अर्थ उसके अभिधान में राजपुरुष यह शब्द शक्त है, क्योंकि इससे भी उसके अर्थ की प्रतीति होती है ।

यहाँ अर्थ की तीन स्थितियाँ सम्भव है—(१) संसर्ग, (२) भेद, (३) भेद और संसर्ग दोनों । (१) राजपुरुषः आदि में स्वविशेष = पुरुष का स्वामि विशेष (राजा) का और स्वामि विशेष का तथा 'स्वविशेष' का जो सम्बन्ध है वह 'संसर्ग' है । (२) दूसरे स्व की दूसरे स्वामी से और दूसरे स्वामी की, दूसरे स्व से व्यावृत्ति = पार्थक्य 'भेद' है । उभयवादी के मत में उभय पदार्थ हैं ।

### न्यासः

तत्र संसर्गवादिनो मते संसर्ग एव शब्दार्थः, व्यावृत्तिस्त्वर्थसंगृहीता। [illegible] व्यावर्त्यमानयोः स्वस्वामिनोः सम्बन्ध्यन्तरेभ्यः संसर्ग उपपद्यते। भेदवादिनस्तु व्यावृत्तिरेव शब्दार्थः, संसर्गोऽर्थसंगृहीतः; न हि व्यावर्त्यमानस्य सम्बन्ध्यन्तरेणासम्बद्धस्य स्वाङ्गादेरवस्थानमस्ति। उभयवादिनस्तु उभय एव शब्दार्थः। यदि विग्रहवाक्यार्थाभिधाने यः शक्तः स समर्थो विज्ञायेत, एवं सति समासतद्धितविषयमेव सामर्थ्यमिति पराङ्गवद्भावविभक्तिविधानयोरियं परिभाषा नोपतिष्ठेत, न हि तत्र विग्रहवाक्यार्थाभिधानमस्ति ? यदि नोपतिष्ठेत, न नाम; न च तदनुपस्थाने किञ्चिदनिष्टमापद्येत। तथा हि—पराङ्गवद्भावे तावनिमित्तग्रहणं देशयिष्यति भाष्यकारः। तत्र च निमित्तस्य निमित्तिना सामर्थ्यमस्त्येव—मद्राणां राजन्, परशुना वृश्चन्निति। विभक्ति-

### पदमञ्जरी

इति। असति तु तत्र न दृष्टः, यथा—राजपुरुषपदे। वर्णेषु स्वरभेदोऽपि पृथगर्थत्व एव दृष्टः—राज्ञः पुरुष इति। द्वावपि निस्स्वरेणाद्युदात्तौ। अभेदे न दृष्टः, यथा—पुरुष इति। वृत्तौ चैकस्वर्यं दृश्यते। किं च, संख्याविशेषोऽवगम्यते पृथगर्थेषु—राज्ञः राज्ञोः राज्ञां पुरुष इति। वृत्तौ त्वभेदैकत्वसंख्या गम्यते, तदेतत् 'अलुगुत्तरपदे' इत्यत्रोपपादयिष्यामः। व्यक्तं चाभिधानं पृथगर्थेषु—तिष्ठति ब्राह्मणस्य कम्बल इति। वृत्तौ त्वव्यक्तमभिधानं—तिष्ठति ब्राह्मणकम्बल इति सन्देहो भवति—संबुद्धिर्वा स्यात् ? षष्ठीसमासो वा ? इति, न चात्र स्वरान्निर्णयः। वाक्येऽप्यामन्त्रितनिघातः कम्बलशब्दो घृतादित्वादन्तोदात्तः, समासेऽप्यन्तोदात्तता। उपसर्जनविशेषणं च व्याख्यातम्। चयोगश्च भवति पृथगर्थेषु—राज्ञो गौश्चाश्वश्च कम्बलश्चेति। वृत्तौ त्वैकार्थ्याद्भेदनिबन्धनस्य समुच्चयस्याभावाच्चशब्दो निवर्त्तते—राज्ञो गवाश्वकम्बला इति, तदेतैर्विशेषैर्विज्ञायत संभिन्नोभयरूपः पांसूदकवदविभागापन्नो वृत्तावर्थ इति। तेन राज्ञः पुरुषमानय राजपुरुषमानयेति च यद्यप्येक एवानीयत इति कार्य-

### भावबोधिनी

भाष्योक्त 'समर्थ' पद की दूसरी व्याख्या यह है कि—समर्थानि पदानि आश्रयो यस्य सः समर्थः।' यह मानकर समर्थ पदाश्रित विधि भी समर्थ है। इस प्रकार समर्थ पदों की विधि को ही यहाँ लिया जाता है। समर्थ पदों = सम्बद्ध संसृष्ट अर्थों वाले पदों की विधि।

सामर्थ्य के दो रूप हैं—(१) एकार्थीभाव और (२) व्यपेक्षा। परस्पर आकाङ्क्षा व्यपेक्षा होती है। जैसे—'राज्ञः पुरुषः' आदि वाक्य में राजा पुरुष की अपेक्षा करता है—मम अयम्। और पुरुष राजा की अपेक्षा करता है—अहम् अस्य। इसके लिये काशिकाकार ने 'सम्बद्धार्थानाम्' यह लिखा है। संसृष्टार्थानाम्—इसके द्वारा एकार्थीभाव का ज्ञान कराया है—पृथक्-पृथक् अवस्थित भिन्न-भिन्न अर्थों वाले पदों की समास में साधारणार्थता (साधारण अर्थ वाला होना) यह एक अवस्था विशेष है इसे एकार्थीभाव कहा जाता है। वाक्य में यह नहीं होती क्योंकि इसमें सबका अर्थ अलग-अलग ही होता है।

नागेशभट्ट आदि नव्यवैयाकरणों के अनुसार परिष्कृत एकार्थीभाव का स्वरूप यह है—'पृथक् पृथगर्थोपस्थापकपदानां समुदायनिष्ठैकशक्त्या एकोपस्थितिजनकत्वमेकार्थीभावः।' यहाँ 'शक्तं पदम्' के अनुसार पद लेना चाहिये सुबन्त और तिङन्त नहीं। इसलिये 'औपगवः' आदि में अव्याप्ति नहीं होती है। राज्ञः पुरुषः राजपुरुषः आदि में अलग-अलग अर्थों के उपस्थापक पदों का समुदायनिष्ठ शक्ति द्वारा राजविशिष्ट पुरुष रूप एक अर्थ की उपस्थिति जनकता है। इस पर विशद चर्चा नव्यव्याकरण के टीका ग्रन्थों में देखी जा सकती है।

पदविधिसंहचरित को भी 'पदविधि' माना जाता है। इसीलिये सन्नन्त आदि में एकार्थीभाव है। अन्यथा सन्नन्त में पदनिष्ठ उद्देश्यता से निरूपित विधेयताश्रयता नहीं होने से पदविधि नहीं होगी। अतः साहचर्य मानना आवश्यक है।

**समर्थग्रहणं किम् ? पश्य देवदत्त कष्टम्, श्रितो विष्णुमित्रो गुरुकुलम् ।** (म० भा० २.१.१) **'तृतीयातत्कृतार्थेन गुणवचनेन'** (२.१.३०) **शङ्कुलया खण्डः शङ्कुलाखण्डः । समर्थग्रहणं किम् ? किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन । 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः** (२.१.३६)'**—यूपाय दारु यूपदारु । समर्थग्रहणं किम् ? गच्छ त्वं यूपाय, दारु देवदत्तस्य गेहे । 'पञ्चमी भयेन'** (२.१.३७)**—वृकेभ्यो भयं वृकभयम् । समर्थग्रहणं किम् ? गच्छ त्वं मा वृकेभ्यः, भयं देवदत्तस्य यज्ञदत्तात्** (म० भा० २.१.१) **। 'षष्ठी'** (२.२.८)**—राज्ञः पुरुषो राजपुरुषः । समर्थग्रहणं किम् ? भार्या राज्ञः, पुरुषो देवदत्तस्य** (म० भा०) **। 'सप्तमी शौण्डैः'** (२.१.४०)**— अक्षेषु शौण्डः अक्षशौण्डः । समर्थग्रहणं किम् ? शक्तस्त्वमक्षेषु, शौण्डः पिबति पानागारे** (म० भा०) **।'**

### न्यासः

विधानेऽपि यास्तावत् कारकविभक्तयस्ता येष्वेव कारकेषु कर्मादिषु विधीयन्ते तेषां क्रियया सम्बन्धोऽस्त्येव । उपपदविभक्तिष्वपि 'सहयुक्तेऽप्रधाने' इत्येवमादिषु युक्तग्रहणादीनि सन्ति, तत्रापि सामर्थ्यमस्त्येव । तत्रैवं सम्बन्धे सति विभक्तय इष्यन्ते, न तु विग्रहवाक्यार्थाभिधानलक्षणसामर्थ्ये । एवं तावन्मुख्यार्थवृत्तिः समर्थ-शब्दो दर्शितः ।

इदानीमुपचरितवृत्तिं दर्शयितुमाह—**अथ वेत्यादि** । समर्थानि पदान्याश्रयो यस्य स समर्थपदाश्रयः, तद्भावः समर्थपदाश्रयत्वम् । ततो हेतोः समासादिः समर्थ उच्यते । आश्रयस्य समर्थत्वादुपचारेणाश्रितोऽपि तथेति व्यपदिश्यते; कारणधर्मस्य कार्ये उपचारात्, यथा—नड्वलोदकं पादरोगः । 'समर्थानाम्' इत्यनेन वाक्ये

### पदमञ्जरी

योगिनोऽभेदस्तथाप्यभिधानप्रकारो भिद्यते, यथा—ब्राह्मणाः शतं भोज्यन्ताम्, ब्राह्मणानां शतं भोज्यतामिति । तदेवं वृत्तिवाक्ययोरर्थो भिद्यत इति स्थितम् । एवं च तत्र तत्र वावचनं चिन्त्यप्रयोजनम्; भिन्नार्थया वृत्त्या वाक्यस्य बाधाऽप्रसङ्गात् ।

अन्ये तु जहत्स्वार्था वृत्तिरिति वदन्तो वर्त्तिपदानामानर्थक्यमेवाहुः, तत्तु न रोचयामहे । किं राजपुरुष इत्यत्र राजार्थो न गम्यते ? ओमिति चेत् पुरुषमात्रानयनं प्राप्नोति । अथ गम्यते ? किं निबन्धना तस्यावगतिः ? न तावत् समासस्य तत्र शक्तिः कल्प्या; राजशब्दनिबन्धनायामपि तस्यामनर्थाभावात् । न च वाक्ये राजपदं व्युत्पन्नं पुनः समासे व्युत्पत्तिमपेक्षते, तावत्येव च प्रतिपद्यते राजार्थः । अतो न जहत्स्वार्था वृत्तिः, अर्थाभिधान-प्रकारभेद इत्येतदेव सांप्रतम् ।

### भावबोधिनी

[अनु०] समर्थ ग्रहण का क्या प्रयोजन है ? [वास्तव में सूत्र का क्या प्रयोजन है ? यही प्रश्न का अभिप्राय है। क्योंकि केवल 'पदविधिः' शब्द से कोई कल्पना नहीं होती है ।] 'पश्य देवदत्तः ! कष्टम्, श्रितो विष्णुमित्रो गुरु-कुलम् [देवदत्त ! कष्ट देखो, विष्णुमित्र गुरुकुल का आश्रय लिये है ।] यहाँ 'कष्टम्' और 'श्रितः' का परस्पर सम्बन्ध नहीं है, 'कष्टम्' का दर्शन क्रिया के साथ और 'श्रितः' का 'गुरुकुलम्' के साथ । अतएव सामर्थ्य के अभाव में समास नहीं होता है ।] 'तृतीया तत्कृतार्थेन गुणवचनेन' [तृतीयाविभक्त्यन्त सुबन्त' का तृतीयान्तार्थकृत गुणवाची शब्द के साथ और 'अर्थ' शब्द के साथ समास होता है ।] शङ्कुलया खण्डः—शङ्कुलाखण्डः [सरौते द्वारा किया गया टुकड़ा । यहाँ समास होता है ।] समर्थग्रहण का क्या प्रयोजन है ? 'किं त्वं करिष्यसि शङ्कुलया, खण्डो देवदत्त उपलेन [यहाँ 'शङ्कुलया' का सम्बन्ध करिष्यसि के साथ है और 'खण्डः' का 'उपलेन' के साथ । अतः दोनों का सामर्थ्य न होने से समास नहीं होता है, 'तुम शंकुला = सरौते से क्या करोगे, देवदत्त ने उपल = पत्थर का खण्ड = टुकड़ा कर दिया ।] 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः [चतुर्थ्यन्त सुबन्त का तदर्थ, अर्थ, बलि, हित, सुख एवं रक्षित के साथ समास होता है ।] उदा०—यूपाय दारु = यूपदारु (यूप = यज्ञीय पशु बाँधने का खूँटा, उसके लिये लकड़ी) समर्थग्रहण किसलिये है ?

**न्यासः**

व्यपेक्षालक्षणं सामर्थ्यमाह । तथा हि 'राज्ञः पुरुषः' इत्यत्र वाक्ये राजा पुरुषमपेक्षते ममायमिति, पुरुषोऽपि राजानमपेक्षते—अहमस्येति । **संसृष्टार्थानामित्यनेन** समासे पदानामेकार्थीभावलक्षणं सामर्थ्यं दर्शयति । एकार्थीभावश्च पृथगवस्थितानां भिन्नार्थानां पदानां समासे साधारणार्थता नामावस्थाविशेषः । वाक्ये हि साधारणार्थता नास्ति; भिन्नार्थत्वात् । अत एव तत्र भेदनिबन्धना षष्ठ्युपजायते—राज्ञः पुरुष इति । वृत्तौ तूभयपदव्यवच्छिन्नार्थाभिधानात् साधारणार्थता भवति । एतेनैतदुक्तं भवति—समासे हि विशेषणं विशेष्यमनुप्रविशत्येकार्थीभवति विशेष्येण सह, वाक्ये हि विशेषणं विशेष्यात् पृथगवतिष्ठत इति । यस्मिन्नसति, वाक्ये राज्ञो गौश्चाश्वश्च पुरुषश्चेति भेदनिबन्धनसमुच्चयप्रतिपादनाय चशब्दः प्रयुज्यते । समासे तु यस्मिन् सति स निवर्त्तते राज्ञो गवाश्वपुरुषा इत्ययमेकार्थीभावो वेदितव्यः । **पश्य देवदत्त कष्टम्, श्रितो विष्णुमित्रो गुरुकुलमिति** । अत्र कष्टशब्दस्य पश्येत्यनेन सम्बन्धः न तु श्रितशब्देन; तेन सामर्थ्याभावात् समासो न भवति । ननु च श्रितादीनां

**पदमञ्जरी**

तत्र **सम्बद्धार्थानां संसृष्टार्थानामिति** सामर्थ्यद्वयमपि स्थितं परिभाषाप्रवृत्तौ हेतुर्नान्यतरत्, यतो मा भूद्व्यपेक्षामात्राश्रयेण सापेक्षस्यापि वृत्तिः । यद्येवम्, पराङ्गवद्भावे विभक्तिविधाने च सा न प्रवर्त्तेत; तत्रैकार्थीभावस्यासम्भवात् । मा प्रवर्त्तिष्ट, पराङ्गवद्भावे तन्निमित्तग्रहणं नोदयिष्यति । विभक्तिविधानेऽपि क्रियाकारकयोर्व्यपेक्षाऽविनाभाविनी क्वचिद्युक्तग्रहणम्; क्वचिद्योगग्रहणम्, क्वचित् तृतीयया योगस्याक्षेप इति न क्वापि दोषः । अत एवानन्तरमपि पराङ्गवद्भावमुल्लङ्घ्य समासमुदाहरति—**वक्ष्यतीति** ।

**समर्थग्रहणं किमिति** । सूत्रं किमर्थमित्यर्थः । न हि केवलेन पदविधिग्रहणेन किञ्चित्क्रियते । **पश्येत्यादि** । ननु च श्रितादिभिर्द्वितीयां विशेषयिष्यामः—श्रितादियोगे या द्वितीयेति । एवमपि सापेक्षस्य प्रसङ्गः—महत्कष्टं श्रित इति, भवति ह्यत्र श्रितादिनिमित्ता द्वितीया, समर्थग्रहणे तु सति न भवति । यद्यप्यत्र वाक्यावस्थायां व्यपेक्षालक्षणसामर्थ्यमस्ति, वृत्त्यवस्थायां तु नैकार्थीभावः संभवतीत्यवोचाम । कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य वृत्तिः? नात्र गुरुणा देवदत्तस्य सम्बन्धः; किं तर्हि ? समुदायेन, गुरुद्वारकश्च कुलेन सम्बन्ध इत्यर्थाद् गुरुणापि योगो भवति । उक्तं च—

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्तेऽपि युज्यन्ते तद्वता सह ॥ इति ।

**भावबोधिनी**

गच्छ त्वं यूपाय, दारु देवदत्तस्य गेहे [तुम यूप के लिए = खूँटा लाने के लिये जाओ, देवदत्त के घर दारु = काष्ठ है । यहाँ यूपाय का सम्बन्ध 'गच्छ' के साथ है, दारु के साथ नहीं । अतः सामर्थ्य न होने से समास नहीं होता है ।] 'पञ्चमी भयेन [पञ्चम्यन्त सुबन्त का भय शब्दके साथ समास होता है] उदा०—वृकेभ्यो भयम्—वृकभयम् [भेड़िओं से भय ।] समर्थग्रहण का क्या प्रयोजन ? गच्छ त्वं मा वृकेभ्यः, अयं देवदत्तस्य यज्ञदत्तात् [जाओ तुम भेड़िओं से मत डरना, देवदत्त को यज्ञदत्त से भय है । यहाँ 'वृकेभ्यः' यह अध्याहार्य 'भैषीः' क्रिया के प्रति अपादान है । अतः 'भयम्' के साथ सम्बन्ध न होने से इनका समास नहीं होता है ।] 'षष्ठी' [षष्ठ्यन्त का सुबन्त के साथ समास होता है] उदा०—राज्ञः पुरुषः—राजपुरुषः [राजा का पुरुष = कर्मचारी] समर्थ ग्रहण किसलिये है ? भार्या राज्ञः, पुरुषो देवदत्तस्य [राजा की भार्या, देवदत्त का पुरुष । यहाँ 'राज्ञः' का पुरुष के साथ सम्बन्ध नहीं है, अतः दोनों का समास नहीं होता है ।] 'सप्तमी शौण्डैः (पा० सू० २।१।४०), [सप्तम्यन्त का शौण्ड आदि के साथ समास होता है ।] अक्षेषु शौण्डः—अक्षशौण्डः [पांसा क्रीडा में चतुर] समर्थग्रहण किसलिये है ? शक्तः त्वम् अक्षेषु, शौण्डः पिबति पानागारे [तुम पाँशों के विषय में = खेलने में समर्थ हो, शौण्ड शराबघर में शराब पी रहा है । यहाँ 'अक्षेषु का 'शौण्डः' के साथ सम्बन्ध न होने से सामर्थ्य नहीं है । अतः समास नहीं होता है ।]

**पदग्रहणं किम्? वर्णविधौ समर्थपरिभाषा मा भूत्। तिष्ठतु दध्यशान त्वं शाकेन। तिष्ठतु कुमारीच्छत्रं हर देवदत्त ॥१॥**

**न्यासः**

श्रुतत्वात् तैरेव द्वितीयां विशेषयिष्यामः—श्रितादीनां सम्बन्धिनी या द्वितीयेति, का च श्रितादीनां द्वितीया? या श्रितादिनिमित्ता; न चेह श्रितादिनिमित्ता द्वितीया, किं तर्हि पश्यतिक्रियानिमित्ता, तत् किमेतन्निवृत्त्यर्थेन समर्थग्रहणेन? नैतदस्ति; समर्थग्रहणे सति श्रितादीनां द्वितीयेति शक्यते व्यपदेष्टुम्। असति तु तस्मिन्, द्वितीयामात्रं श्रितादिभिः समस्यत इति विज्ञायते। एवं सापेक्षस्यापि समासः स्यादेव—महत् कष्टं श्रित इति, भवति ह्यत्र श्रितादिनिमित्ता द्वितीया। तस्मात् समर्थग्रहणं कर्त्तव्यम्। **किं त्वं करिष्यसि शष्कुलया, खण्डो देवदत्त उपलेनेति।** अत्रोपलेन तृतीयान्तेन कृतं खण्डनम्। अतस्तत्कृतत्वमस्तीति प्राप्नोति समासः, समर्थग्रहणान्न भवति। समर्थ ग्रहणे तु सत्ययमर्थो भवति—यस्यैव तृतीयान्तस्य समासस्तेनैव यदि कृतं खण्डनमिति। न चेह तत्कृतं खण्डनमतो न भवति समासः। एवमन्यत्राप्यसामर्थ्यादसमासो वेदितव्यः।

**पदमञ्जरी**

अथ वा—परिपूर्णार्थस्यान्येन सहैकार्थीभावः स्वार्थपरिपूर्त्तिश्च सम्बन्धिशब्दस्य प्रतियोगिनेति भवति तदपेक्षस्यापि वृत्तिः। उक्तं च—

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते।
स्वार्थवत्सा व्यपेक्षाऽस्य वृत्तावपि न हीयते॥ इति।

किं त्वं करिष्यसीत्यादि अत्र न शक्यं वक्तुम्[1]। **तत्कृतार्थेनेति।** तच्छब्दः प्रकृतपरामर्शाय तृतीयान्तं समस्यते—तदर्थेन यः कृतो गुणस्तद्वचनेनेति। अत्र च यस्य समासः शङ्क्यते—शंकुलयेति, न तदर्थेन कृतं खण्डनम्, यदर्थेन च कृतं खण्डनमुपलेनेति, न तस्य समासः शङ्क्यत इति न भविष्यतीति। तस्मान्महत्या शंकुलया खण्ड इति सापेक्षमुदाहर्त्तव्यम्। **गच्छ त्वं यूपायेति।** 'गत्यर्थकर्मणि' इति चतुर्थी। यद्वा—'क्रियार्थो-

**भावबोधिनी**

'पद' का ग्रहण किसलिये है? वर्णसम्बन्धी विधि = कार्य में 'समर्थः' इसकी उपस्थिति न हो। उदा०—तिष्ठतु दध्यशान त्वं शाकेन। यहाँ दधि + अशान में यण्विधि करना है, यह पदसम्बन्धी नहीं अपितु इक् और अच् वर्णसम्बन्धी है। सामर्थ्य की उपस्थिति नहीं होती है। दही रहे, तुम साग से खा लो। इन दो वाक्यों में 'दधि' प्रथम वाक्य में और 'अशान' दूसरे वाक्य में है। सामर्थ्य न होने पर भी 'इको यणचि' इससे गुण होता है।] 'तिष्ठतु कुमारीच्छत्रं हर देवदत्ताव' [कुमारी बैठे = रहे, देवदत्त से छत्र ले लो। यहाँ 'तिष्ठतु कुमारी' एक वाक्य है। 'छत्रं हर देवदत्ताव' यह दूसरा वाक्य है। अतः कुमारी और छत्रम् का सम्बन्ध नहीं है। सामर्थ्य के अभाव में भी 'दीर्घात्' [पा० सू० ६.१.७५] से तुक् आगम होता है।] दध्यशान में इ का यण् आदेश और 'कुमारीच्छत्रम्' में नित्य तुक् होता है।

**विमर्श**—जहाँ पदोद्देश्यक विधि रहती है वहीं सामर्थ्य की अपेक्षा की जाती है। इसी के लिये 'पद' का ग्रहण है। इसके फलस्वरूप जहाँ वर्णोद्देश्यक विधि रहती है वहाँ यह परिभाषा नहीं उपस्थित होती है। इस कारण (१) 'तिष्ठतु दधि', और (२) अशान त्वं शाकेन' यहाँ 'दधि' का 'अशान' के साथ सम्बन्ध न होने पर भी, सामर्थ्य न रहने पर भी यण् = इ का य् हो जाता है क्योंकि यह वर्ण कार्य है। इसी प्रकार (१) 'तिष्ठतु कुमारी' (२) 'छत्रं

1. सामर्थ्यमिति शेषः।

**च्छत्रं हर देवदत्तात्** (म० भा०)। **यणादेशो** (६.१.७७) **नित्यश्च तुग्** (६.१.७५) **भवति॥**

## ३५३. सुबामन्त्रिते पराङ्गवत्स्वरे ॥ २ ॥ (३६५३)

**सुबन्तमामन्त्रिते परतः परस्याङ्गवद्भवति, स्वरे=स्वरलक्षणे कर्तव्ये। तादात्म्यातिदेशोऽयम्।**

**न्यास**

**यणादेशो नित्यश्च तुग् भवतीति।** द्वावप्येतौ वर्णविधी। तेनासामर्थ्येऽपि भवतः। नित्यश्च तुग् भवति 'दीर्घात्' इत्यनेन। यस्तु 'पदान्ताद्वा' इत्यनेन विकल्पितस्तुग् विधीयते स पदविधिः, अतोऽसामर्थ्ये न भवति।

अन्ये तु यणादेशोऽनित्यश्च तुग् भवतीत्यकारप्रश्लेषं वर्णयन्ति। एवञ्चाहुः—'पदान्ताद्वा' इत्यनेन विकल्पितस्तुग् भवतीति। 'पदान्ताद्वा' इत्यत्र ह्यन्तग्रहणस्यैतदेव प्रयोजनम्—पदान्तभक्तस्तुगागमो यथा स्यात्, पदभक्तो मा भूदिति। तेन विकल्पितो यस्तुग् विधीयते स पदविधिर्न भवति। तेनासामर्थ्येऽपि भवति ॥ १ ॥

**सुबामन्त्रिते पराङ्गवत् स्वरे ॥ पराङ्गवदिति।** अत्राङ्गशब्दोऽवयववचनः। परस्याङ्गवत् परैकवद्भवति। तद्ग्रहणेन गृह्यत इत्यर्थः। एवं तादात्म्यातिदेशोऽयं विज्ञायत इत्याह—**तादात्म्यातिदेशोऽयमिति।**

**पदमञ्जरी**

पपदस्य च कर्मणि' इति, यूपमाहर्त्तुं गच्छेति, अत्राप्यतदर्थत्वादेव दारुणो न भविष्यतीति सापेक्षं प्रत्युदाहर्त्तव्यम्—महते यूपाय दार्विति।

**यणादेशो नित्यश्च तुग्भवतीति।** द्वावप्येतौ वर्णविधी, नित्यस्तुक् च 'दीर्घात्' इत्ययमेव, यस्तु 'पदान्ताद्वा' इति विकल्पितस्तुक् स पदविधित्वादत्र न भवति।

अन्ये तु यणादेशोऽनित्यश्च तुग्भवतीत्यकारप्रश्लेषं वर्णयन्तः 'पदान्ताद्वा' इति विकल्पितस्तुग्भवतीति व्याचक्षते। नन्वसौ पदविधिर्नेति? आह—तत्रान्तग्रहणं न कर्तव्यम्, प्रकृतेन दीर्घेण पदस्य विशेषणादेव दीर्घान्तस्य पदस्येति सिद्धम्। एवं सिद्धेऽन्तग्रहणस्यैतत्प्रयोजनम्—पदान्तस्य दीर्घस्य वर्णस्य विधिस्तुग् यथा स्यात्, दीर्घान्तस्य पदस्य मा भूदिनि ॥ १ ॥

**सुबामन्त्रिते पराङ्गवत्स्वरे। परस्याङ्गवदिति।** तस्यैव पदस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति, तद्ग्रहणेन गृह्यत इत्यर्थः। **तादात्म्यातिदेशोऽयमिति।** अङ्गशब्दस्यावयववचनत्वात् तस्यामन्त्रितस्यात्मा

**भावबोधिनी**

हर देवदत्तात्' ये दो वाक्य है। 'कुमारी' का 'छत्रम्' के साथ सम्बन्ध नहीं है। परन्तु यहाँ दीर्घ वर्ण को मानकर तुक् करना है, सामर्थ्य की अपेक्षा नहीं रहती, तुक् हो जाता है।

यणादेशो नित्यश्च तुक् भवति—ऐसा पाठ मानने पर 'दीर्घात्' (पा० सू० ६।१।७५) इससे तुक् होता है। यदि पूर्वरूप के द्वारा अकार का प्रश्लेप मान लें 'यणादेशोऽनित्यश्च तुग् भवति' तब तो 'पदान्ताद् वा' इस सूत्र से तुक् होता है। वास्तव में अकार-प्रश्लेप का पक्ष तर्कसंगत नहीं है क्योंकि यहाँ वर्णविधि = तुक् होना प्रतिपाद्य है। अतः 'नित्य तुक् ही मानना उचित है' ॥ १ ॥

आमन्त्रित = सम्बोधनान्त शब्द परे रहते (पूर्ववत्) सुबन्त परवर्ती के अङ्ग = अवयव के समान हो जाता है, स्वर में = स्वरसम्बन्धी कार्य करने की स्थिति में। यह तादात्म्य का अतिदेश है। [तस्य = आमन्त्रितस्य, आत्मा तदात्मा, तस्य भावः—तादात्म्यम्, तत्स्वभावत्व] सुबन्त आमन्त्रित में अनुप्रवेश कर जाता है। [आमन्त्रित में ही

सुबन्तमामन्त्रितमनुप्रविशति। वक्ष्यति—'आमन्त्रितस्य च' (६.१.१९८), आमन्त्रितस्यादिरुदात्तो भवति। स ससुप्कस्यापि यथा स्यात्। कुण्डेनाटन्। परशुना वृश्चन्। मद्राणां राजन्। कश्मीराणां राजन्।

**सुबिति किम्? पीड्ये पीड्यमान।**

**न्यासः**

तादात्म्यम् = तत्स्वभावत्वम्। सुबन्तमित्यादिना तमेव तादात्म्यातिदेशं स्पष्टीकरोति। **सुबन्तमामन्त्रितमनुप्रविशतीति**। तत्रान्तर्भवतीत्यर्थः। **कुण्डेनाटन्निति**। अत्र कुण्डशब्दोकार आमन्त्रितस्वरः। एवमन्यत्रापि ससुप्कस्यामन्त्रितस्य स्वरो वेदितव्यः।

**पीड्ये पीड्यमानेति**। हे पीड्यमान त्वदीयया पीडयाहं पीड्ये, बाध्येऽहमित्यर्थः। 'पीड अवगाहने'

**पदमञ्जरी**

तदात्मा, तस्य भावस्तादात्म्यम्, तत्स्वभावत्वमित्यर्थः। एतदेव स्पष्टयति—**सुबन्तमिति**। अनुप्रविशति = अन्तर्भवति, सुबन्तामन्त्रितसमुदाय एकस्मिन्नामन्त्रिते संपन्ने यः स्वरः शक्यते कर्तुं स कर्त्तव्य इत्यर्थः। कः पुनरसौ? आद्युदात्तत्वम्, समुदायस्य च पदात्परत्वे निघातः। **कुण्डेनाटन्निति**। नन्वत्र सति तावत्पराङ्गवद्भावे समुदायस्याद्युदात्तत्वं शेषनिघातश्च, असत्यपि कुण्डशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः, पदात्परमामन्त्रितं निहन्यते। यदा तह्यटन्नित्येतत्पादादौ वर्त्तते, तदा नास्ति निघात इति द्वयोराद्युदात्तत्वं स्यात्। किं च पुंल्लिङ्गोऽपि कुण्डशब्दोऽस्ति—

पत्यौ जीवति कुण्डः स्यान्मृते भर्त्तरि गोलकः। इति।

कुण्डीति च जानपदादिसूत्रेण ङीषि भवति। **परशुना वृश्चन्निति**। 'आङ्परयोः खनिशृभ्यां डिच्च' इति कुप्रत्ययान्तत्वादन्तोदात्तः परशुशब्दः, मद्रशब्दः 'मदेश्च' इति रक्प्रत्ययान्तः, कश्मीरशब्दो घृतादित्वादन्तोदात्तः, 'सुबन्तस्य पराङ्गवद्भावे तन्निमित्तग्रहणम्' तस्यामन्त्रितवाच्यस्यार्थस्य यन्निमित्तं तदभिधाय्येव सुबन्तं पराङ्गवदित्यर्थः। उदाहरणेषु तृतीयान्तस्य तावन्निमित्तत्वमस्त्येव; षष्ठ्यन्तस्याप्यस्ति; भृत्यनिमित्ता हि राजता, देशनिमित्ता वा। एवं गोषु स्वामिन्नित्यत्रापि भवति। तन्निमित्तत्वाभावे तु न भवेत्। सति तु तद्ग्रहणेऽत्रापि न भवति—'मरुत्वाँ इन्द्र वृषभो रणाय (ऋ० ३.४७.१), मरुद्भिरिन्द्र सख्यं ते अस्तु (ऋ० ८.९७.७), मायाभिरिन्द्रमायिनम् (ऋ० १.११.७), एतेनाग्ने ब्रह्मणा वावृधस्व (ऋ० १.३१.१८) क्षत्रेणाग्ने स्वायुः संरभस्व[1], मित्रेणाग्ने मित्रधेये यतस्व (वाज० सं० २७.५)।

**सुबिति किमिति**। तन्निमित्तग्रहणादेव तिङन्तस्य सिद्धो निरास इति प्रश्नः। **पीड्ये पीड्यमानेति**।

**भावबोधिनी**

अन्तर्भूत हो जाता है, अलग नहीं माना जाता है। अतः दोनों को आमन्त्रित ही मानकर स्वर किया जाता है।]

आगे कहेंगे 'आमन्त्रितस्य च' (पा० सू० ६।१।१९७) आमन्त्रित का आदि उदात्त होता है। वह पूर्ववर्ती सुबन्त सहित का जिस प्रकार हो सके, उसके लिये यह है। उदा०—कुण्डेनाटन् [कुण्डेन अटन् = कुण्ड के साथ घूमने वाले। यहाँ 'अटन्' यह आमन्त्रित है। कुण्डेन यह तृतीयान्त = सुबन्त है। यह आमन्त्रित का अङ्ग = अवयव बन जाता है। अतः षष्ठ अध्याय वाले 'आमन्त्रितस्य च' सूत्र से 'कुण्डेनाटन्' में 'कु' का 'उ' उदात्त = आदि उदात्त होता है। इसी प्रकार आगे के उदाहरणों में भी सुबन्त और आमन्त्रित दोनों को मिलाकर आमन्त्रित मानकर स्वर करना चाहिये।] परशुना वृश्चन् [परशु = फरसा से काटने वाले!] मद्राणां राजन्! [मद्र देश के राजन्!] कश्मीराणां राजन्! [कश्मीर देश के राजन्! इन सभी में 'आमन्त्रितस्य च' इससे आदि उदात्त हो जाता है।]

सुबन्त [पर का अङ्गवत् होता है।] यह किसलिये है? पीड्ये पीड्यमान! [हे पीड्यमान! = पीडित होने वाले पुरुष तुम्हारी पीडा से मैं भी पीड़ित हो रहा हूँ। यहाँ 'पीड्ये' और 'पीड्यमान' इन दोनों में कर्म अर्थ में

---

१. 'हे अग्ने त्वं क्षत्रेण संरभस्व = समारभस्व, ण्यन्तो बोध्यः। क्षत्रेण समारम्भय, यज्ञमिति शेषः। क्षत्रियान् यज्ञं कारयेत्यर्थः। कीदृशस्त्वं स्वायुः शोभनमायुः जीवनं यस्य स'—इति महीधरः।

**आमन्त्रित इति किम् ? गेहे गार्ग्यः ।**
**परग्रहणं किम् ? पूर्वस्य मा भूत्—देवदत्त कुण्डेनाटन् ।**

**न्यासः**

चुरादिणिच्, उभयत्र कर्मण्यात्मनेपदम्, एकत्रोत्तमपुरुषैकवचनमिट्, अन्यत्र शानच्, सार्वधातुके यक्, णिलोपः, 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इतीटोऽनुदात्तत्वम्, यक्, प्रत्ययस्वरेणाद्युदात्तत्वम्, 'एकादेश उदात्तेनोदात्तः' इत्येकार उदात्तः। पीड्यमानेत्यस्य तु 'पीड्य' इत्यस्मात् पदादुत्तरस्य 'आमन्त्रितस्य च' इति निघातः। **गेहे गार्ग्यं इति।** गेहशब्द उञ्छादिपाठादन्तोदात्तः, सप्तम्येकादेशः पूर्ववदुदात्तः, गार्ग्यं इतिञ्नित्स्वरेणाद्युदात्तः। पृथक् स्वर एवात्र भवति। **देवदत्त कुण्डेनाटन्निति।** यदि परग्रहणं न क्रियेत तदा देवदत्तशब्दं पूर्वमप्यामन्त्रितं प्रति सुबन्तस्यानुप्रवेशः स्यात्, ततश्च देवदत्तशब्दात् पदात् परस्याटन्नित्येतस्य 'आमन्त्रितस्य च' इति निघातः स्यात्। ननु च परग्रहणे क्रियमाणे कुण्डशब्दस्य पराङ्गवद्भावे सत्याद्युदात्तत्वे षाष्ठिके कृते देवदत्तशब्दात् पदात् परस्याटन्नित्येतस्य निघातेन भवितव्यमेव ? नैतदस्ति; अपादादौ हि स निघातः, पादादित्वञ्चेह

**पदमञ्जरी**

न हि सूत्रकारो वार्त्तिककारवचनेनातिव्याप्तिनिवारणं मन्यत इति भावः। 'पीड अवगाहने' चुरादिणिच्, उभयत्र कर्मणि लट्, एकत्रोत्तमैकवचनमिट्, अपरत्र शानच्, यकि णिलोपः, 'तास्यनुदात्तेत्' इति इटोऽनुदात्तत्वम्, यकः प्रत्ययस्वरः, 'एकादेश उदात्तेनोदात्तः' इत्येकार उदात्तः, पीड्यमानेत्यत्रामन्त्रितनिघातः। ननु च समर्थग्रहणानुवृत्त्यैवात्र न भविष्यति, अस्त्यत्रापि सामर्थ्यम्, कथम् ? सम्बोधनपदं क्रियाया एव विशेषकम्, तथा च—व्रजानि देवदत्तेत्यत्रामन्त्रितनिघातो भवति। उक्तं च—

सम्बोधनपदं [1]यच्चत्तक्रियया विशेषकम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥ इति। (वा० प० २.५)

अथ वा—हेतुहेतुमद्भावलक्षणोऽत्र सम्बन्धः, हे पीड्यमान त्वत्पीडयाहमपि पीड्य इति। **गेहे गार्ग्यं इति।** गेहशब्द उञ्छादित्वादन्तोदात्तः, एकस्यामासनादिकायां क्रियायां द्वयोरपि कारकत्वात्तद्द्वारेणास्ति सामर्थ्यम्।

**परग्रहणं किमिति।** सन्निधानादामन्त्रितस्यैव भविष्यतीति प्रश्नः। **पूर्वस्य मा भूदिति।** निमित्तभाव एवामन्त्रितस्योपक्षीणतया पूर्वस्यापि स्यादिति भावः। एवं च पूर्वस्यामन्त्रितत्वमतन्त्रम्। गार्ग्यः कुण्डे-

**भावबोधिनी**

आत्मनेपद है। पीड्ये में उत्तम पुरुष एकवचन है, अतः यह तिङन्त है। पराङ्गवत् नहीं होगा। दोनों के अलग-अलग स्वर होते हैं। पीड्ये अन्तोदात्त है। 'पीड्यमान' सर्व अनुदात्त है।

'आमन्त्रित' इसका क्या प्रयोजन है ? गेहे गार्ग्यः [घर में गार्ग्य है। यहाँ गार्ग्य यह आमन्त्रित नहीं है। अतः 'गेहे' इस सुबन्त का पराङ्गवद्भाव नहीं होता है। फलस्वरूप दोनों के अलग-अलग स्वर रहते हैं। 'गेहे' यह उदात्त है और गार्ग्य यह ञित्स्वर होने से आद्युदात्त है।]

पर का ग्रहण किसलिये है ? पूर्ववर्ती आमन्त्रित के अवयव के समान न होने लगे—देवदत्त ! कुण्डेन अटन् ! [यहाँ 'देवदत्त' अटन्' ये दोनों आमन्त्रित हैं। यदि 'पर' का ग्रहण नहीं रहता तो 'कुण्डेन' यह पूर्ववर्ती आमन्त्रित 'देवदत्त' का अङ्ग मान लिया जा सकता था, फलतः 'अटन्' इसको पद से परे मानकर अष्टम अध्याय के 'आमन्त्रितस्य च' (पा० सू० ८।१।१९) से सर्वानुदात्त हो जाता। किन्तु परग्रहण के फलस्वरूप 'कुण्डेन' यह 'अटन्' का ही अङ्ग होता

१. 'यच्च' इति वा पाठः वाक्यपदीये।

**अङ्गग्रहणं किम्? यथा मृत्पिण्डीभूतः स्वरं लभेत। उभयोराद्युदात्तत्वं मा भूत्।**

**वत्करणं किम्? स्वाश्रयमपि कार्यं यथा स्यात्। आम् कुण्डे नाटन्। 'आम एकान्तरमामन्त्रितमनन्तिके' (८.१.९५) इत्येकान्तरता भवति।**

### न्यासः

विवक्षितम्; तत्र च देवदत्तेत्यामन्त्रितस्वरेणाद्युदात्तः। एवं कुण्डेनाटन्नित्यपि। आमन्त्रितनिघातोऽत्र न भवति; पदादित्वात्। **यथा मृत्पिण्डीभूतः स्वरं लभेतेति**। कथं नाम सुबन्तसमुदायो मृत्पिण्ड इवैकीभूत एकरूपतामिवापन्नः स्वरं लभेतेत्येवमर्थमङ्गग्रहणम्। किमर्थं पुनरेकीभूतस्य स्वरप्राप्तये यत्नः क्रियत इत्यत आह—**उभयोरित्यादि**। यद्यङ्गग्रहणं न क्रियेत, ततश्च कार्यातिदेश-शास्त्रातिदेश-व्यपदेशातिदेशानामन्यतमः स्यात्। तथा च सति यथा परस्य कार्यमाद्युदात्तत्वमामन्त्रितव्यपदेश आद्युदात्तशास्त्रं च; तथा सुबन्तस्य पूर्वस्यापि स्यादिति, ततश्चोभयोरप्याद्युदात्तत्वं स्यात्। अङ्गग्रहणे तु सति तादात्म्यातिदेशोऽयं भवति। तेन मृत्पिण्डीभूतः सुबन्तसमुदाय आमन्त्रिताद्युदात्तरूपं स्वरं लभत इति न भवत्युभयोराद्युदात्तत्वप्रसङ्गः। **स्वाश्रयमपि कार्यं यथा स्यात्। आम् कुण्डेनाटन्नित्यत्र** अटन्नित्येतस्य 'पदात्परस्यामन्त्रितस्य' इति निघाते प्राप्ते 'न लुट्' इत्यतो नेत्यनुवर्त्तमाने 'आम एकान्तरमामन्त्रितमनन्तिके' इत्यनेन विधीयमानो निघातप्रतिषेधोऽसति वत्करणे न प्राप्नोति; एकान्तरताया अभावात्। परमेव हि स्यात् सुबन्तमसति वत्करणे, न च तथाभूतेनैकान्तरता युक्ता। वत्करणे तु सति, भवति कदाचित् स्वाश्रयमप्यनङ्गत्वमित्युपपद्यत एकान्तरता, तेन निघातप्रतिषेधः सिध्यति। तत्रायं स्वरविभागः—

### पदमञ्जरी

नाटन्नित्यत्रादावपि भवति सन्निधानात्। अमन्त्रितत्वमपि तन्त्रमिति चेत्; यद्येवम्, परमेव संनिहितमिति न पूर्वं प्रत्यङ्गत्वप्रसङ्गः। देवदत्तः कुण्डेनाटन्नित्यत्र पूर्वं प्रत्यङ्गत्वे सति समुदायस्याद्युदात्तत्वं शेषनिघातः। अटन्नित्यामन्त्रितनिघात इति स्वरः। परग्रहणे तु सति देवदत्तशब्दस्यामन्त्रिताद्युदात्तत्वम्। तथा कुण्डेनाटन्नित्यस्यापि निघातस्तु न भवति; 'आमन्त्रितं पूर्वमविद्यमानवत्' इति देवदत्तशब्दस्याविद्यमानवत्त्वाद्। छन्दसि तु परमपि पूर्वस्याङ्गवदिष्यते—आ ते पितर्मरुतां सुम्नमेतु (ऋ० २.३३.१)। पितरित्यनेन सह मरुतामित्यस्यापि निघातः। **यथा मृत्पिण्डीभूत इति**। यथा लभेतेत्यन्वयः। अमृत्पिण्डो मृत्पिण्डः सम्पन्नो मृत्पिण्डीभूतः। तत्र सुबन्तस्य मृत्पिण्डात्मना परिणामासम्भवादेकीभावप्रतिपादनपरमेतत्। मृत्पिण्ड इवैकतामापन्न इत्यर्थः।

### भावबोधिनी

है। इसके फलस्वरूप पद से परे न होने के कारण सर्व अनुदात्त नहीं होता है। षष्ठ अध्याय वाले 'आमन्त्रितस्य च' (पा० सू० ६।१।१९७) से आद्युदात्त ही होता है।

अंग ग्रहण का क्या प्रयोजन है? मिट्टी के पिण्ड के समान होकर जिस प्रकार स्वर प्राप्त कर सकें [इसके लिये 'अङ्ग' का ग्रहण है।] दोनों का स्वर न होने लग जाय। [जिस प्रकार मिट्टी के दो पिण्ड मिला देने पर एक बड़ा पिण्ड बन जाता है उसी का कार्य किया जाता है, इसी प्रकार यहाँ दोनों पद एक साथ मिलकर एक रूप हो जाते हैं। इससे एक ही स्वर किया जाता है।]

वत् प्रत्यय का ग्रहण किस लिये है? [पराङ्ग हो जाता है यही कहना चाहिये था, पराङ्गवत् कहने का क्या प्रयोजन है?] स्वाश्रय = अपने को मानकर भी होने वाला कार्य जिस प्रकार हो सके [इसके लिये 'वत्' का ग्रहण है।] [पर का अंग होता है—ऐसा कहने पर पूर्ववर्त्ती सुबन्त का अपने को मानकर कोई कार्य नहीं हो सकेगा किन्तु 'पराङ्ग के समान होता है' ऐसा कहने पर तो अपना भी कार्य कहीं-कहीं हो सकता है।] उदा०—आम् कुण्डेन अटन् यहाँ 'आम एकान्तरमामन्त्रितमनन्तिके (पा० सू० ८।१।५५) इससे एक का अन्तर = व्यवधान होता है।

**विमर्श**—'सुबामन्त्रिते पराङ्गं स्वरे' यही सूत्र बनाना था 'पराङ्गवत्' यह वत्प्रत्यय किस लिये है? इसका समाधान यह है कि 'पराङ्ग' इतना कहने पर पूर्व सुबन्त का स्वाश्रित कार्य नहीं होता, किन्तु 'पराङ्ग के समान' यह

**स्वर इति किम् ? कूपे सिञ्चन् । चर्म नमन् । षत्वणत्वे (८.३.१११) (८.४.१) प्रति पराङ्गवन्न भवति ।**

**न्यासः**

आमित्यस्य निपातस्वरेणाद्युदात्तत्वम् । कुण्डशब्दस्यापि पराङ्गवद्भावे सत्यामन्त्रितस्वरेणाद्युदात्तत्वम् । तथा निघातप्रतिषेधे सत्यटन्नित्येतस्यापि षाष्ठिकेनाद्युदात्तेन भवितव्यम् । **कूपे सिञ्चन्निति** । अत्र पराङ्गवद्भावो नास्तीति पदादित्वं सकारस्य भवति । तेन 'सात्पदाद्योः' इति षत्वप्रतिषेधः स्यात् । **चर्म नमन्निति** । अत्रापि पराङ्गवद्भावाभावात् समानपदस्थौ निमित्तनिमित्तिनौ न भवत इति समानपदाश्रयं णत्वं न भवति ।

**पदमञ्जरी**

यद्वा, पिण्डीशब्दोऽप्यस्ति--प्रविश पिण्डीमिति, तस्यायं प्रयोगः । भूतशब्द उपमार्थः---पितृभूत इति यथा । किमर्थं पुनरेवंभूतस्य स्वरप्राप्तये यत्न इत्यत आह---**उभयोरपीति** । असत्यङ्गग्रहणे कार्यव्यपदेशशास्त्राणामन्यतमातिदेशः स्याद् । यथा परस्य कार्यमामन्त्रितस्य स्वरः आमन्त्रितव्यपदेशः स्वरशास्त्रं वा, तथा सुबन्तस्यापि तद्भवतीति । एवं चोभयोराद्युदात्तत्वं स्यात् । ननु च पदात्परस्य निघातादुभयोरनुदात्तत्वं मा भूदिति वाच्यम्; सत्यम्, आमन्त्रितस्यापादादित्वे सति, पादादित्वे तदुक्तम् । **वत्करणं किमिति** । परत्र परशब्दप्रयोगादेव वत्यर्थो लप्स्यत इति प्रश्नः । **स्वाश्रयमपि यथा स्यादिति** । नानेन क्वाचित्कत्वमस्योच्यते । एवं हि विषयविभागो न ज्ञायते—क्वाङ्गवद्भवति ? क्व नेति ? नापि कादाचित्कत्वम्—कदाचिदङ्गवत्, कदाचिन्नेति, एवं हि सर्वत्र विकल्पः स्यात् । तस्मादयमत्रार्थः --असति वद्ग्रहणे आम् कुण्डेनाटन्निति स्थिते अटन्नित्यस्य निघाते प्राप्ते कुण्डेनेत्यस्यानुप्रवेशात्कुण्डेनाटन्नित्येकमामन्त्रितं सम्पन्नम् । न च तदेकान्तरमिति प्रतिषेधाभावान्निघात एव स्यात् । वत्करणं तु सति अटन्नित्यस्य तावदेकान्तरत्वान्निघातप्रतिषेधे आद्युदात्तत्वं प्राप्तम् । तस्यां दशायां कुण्डेनेत्यस्यानुप्रवेशात्समुदायस्याद्युदात्तत्वं भवति । तदेवं समुदायस्यानैकान्तरत्वेऽपि अटन्नित्यस्य यदेकान्तरत्वं वत्करणेन लब्धं तेनैव समुदायस्य निघातनिवृत्तिराद्युदात्तत्वं च भवति ।

**कूपे सिञ्चन्निति** । अत्र पराङ्गवद्भावे सति ऐकपद्यात्षत्वप्रसङ्गः, (यदि) स्वाश्रयं पदादित्वं भविष्यति, सर्वातिदेशेषु ह्यविरुद्धं स्वाश्रयं भवति । किं च नात्रातिदेशिकं सकारस्य किञ्चिच्छास्त्रीयं कार्यमस्ति, अतोऽपि स्वाश्रयं भवत्येव, यथा—नमते दण्डः स्वयमेवेत्यत्र यक्प्रतिषेधे शप् । इदं तर्हि—'चर्म नमन्', अत्र पराङ्गवद्भावे सति समानपदत्वाण्णत्वं स्यात् । सत्यपि समानपदत्वे 'पूर्वपदात्संज्ञायामगः' इति नियमादसंज्ञायां न भविष्यति । नायं नियमस्य विषयः, पूर्वपदशब्दो हि समासावयवे रूढः । तेन समास एव नियमः । अथ तु—

**भावबोधिनी**

कहने पर कहीं-कहीं पूर्व का स्वाश्रित भी कार्य होता है ? जैसे 'आम् कुण्डेन अटन्' यहाँ 'अटन्' इसका षाष्ठ 'आमन्त्रितस्य च' (पा० सू० ६।१।१९८) से निघात प्राप्त रहने पर 'कुण्डेन' इसका 'अटन्' में अनुप्रवेश हो जाने से एक आमन्त्रित हो जाता है । यहाँ एक का व्यवधान नहीं रहता है । अतः 'आम एकान्तरमामन्त्रितमनन्तिके' (पा० सू० ८।१।५५) इससे प्रतिषेध नहीं हो सकता । किन्तु जब पराङ्गवत् मानते हैं तब 'अटन्' इस एक का अन्तर = व्यवधान हो जाता है और निघात का प्रतिषेध प्राप्त होने पर आद्युदात्त प्राप्त होता है । यहाँ 'कुण्डेन' यह पर अनुप्रविष्ट हो जाता है, समुदाय का आद्युदात्त होता है । यहाँ समुदाय का अनेकान्तरत्व होने पर भी 'अटन्' इसका जो एकान्तरत्व, जो 'वत्करण' से प्राप्त होता है, उसी से समुदाय के निघात की निवृत्ति और आद्युदात्त होता है । इस प्रकार 'आम्' यह निपात स्वर से आद्युदात्त है, 'कुण्डेन' इसका भी पराङ्गवद्भाव करने पर 'आमन्त्रित' स्वर से आद्युदात्त होता है । इस प्रकार निघात का प्रतिषेध होने पर 'अटन्' इसका भी 'आमन्त्रित' स्वर = आद्युदात्त होना चाहिये ।

[अनु०] स्वर की कर्त्तव्यता में—इसका ग्रहण किस लिये है ? कूपे सिञ्चन्, चर्म नमन् । इनमें षत्व और णत्व के प्रति पराङ्वत् नहीं होता है । [केवल स्वर कर्त्तव्यता में ही पराङ्गवद्भाव होता है । अतः अन्य कार्यों में पृथक्-पृथक् ही रहते हैं । इस कारण 'सिञ्चन्' इसका 'सात्पदाद्योः' (पा० सू० ८।३।१११) से षत्वनिषेध हो जाता है । 'चर्म नमन्' में समानपदत्व न होने पर णत्व नहीं होता है ।]

*सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्योपसंख्यानमननन्तरत्वात् (म० भा० २.१.२ वा० ४)* । तीक्ष्णया सूच्या सीव्यन् ? तीक्ष्णेन परशुना वृश्चन् (म० भा०) ।

*अव्ययानां प्रतिषेधो वक्तव्यः* । उच्चैरधीयान (म० भा०, वा० ६) । नीचैरधीयान ॥

## ३५४. प्राक्कडारात् समासः ॥ ३ ॥ (६४८)

**न्यासः**

**सुबन्तस्य पराङ्गवद्भावे समानाधिकरणस्येत्यादि ।** किं पुनः कारणं समानाधिकरणस्य न प्राप्नोति, यत इदमुपसंख्यानं क्रियत इत्याह—**अनन्तरत्वादिति ।** 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्त र्यार्थत्वाद् व्यवहिते न प्राप्नोतीत्युपसंख्यायते । **तीक्ष्णया सूच्या सीव्यन्नित्यत्र** सीव्यन्नित्येतस्मिन् परतस्तीक्ष्ण येत्यस्य व्यवहितस्यापि पराङ्गवद्भावादाद्युदात्तत्वं भवति । **उच्चैरधीयानेति ।** उच्चैःशब्दस्य पराङ्गवद्भावा-भावादामन्त्रितनिबन्धनमाद्युदात्तत्वं न भवति । तस्मिन्नसति तत्रान्तोदात्तत्वमेव भवति; स्वरादिष्वन्तोदात्तस्य पाठात् । तथा हि तत्रैव सन्नतर—उच्चैस्नीचैरित्येवमादीनि पृथक्पर्यन्तान्युपदिश्य 'एते सन्नतरप्रभृतयोऽन्तो-दात्ताः पठ्यन्ते' इत्युक्तम् । अधीयानेत्यस्य यदा पादादित्वं विवक्ष्यते तदाऽऽद्युदात्तत्वम्, अन्यत्र 'आमन्त्रितस्य च' इति निघातः ॥ २ ॥

**प्राक्कडारात्समासः ॥ यथावृद्धमिति ।** अत्र समाससंज्ञायां सत्याम्, 'कृत्तद्धितसमासाश्च' इत्येवमादि

**पदमञ्जरी**

पूर्वं पदं पूर्वपदं पूर्वपदादित्यविशेषेण नियमो व्याख्यायेत, ततः स्वरग्रहणं शक्यमकर्तुम् । अक्रियमाणे च तस्मिन् समानाधिकरणस्योपसंख्यानमित्येतदपि शक्यमकर्त्तुम् । कथं परस्य पराङ्गवद्भावे कृते विणो लुङ्न्यायेन विषय-भेदाल्लक्षणस्यावृत्तौ पूर्वस्यापि पराङ्गवद्भावो भविष्यति ? सति तु स्वरग्रहण स्वरादन्यत्र पराङ्गवद्भावे पराङ्गवद्भावो न सिद्ध्यतीति कर्त्तव्यम् । नन्वसति स्वरग्रहणे परशुना वृश्चन्नित्यत्र वृश्चन्निति प्रातिपदिकम्; न च प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधः, 'न ङिसंबुद्ध्योः' इति निषेधाल्लिङ्गात्; तत्र पराङ्गवद्भावेन प्राति-पदिकानुप्रवेशात् 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुक् प्रसज्येत; स्वरग्रहणे तु सति सुब्लुकि कर्त्तव्ये पराङ्ग-वद्भावाभावः ? नैतदस्ति; पराङ्गवदित्यत्रामन्त्रितं संनिधानात् परशब्देन गृह्यते; तस्य रूपस्य सुबन्तैकान्त-त्वात्सुबन्तकार्य एव पराङ्गवद्भावः, न प्रातिपदिककार्ये । **उच्चैरधीयानेति ।** उच्चैर्नीचैःशब्दौ स्वरादिष्वन्तो दात्तौ पठितौ, अधिकरणशक्तिप्राधान्याच्च तस्मिन्निमित्तं च ॥ २ ॥

**प्राक्कडारात्समासः ॥** 'यथाऽसादृश्ये' इति अनन्तरसूत्रातिक्रमे न किञ्चित्कारणम् । ननु 'प्रत्यय

**भावबोधिनी**

*सुबन्त के पराङ्गवद्भाव में समाधिकरण का उपसंख्यान करना चाहिये क्योंकि अननन्तर = व्यवहित होता है ।'* उदा०—तीक्ष्णया सूच्या सीव्यन् [तीक्ष्ण सुई से सिलने वाले । यहाँ 'सूच्या' का पराङ्गवद्भाव सम्भव है परन्तु 'तीक्ष्णया' का नहीं । अतः यह वचन है । दोनों का आद्युदात्त होता है ।] तीक्ष्णेन परशुना वृश्चन् ! [तीक्ष्ण फरसे से काटने वाले ! यहाँ भी व्यवहित होने से 'तीक्ष्णया' का आद्युदात्तत्व नहीं प्राप्त होता है । इस वचन से दोनों का पराङ्गवद्भाव कर देने से आद्युदात्त हो जाते हैं ।]

*'अव्ययों के पराङ्गवद्भाव का प्रतिषेध करना चाहिये ।'* उच्चैरधीयान ! नीचैरधीयान ! [यहाँ उच्चैः और नीचैः ये अव्यय हैं इनको 'अधीयान' आमन्त्रित का अङ्ग नहीं माना जाता है । अतः दोनों के अलग-अलग स्वर होते हैं ।]

**विमर्श**—भाष्य में प्रस्तुत सूत्र पर कई वार्त्तिक है परन्तु काशिकाकार ने उनका संकेत भी नहीं किया है ॥२॥

'कडार' शब्द कहने के पूर्व यहाँ से आगे जिनको कहा जायगा, उन्हें समाससंज्ञक समझना चाहिये । आगे पाणिनि यह कहेंगे 'यथाऽसादृश्ये' (पा० सू० २।१।७) [असादृश्य अर्थ में 'यथा' शब्द का समास होता है] 'यथा-

**कडारसंशब्दनात्** (२.२.३८) प्राग् यानित ऊर्ध्वमनुक्रमिष्यामः, ते **समाससंज्ञा वेदितव्याः।** **वक्ष्यति**[1]—'**यथाऽसादृश्ये**' (२.१.७), **यथावृद्धं ब्राह्मणानामन्त्रयस्व। प्राग्वचनं संज्ञासमावेशार्थम्** (म० भा०)। **समासप्रदेशाः**—'**तृतीयासमासे**' (१.१.३०) **इत्येवमादयः॥**

**न्यासः**

कार्यं भवति। अथ किमर्थं प्राग्वचनम्, यावतां पञ्चमीनिर्देशादेव प्रागित्यस्याध्याहारो भविष्यति; न च परागित्ययमपि दिक्छब्दोऽस्ति, अतस्तस्याप्यध्याहारः स्यादित्याशङ्कनीयम्, तदध्याहारे कडारसंशब्दनात् परे येऽनुक्रंस्यन्ते तेषां समाससंज्ञा स्यात्; तथा च कडारसंशब्दनादनन्तरमेव समासाधिकारं कुर्यात्, इह तु कृतः, तस्मादिह करणसामर्थ्यात् समासाधिकारस्य प्रागित्यस्याध्याहारो भविष्यति, ततो नार्थः प्राग्वचनेनेत्याह—**प्राग्वचनमित्यादि।** उत्तरत्राऽव्ययीभावादिसंज्ञाभिः सह समाससंज्ञायाः समावेशो यथा स्यादित्येवमर्थं प्राग्वचनम्। असति तु तस्मिन्, ताभिरनवकाशाभिरियं संज्ञा बाध्येत। अस्यास्तु समाससंज्ञायाः 'सह सुपा' इत्यत्र सहेति योगविभागेन यः समासः क्रियते सोऽवकाशः स्यात्—अनुप्रावर्षत्, अनुव्यचलदिति, तिङन्तेनात्र समासः, असत्यपि सावकाशत्व एकसंज्ञाधिकारे वचनप्रामाण्यात् पर्यायेण वृत्तिः स्यात्, न तु समावेशः। साक्षात् सूत्रेणोपात्ते तु प्राग्वचने सति भवति समावेशः, कथम्? एवं हि सम्बन्धः क्रियते—कडारात् प्राग् यावन्तो व्यवस्थिताः सर्वे ते समाससंज्ञका भवन्ति, समाससंज्ञकाः सन्तोऽव्ययीभावादिसंज्ञां लभन्त इति। तेन निमित्तमेव समाससंज्ञाऽव्ययीभावादिसंज्ञानाम्। न च निमित्तिना निमित्तं विहन्यते; अन्यथा तस्य निमित्तत्वमेव न स्यादिति युक्तः सूत्रोपात्तेन प्राग्वचनेन समावेशः। अध्याहृते तु तस्मिन् 'कडारसंशब्दनात् प्राग् यावन्तो व्यवस्थिताः सर्वे ते समाससंज्ञका भवन्ति' इत्येषोऽर्थो लभ्यते, न तु 'समाससंज्ञकाः सन्तोऽव्ययीभावादिसंज्ञकाः' इत्येषोऽपि। साक्षात् सूत्रोपात्ते तु तस्मिन्नेषोऽपि लभ्यते; अन्यथा तस्य सूत्रे साक्षादुपादानमनर्थकं स्यात्॥ ३॥

**पदमञ्जरी**

इत्यादिवत्समास इत्येव स्वरितत्वादधिकारोऽस्तु, किं प्राग्वचनेन? तत्राह—**प्राग्वचनमिति।** प्राक्कडारादित्यवधिनिर्देश इत्यर्थः। **संज्ञासमावेशार्थमिति।** अन्यथैकसंज्ञाधिकारात्पर्यायः स्यात्। अवधिनिर्देशे तु सति तत्सामर्थ्यात् प्राग्ग्रहणमावर्त्तते। तेन प्राक् समाससंज्ञा भवन्ति, समासाः सन्तोऽव्ययीभावादिसंज्ञा इति समावेशसिद्धिः। अथ वा—कडारादिति पञ्चम्यैव प्रागिति दिक्शब्दोऽध्याहरिष्यते। न च परागित्यस्याध्याहारप्रसङ्गः, तदध्याहारे हि 'दिक्समासे बहुव्रीहौ' 'तृतीयासमासे' 'द्वन्द्वे च' समास इत्याद्यनुपपन्नं स्याद्; कडारात्प्राङ्निर्दिष्टानां समाससंज्ञाया अभावात्। तस्मात्प्रागित्येवाध्याहरिष्यते, नार्थः प्राग्वचनेन, तत्राह—**प्राग्वचनमिति॥ ३॥**

**भावबोधिनी**

ब्राह्मणान् आमन्त्रयस्व' [ये-ये वृद्धाः—इस विग्रह में अव्ययीभाव समास, नपुंसक लिङ्ग एकवचन होता है। जो-जो वृद्ध हैं, उन-उन ब्राह्मणों को बुलाओ।] प्राक्—यह कहना [अन्य संज्ञाओं के] समावेश के लिये है।

समाससंज्ञा के प्रदेश [लक्ष्य] 'तृतीयासमासे [पा० सू० १।१।३०) आदि (समासघटित] सूत्र हैं।

**विमर्श**—'समासः' ऐसा अधिकार सूत्र बना कर स्वरितप्रतिज्ञा से अभीष्ट सिद्ध किया जा सकता था, परन्तु वैसा न करके 'प्राक् कडारात्' ऐसा कहने का विशेष प्रयोजन है। आगे 'कडाराः कर्मधारये' (पा० सू० २।२।३८) यह सूत्र कहा जायगा इसके पहले समाससंज्ञा के साथ-साथ अन्य संज्ञायें भी कहीं जायेंगी। उन सभी का समावेश हो सके—जैसे समाससंज्ञक होते हुये अव्ययीभावादिसंज्ञक होते हैं। यदि ऐसा नहीं लिखा जाता तो अव्ययीभाव आदि संज्ञायें निरवकाश होकर इस समाससंज्ञा की बाधक हो जातीं। समास—यह महती संज्ञा होने से अन्वर्थ मानी जाती है—'यस्मिन् समवाये पदद्वयादिकं परस्परं समस्यतस्स समास' इस अर्थ में 'अधिकरण' अर्थ में 'हलश्च' (पा० सू० ३।३।१२१) से घञ् प्रत्यय होता है। अथवा—'समसनं समासः' यह भाव अर्थ में घञ् है॥ ३॥

---

[1]. इतः परम्, पृष्ठे २४९।

## ३५५. सह सुपा ॥ ४ ॥ (६४९)

'सुप्' इति वर्तते, 'सह' इति 'सुपा' इति च त्रयमप्यधिकृतं वेदितव्यम्। यदित ऊर्ध्वमनुक्रमिष्याम-स्तत्रेदमुपस्थितं द्रष्टव्यम्। वक्ष्यति—'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२.१.१४) इति, द्वितीयान्तं श्रितादिभिः सह समस्यते; कष्टं श्रितः कष्टश्रितः।

सहग्रहणं योगविभागार्थम्, तिङापि सह यथा स्यात्—अनुव्यचलत्, अनुप्रावर्षत् ॥

### न्यासः

सप सुपा ॥ सहग्रहणं योगविभागार्थमिति। ननु चासति तस्मिन्नेकैकस्य संज्ञा स्यात्, ततश्च ऋक्पाद इत्यत्र 'ऋक्पूरब्धूःपथामानक्षे' इत्यकारः समासान्त स्यात्; इह च 'राजाश्वः' इत्यत्र 'समासस्य' इति द्वौ स्वरौ स्याताम्, तस्मात् सहभूतयोरेव समाससंज्ञा यथा स्यादेकैकस्य मा भूदित्येवमर्थं सहग्रहणं कस्मान्न विज्ञायते ? एवं मन्यते—सुपेति तृतीयैव सहार्थं गमयति, यथा 'वृद्धो यूना' इति। 'समास' इति च महती संज्ञा क्रियते—

### पदमञ्जरी

सह सुपा ॥ सहवचनं किमर्थम्, यावता तृतीयैव सहार्थमाक्षेप्स्यति, यथा—'वृद्धो यूना' इति ? सहभूतयोः समाससंज्ञा यथा स्याद् एकैकस्य मा भूद्; अन्यथा पुत्रेण सहागतः पितेत्यत्र यथा द्वयोरप्यागमनेन सम्बन्धः, एवं समाससंज्ञापि प्रत्येकमेव स्यात्, सहग्रहणे तु सहभूतयोरेका संज्ञा भवति। किं च स्याद् यद्येकैकस्य संज्ञा स्यात् ? इह ऋक्पाद इति समासान्तः प्रसज्येत, द्वौ च स्वरौ स्याताम्। 'कृत्तद्धितसमासाश्च' इत्यत्र तु समासश्च समासश्चेत्येकशेषो व्याख्यास्यते, तेन समाससमूहस्य संज्ञाविधिर्नियमार्थ इति वाक्यस्य न भविष्यति; अन्यथा त्वेकैकस्य समासस्य प्रत्ययान्तत्वाद्विध्यर्थं समासग्रहणं स्यात्। 'समासाच्च तद्विषयात्' इत्यत्रापि प्रातिपदिकादित्यनुवर्त्तते, समूहस्य च प्रातिपदिकत्वम्, न त्वेकैकस्य समासस्येति समासादित्येकत्वा-विवक्षया समूहादेव सिद्धः प्रत्ययः।

तदेवं समुदायस्य यथा स्यादेकैकस्य मा भूदिति सहग्रहणम्। नैतदस्ति प्रयोजनम्, 'समासः' इति महती संज्ञा क्रियते—अन्वर्थसंज्ञा यथा विज्ञायेत। यस्मिन्समुदाये पदद्वयं परस्परं समस्यते स समासः। 'हलश्च' इत्यधिकरणे घञ्। तस्मादनर्थकं सहग्रहणम् तत्राह—सहग्रहणं योगविभागार्थमिति। सहेत्येको योगः, सुबित्येव,

### भावबोधिनी

['सुबामन्त्रिते' (पा० सू० २।१।२ सूत्र से'] 'सुप्' इसकी अनुवृत्ति होती है, इस 'सुप्' 'सह' और 'सुपा' इन तीनों का अधिकार समझना चाहिये। यहाँ से आगे जिनको कहा जायगा वहाँ इन तीनों को उपस्थित देखना चाहिये। [पाणिनि] कहेंगे 'द्वितीया श्रितातीत०' (पा० सू० २।१।१४) द्वितीयान्त का श्रित आदि के साथ समास होता है, उदा०—कष्टं श्रितः [इस विग्रह में] कष्टश्रितः [यह रूप होता है।]

'सह' का ग्रहण योगविभाग [अलग सूत्र बनाने] के लिये है, जिससे तिङ् के साथ भी समास हो सके—अनुव्यचलत्, अनुप्रावर्षत्।

**विमर्श**—'सुपा' इतना ही सूत्र बनाना चाहिये था। अनुवृत्त 'सुप्' मिलाकर तदन्तविधि करने पर और सहयोग में तृतीया मान 'सुबन्त का सुबन्त के साथ समास होता है'—ऐसा अर्थ सम्भव था। परन्तु 'सह' का ग्रहण करने से नये सूत्र की कल्पना की जा सकती है—'सुप् सह' सुबन्त का तिङन्त के साथ भी समास होता है। इस कारण 'अनु' का 'व्यचलत्' के साथ समास होता है। इसका फल स्वर आदि में अन्तर है।

समास के विषय में वैयाकरण-भूषण में यह कारिका लिखी है—

सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा।
सुबन्तेनेति विज्ञेयः समासः षड्विधो बुधैः ॥ [वै० भू० का० २६]

## ३५६. अव्ययीभावः ॥ ५ ॥ (६५१)

'अव्ययीभावः' इत्यधिकारो वेदितव्यः। यानित ऊर्ध्वमनुक्रमिष्यामोऽव्ययीभावसंज्ञास्ते वेदितव्याः। वक्ष्यति—'यथाऽसादृश्ये' (२.१.७), यथावृद्धं ब्राह्मणानामन्त्रयस्व।

अन्वर्थसंज्ञा चेयं महती तेन[1] पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति।

### न्यासः

अन्वर्थसंज्ञा यथा विज्ञायेतेति। कथं नामान्वर्थसंज्ञा क्रियते? समसनम्=समासः, संक्षेप इत्यर्थः। संक्षेपश्चानेकवस्तुविषयः। तेनासत्यपि सहेत्यस्मिन् सहभूतयोरेव समाससंज्ञा भविष्यति। **न प्रत्येकमिति।** **अनुव्यचलदिति।** तिङन्तेनात्र समासः। अत्र 'तिङ्ङतिङः' इति निघाते कृते समाससंज्ञायां सत्यां तन्निबन्धनमन्तोदात्तत्वं भवति ॥ ४ ॥

**अव्ययीयभावः ॥ यथावृद्धमित्यत्राव्ययीभावत्वे** सति 'अव्ययीभावश्च' इति नपुंसकत्वे 'नाव्ययीभावादतोऽस्त्वपञ्चम्याः' इत्येव विधिर्भवति। **अन्वर्थसंज्ञा चेयमिति।** अनव्ययमव्ययं भवतीत्यव्ययीभावः। **पूर्वपदार्थप्राधान्यमित्यादिना** अन्वर्थसंज्ञायाः फलमाह। प्रायेण ह्यव्ययीभावे पूर्वपदमव्ययम्, परपदमनव्ययम्; समुदायो

### पदमञ्जरी

सुप् सह समस्यते, केन? पदविधित्वात्समर्थेन। **अनुव्यचलदिति।** तत्र सुबित्येकत्वस्य विवक्षितत्वाद्वेः पूर्वं समासः, पश्चादनोः, तत्र नित्यसमासत्वाद्वेः शाकलाभावः। समासान्तोदात्तत्वं तु न भवति; 'तिङ्ङतिङः' इति निघातात्। अनोः 'गतिर्गतौ' इति निघातः, वेर्यणादेशे 'उदात्तस्वरितयोः' इत्यटः स्वरितत्वम्। अन्ये तु—सतिशिष्टं समासान्तोदात्तत्वं भवतीत्याहुः। विभक्तिस्तु सत्यपि समासत्वेन प्रातिपदिकत्वे न भवति; तिङैकत्वस्योक्तत्वात्। यद्वा—वचनग्रहणमुक्तेष्वप्येकत्वादिषु यथा स्यादिति प्रथमैकवचनम्, हल्ङ्यादिलोपः। एवं चेऋपद्यादामनुव्यचलद्देवदत्तेति 'आम एकान्तरमामन्त्रितमनन्तिके' इति निघातप्रतिषेधो भवति। योगविभागश्चेष्टसिद्धयर्थ इत्यतिप्रसङ्गो नोद्भावनीयः ॥ ४ ॥

**अव्ययीभावः ॥** इह लघ्वर्थं संज्ञाकरणमित्येकाक्षरा संज्ञा कार्या, किमर्थं महती क्रियते इत्याह—**अन्वर्थसंज्ञा चेयमिति।** अनव्ययमव्ययं भवतीत्यव्ययीभावः, 'भवतेर्णं उपसंख्यानम्' इति णप्रत्ययः। अन्वर्थत्वे किं सिध्यतीत्यत आह—**तेनेति।** पूर्वपदग्रहणमव्ययस्योपलक्षणार्थम्। सूपप्रति, शाकप्रतीत्यादावुत्तरपदार्थप्राधान्यान्न स्यात्तस्मादव्ययीभावेऽव्ययार्थः प्रधानमिति सूच्यते। एवं ह्यव्ययानव्ययसमुदायोऽव्ययधर्मलाभादव्ययं

### भावबोधिनी

इस प्रकार (१) सुबन्त का सुबन्त के साथ, जैसे—राजपुरुषः। (२) सुबन्त का तिङन्त के साथ; जैसे—अनुव्यचलत्। (३) सुबन्त का नाम=प्रातिपदिक के साथ, जैसे—कुम्भकारः। (४) सुबन्त का धातु के साथ, जैसे—कटप्रूः। (५) तिङन्त का तिङन्त के साथ, जैसे—पिवतखादता [पिवत खादत इति सततं यस्यां क्रियायाम् अभिधीयते सा—पिवतखादता। यहाँ 'आख्यातमाख्यातेन क्रियासातत्ये' इस गणसूत्र से समास होता है। (६) तिङन्त का सुबन्त के साथ, जैसे—जहिस्तम्बः। 'स्तम्बं जहीत्याभीक्ष्ण्येन य आह स' यह विग्रह है। स्तम्ब का आघातकर्ता—यह समास का अर्थ है ॥ ४ ॥

'अव्ययीभाव' यह अधिकार समझना चाहिये। यहाँ से आगे जिनका विवेचन करेंगे, उन्हें अव्ययीभावसंज्ञक समझना चाहिये। आगे कहा जायगा—'यथाऽसादृश्ये' (पा० सू० २।१।७) यथावृद्धं ब्राह्मणान् आमन्त्रयस्व [ये ये वृद्धाः—इस विग्रह में 'यथा' के साथ समास होता है।] जो जो वृद्ध हैं उन उन ब्राह्मणों को आमन्त्रित करो।

यह बड़े आकारवाली संज्ञा अव्ययीभाव की पूर्वपदार्थप्रधानता दिखाती है।

---

१. पदमञ्जरीसम्मतोऽयं पाठः।

अव्ययीभावप्रदेशाः—'अव्ययीभावश्च' (२.४.१८) इत्येवमादयः।

**३५७. अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ।। ६ ।। (६५२)**

**'सुप्' 'सुपा' इति च वर्तते। विभक्त्यादिष्वर्थेषु यदव्ययं वर्तते तत्समर्थेन सुबन्तेन सह समस्यते, अव्ययीभावश्च समासो भवति। वचनग्रहणं प्रत्येकमभिसम्बद्ध्यते।**

**(१) विभक्तिवचने तावत्—स्त्रीष्वधिकृत्य कथा प्रवर्तते अधिस्त्रि, अधिकुमारि। सप्तम्यर्थे यदव्ययं**

**न्यासः**

नाव्ययम्। स यदि पूर्वपदवशेन तस्य पूर्वपदस्य यो धर्मोऽव्ययत्वं तत् प्रतिपद्यते ततोऽनव्ययस्वभावः सन्नव्ययस्वभावो भवति। एवञ्च पूर्वपदवशेन तद्धर्मं प्रतिपद्यते यदि पूर्वपदं प्रधानं भवति; नान्यथा। प्रधानवशेन हि वस्तुनः स्वधर्मपरित्यागेन धर्मान्तरापत्तिर्युक्ता। तथा हि—प्रधाने राजनि हसति तद्भृत्या अपि हसन्ति, तस्मिन् रुदति तेऽपि रुदन्ति; न त्वप्रधाने चेटीपुत्रादौ। तदेवमन्वर्थसंज्ञेयं भवन्ती पूर्वपदार्थप्राधान्यमव्ययीभावस्य दर्शयति। तेन यदा पूर्वपदार्थस्य प्राधान्यं भवति तदाव्ययीभावो भवति, नान्यथेत्युक्तं भवति ॥ ५ ॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥ स्त्रीष्वधिकृत्य कथा प्रवर्त्ततेऽधिस्त्रीति।** 'अनभिहिते' इति सूत्रे 'तिङ्कृत्तद्धितसमासैः परिसंख्यानम्' इति परिगणनं कृतम्, तेनाधिशब्देन द्योतिते सप्तम्यर्थे स्त्रीशब्दात् सप्तमी भवति। तेन

**पदमञ्जरी**

भवतीति। किं सिद्धं भवति ? समृद्धा मद्राः सुमद्रा इत्यादावुत्तरपदार्थप्राधान्येऽव्ययीभावस्यातिप्रसङ्गः परिहृतो भवति। पारेगङ्गम्, द्विमुनि, उन्मत्तगङ्गमित्यादौ च वचनादव्ययीभावः। एवं चानव्ययमव्ययं भवतीत्यन्वर्थतयैवाव्ययकार्यस्यापि लाभाद् 'अव्ययीभावश्च' इत्येतदपि न वक्तव्यम्। 'लुङ्मुखस्वरोपचाराः प्रयोजनमिति (काव्या० वा०) परिगणनं वक्ष्यामि' इत्येवमर्थं तदिति चेत्, न; अत्रैव परिगणय्यान्वर्थत्वेन वा विशिष्टकार्यविषयमव्ययत्वमनुमीयताम् ॥ ५ ॥

**अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु ॥** श्रुतत्वादव्ययस्यैव विभक्त्यादयो विशेषणानि, न समासस्येत्याह—**विभक्त्यादिष्विति। समस्यत इति।** यद्यपि 'समास' इति संज्ञामात्रं विधीयते, तथाप्ययमबुधबोधनाय भिन्नयोः शब्दयोः

**भावबोधिनी**

अव्ययीभाव के प्रदेश = प्रयोग स्थल 'अव्ययीभावश्च' (पा० सू० २।४।१८) आदि के समान [अव्ययीभाव से घटित सूत्र] हैं।

**विमर्श**—टि, घु, भ आदि लघुभूत संज्ञाओं के समान यहाँ न बनाकर 'अव्ययीभाव' इस महदाकार वाली संज्ञा बनाने का उद्देश्य है अन्वर्थता की प्रतीति कराना—अनव्ययम् अव्ययं भवति—इस विग्रह में 'भवतेर्ण उपसंख्यानम्' से 'ण' [अ] प्रत्यय और ईत्वादेश करने पर 'अव्ययीभाव' शब्द रूप होता है। चूंकि इस समास में पूर्वपद प्रायः अव्यय ही होता है, उसी का अर्थ प्रधान माना जाता है। उत्तरपद अव्यय नहीं होता है। समास हो जाने पर समुदाय को अव्यय मान लिया जाता है। पूर्वपदार्थ की प्रधानता प्रायिक है अतः 'उन्मत्तगङ्गम्' आदि में दोष नहीं है ॥ ५ ॥

इसमें 'सुप्' और 'सुपा' [सुबन्तं सुबन्तेन] इन दोनों की अनुवृत्ति होती है। विभक्ति आदि [सोलह] अर्थों में जो अव्यय शब्द रहता है, वह समर्थ सुबन्त के साथ समास प्राप्त करता है और वह समास अव्ययीभाव होता है। ['विभक्ति' से लेकर 'अन्त' शब्द तक द्वन्द्व समास करके 'वचन' के साथ समास किया जाता है अतः] 'वचन' यह प्रत्येक के साथ सम्बद्ध होता है। [उच्यते इति वचनम् = वाच्यम्, इस प्रकार समानाधिकरण मानकर—विभक्ति आदि

तद् विभक्तिवचनम्। (२) समीपवचने—कुम्भस्य समीपम् उपकुम्भम्। उपमणिकम्। (३) समृद्धिः= ऋद्धेराधिक्यम्। समृद्धिर्मद्राणाम् = सुमद्रम्, सुमगधं वर्तते।

(४) व्यृद्धिः=ऋद्धेरभावः। गवदिकानामृद्धेरभावः दुर्गवदिकम्, दुर्यवनं वर्तते।

**न्यासः**

तदन्त एव समस्यते। अधिशब्दस्तु प्रथमान्तः। 'अव्ययीभावश्च' इति नपुंसकत्वम्। 'ह्रस्वो नपुंसके' इति ह्रस्वः। विभक्तिशब्देनेह कारकमुच्यते—विभज्यते प्रातिपदिकार्थोऽनयेति कृत्वा। तच्चेहाधिकरणं विवक्षितमित्याह—**सप्तम्यर्थे यदव्ययमिति**।

**उपकुम्भमिति**। समीपार्थेनोपशब्देनोपजनिते व्यतिरेके कुम्भशब्दात् षष्ठी भवतीति षष्ठ्यन्त एव समस्यते। **सुमद्रमिति**। यदा मद्रैर्विशिष्यमाणत्वात् समृद्धेः प्राधान्यं भवति तदायं समासः। मद्राणामाधिक्येन ऋद्धिर्वर्तत इत्यर्थः। यदा तु मद्राः समृद्ध्या विशिष्यमाणाः प्रधानभावमनुभवन्ति तदा 'कुगतिप्रादयः' इति तत्पुरुषो भवति—सुमद्रा इति। समृद्धिमन्तो मद्रा इत्यर्थः। **दुर्गवदिकमिति**। गवदिकानामृद्धिविगमो वर्तत

**पदमञ्जरी**

संश्लेषः प्रक्रियायां क्रियत इति 'समस्यते' इत्युक्तम्। **वचनग्रहणं प्रत्येकमभिसम्बध्यत इति**। तच्च कर्मसाधनं विभक्त्यादिभिः समानाधिकरणम्। विभक्त्यादिषु वाच्येषु यदव्ययं वर्त्तते = विभक्त्यादीनर्थान्यदव्ययं वक्ति, द्योतयतीत्यर्थः। विभक्तिशब्देन कारकशक्तिरभिधीयते—विभज्यतेऽनया प्रातिपदिकार्थ इति कृत्वा। **स्त्रीष्वधिकृत्येति**। स्त्रीषु कथा प्रवर्त्यत इत्यन्वयः। अधिकृत्येति, प्रस्तुत्येत्यर्थः। संनिधानाच्च स्त्रिय एव प्रस्तुत्येति गम्यते, स्त्रीविषया कथा प्रवर्त्यत इत्यर्थः। प्रायेण तु **प्रवर्त्तते** इति पाठः। तत्र भिन्नकर्तृकत्वात् क्त्वाप्रत्ययस्यानुपपत्तिः, पुरुषाः प्रस्तुवन्ति कथा प्रवर्त्तत इति। अत्राहुः—अधिकृत्य या कथा सा स्त्रीषु प्रवर्त्तत इत्यर्थः, तत्र प्रस्तावने कथने च कर्तुरेकत्वात्सिद्धः क्त्वाप्रत्यय इति। अन्ये त्वाहुः—कृत्यस्य कथा कर्तव्यकथेत्यर्थः, सा स्त्रीषु अधिप्रवर्त्तते स्त्रीष्वधीति च प्रक्रियावाक्यम्, न त्वेतत्प्रयोगार्हम्; समासस्य नित्यत्वात्। **अधिस्त्रीति**। 'अव्ययीभावश्च'

**भावबोधिनी**

वचन = वाच्य = अर्थों में विद्यमान जो अव्यय, अर्थात् विभक्ति आदि अर्थों को द्योतित करने वाला जो अव्यय उसका समास होता है।] क्रमशः उदाहरण—

(१) विभक्तिवचन में [विभक्ति कारक अर्थ में]—स्त्रीषु अधिकृत्य कथा प्रवर्त्तते—अधिस्त्रि अधिकुमारि [कुमार्याम् अधिकृत्य—यह विग्रह है।] सप्तमी के अर्थ में जो अव्यय वह विभक्तिवाचक होता है।

**विमर्श**—अधिसु स्त्री सुप् यह अलौकिक विग्रह है लौकिक विग्रह मूल में दिया गया है। यहाँ अधि अव्यय अधिकरण कारक अर्थ में है। अतः विभक्ति=कारक अर्थ में विद्यमान 'अधि' अव्यय का 'स्त्रीषु' के साथ समास 'अव्ययं विभक्ति' इसी सूत्र से होता है। 'कृत्तद्धितसमासाश्च' (पा० सू० १।२।४६) से इस समास की प्रातिपदिक संज्ञा और सुपो धातुप्रातिपदिकयोः' (पा० सू० २।४।७१) इससे विभक्ति का लोप करने पर 'स्त्री अधि' बनता है। अधि की उपसर्जन संज्ञा करके 'उपसर्जनं पूर्वम्' (पा० सू० २।२।३०) से इसका पूर्वनिपात—'अधिस्त्री'। 'अव्ययीभावश्च' (पा० सू० २।४।१८) से नपुंसकलिङ्ग 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (पा० सू० १।२।४७) से ह्रस्व, प्रातिपदिक होने से 'सु' प्रत्यय [विभक्ति], अव्यय होने के कारण 'अव्ययादाप्सुपः' (पा० सू० २।४।८२) से सु का लोप कर देने पर—अधिस्त्रि यह रूप निष्पन्न होता है।

यहाँ वैषयिक आधार में सप्तमी है। स्त्रीविषयिणी कथा प्रवृत्त होती है। पदमञ्जरीकार 'प्रवर्त्यते' यह पाठ मानते हैं क्योंकि 'क्त्वा=ल्यप्' के लिये समानकर्तृकत्व आवश्यक है। अन्यथा 'अधिकृत्य' 'प्रवर्तते' यह कठिन है, क्योंकि पुरुष प्रस्तुत करने वाले हैं, कथा प्रवृत्त होने वाली है। 'प्रवर्तते' पाठ में क्त्वा की उपपत्ति के लिये 'अधिकृत्य या कथा सा स्त्रीषु प्रवर्तते' ऐसा पाठ उचित है। अथवा 'स्त्रीषु अधिकृत्य कथा=कर्तव्यकथा प्रवर्तते' पाठ मान कर 'प्रवर्त्तते' पाठ संगत है, क्योंकि यहाँ ल्यप् नहीं है।

**(५) अर्थाभावः=वस्तुनोऽभावः। अभावो मक्षिकाणाम् निर्मक्षिकम्, निर्मशकं वर्तते। (६) अत्ययः=[अ]भूतत्वम्, अतिक्रमः। अतीतानि हिमानि निर्हिमम्, निःशीतं वर्तते। (७) असंप्रति=उपभोगस्य वर्तमानकालप्रतिषेधः। अतितैसृकम्। तैसृकम्=आच्छादनम्, तस्यायमुपभोगकालो न भवतीत्यर्थः।**

**न्यासः**

इत्यर्थः। ननु चार्थाभाव इत्यनेनैव तत्सिद्धम्, तथा ह्यर्थाभावो वस्त्वभावः, ऋद्धिविगमोऽपि वस्त्वभावो भवत्येव, तत्कोऽत्र विशेषो येनार्थाभावाद् ऋद्धिविगमस्य पृथगभिधानं क्रियते? अयमस्ति विशेषः; उत्तरपदार्थाभावो हि द्रव्याभावः, यथा—निर्मक्षिकमिति, मक्षिकाणामभाव उच्यते; न तु दुर्गवदिकमित्यत्र गवदिकानामभावः, किं तर्हि? तदीयाया ऋद्धेर्विगमः।

**अर्थाभाव इति।** अथार्थग्रहणं किमर्थम्? धर्माभावे प्रसज्यप्रतिषेधो मा भूत्, यथा—न भवति ब्राह्मणोऽब्राह्मण इति। ब्राह्मणत्वं धर्मोऽत्र प्रतिषिध्यते, न तु वस्त्वभावः। किञ्च—इतरेतराभावे च मा भूत्, गौरश्वो न भवतीति। अत्राप्यर्थान्तरत्व प्रतिषिध्यते, न तु वस्त्वभावः। **अत्ययोऽभूतत्वमिति।** अस्यैव पर्यायोऽतिक्रमः। अतिक्रमः इत्युत्पत्त्यभावः, प्रध्वंसाभाव इत्यर्थः। अर्थाभावस्तु क्वचिद्देशे सर्वदैव वस्तुनोऽभावः, न

**पदमञ्जरी**

इति नपुंसकत्वाद् ह्रस्वो नपुंसके' इति ह्रस्वः। **समृद्ध्यर्थे यदव्ययमिति।** विभक्तिवचनतां दर्शयति। **उपकुम्भमिति।** कुम्भस्योपेति प्रक्रियावाक्यं षष्ठ्यन्तेन समासः। **दुःशकम्, दुर्यवनमिति।** मनुष्यजातिवचनौ शकयवनशब्दौ, किमर्थं पुनर्व्यृद्धिग्रहणम्, अर्थाभाव इत्येव सिद्धम्? न सिद्ध्यति; येन समस्यते तदर्थस्याभावोऽर्थाभावः, न चात्र शकानामभावः, किं तर्हि? तदीयाया ऋद्धेः। अर्थाभाव इत्यर्थग्रहणं यत्र धर्मिस्वरूपस्यैवाभावस्तत्र यथा स्यात्, धर्ममात्रप्रतिषेधे मा भूत्, तद्यथा—ब्राह्मणेन ब्राह्मण्यामुत्पादितत्वेन कस्यचिद्ब्राह्मणत्वं प्रसज्य प्रतिषेधति—नायं ब्राह्मणो यस्तिष्ठन्मूत्रयति। इतरेतराभावे च मा भूत्—गौरश्वो न भवतीति; अत्रापि वस्त्वन्तरत्वं प्रतिषिध्यते, न धर्मिस्वरूपम्। **अतिशीतमिति।** अर्थभावः कालानवच्छिन्नोऽभाव आश्रीयते, इह तु संप्रत्यभाव इत्यत्ययस्य भेदेनोपादानम्।

**भावबोधिनी**

(२) [अनु०] समीप अर्थ में [अव्यय के समास का उदाहरण] = कुम्भस्य समीपम्—उपकुम्भम् [कुम्भ के समीप] उपमणिकम् [मणिक के समीप। यहाँ 'उप' यह समीप अर्थ में है। अतः समास होता है।]

(३) समृद्धिः=ऋद्धि=सम्पन्नता की अधिकता। उदा०—समृद्धिः मद्राणाम्—[इस विग्रह में 'सु' इस अव्यय के साथ समास होता है। प्रक्रिया के अनुसार प्रातिपदिक संज्ञा, विभक्तिलोप, पूर्वनिपात, नपुंसकत्व, सु प्रत्यय, इसका अम् और पूर्वरूप करने पर रूप सिद्ध होता है। अकारान्त शब्दों के साथ प्रायः यही प्रक्रिया होती है। मद्र देश के लोगों की सम्पन्नता—यह अर्थ है।] सुमगधम् [मगधानां समृद्धिः यह विग्रह है। मगध के लोगों की सम्पन्नता—यह अर्थ है।]

(४) व्यृद्धि—ऋद्धि का अभाव [विगता ऋद्धिः = व्यृद्धिः] गवदिकानाम् ऋद्धेः अभावः—[इस विग्रह में] दुर्गवदिकम्। यवनानाम् ऋद्धे अभावः—इस विग्रह में] दुर्यवनम् [दुर्गवदिकों की सम्पन्नता का अभाव है, यवनों की सम्पन्नता का अभाव है—यह अर्थ है। यहाँ 'दुर' यह अव्यय शब्द व्यृद्धि अर्थ में है। अतः समास होता है। दुर्गवदिकम् के स्थान पर पदमंजरीकार'दुःशकम्' यह मानते हैं।]

(५) अर्थभाव = वस्तु का अभाव। मक्षिकाणाम् अभावः [इस विग्रह में] निर्मक्षिकम् [मशकानाम् अभावः—इस विग्रह में] निर्मशकं वर्तते। मक्खियों का अभाव है। मच्छरों का अभाव है—यह अर्थ है। निर्मक्षिकम् में समास, विभक्तिलोप, अव्यय का पूर्वनिपात करने पर 'निर्मक्षिका' बनाने के बाद अव्ययीभाव संज्ञा, नपुंसक लिङ्ग और ह्रस्व करने पर रूप सिद्ध होता है।]

**(८) शब्दप्रादुर्भावः=प्रकाशता शब्दस्य—इति पाणिनि। तत्पाणिनि। पाणिनिशब्दो लोके प्रकाशत इत्यर्थः। (९) पश्चात्-अनुरथं पादातम्। रथानां पश्चात् इत्यर्थः। (१०) यथा यथार्थे यदव्ययं वर्तते तत्समस्यते।**

**योग्यता, वीप्सा, पदार्थानतिवृत्तिः सादृश्यं चेति यथार्थाः। योग्यतायाम्—अनुरूपम्। रूपयोग्यं भवतीत्यर्थः। वीप्सायाम्—अर्थमर्थं प्रति प्रत्यर्थम्। पदार्थानतिवृत्तौ—यथाशक्ति।**

### न्यासः

तूत्पन्नस्य पश्चादभाव इत्यत्ययोऽर्थाभावाद् भिद्यते। उपभोगस्येत्यादिनाऽर्थाभावाद् भेदं दर्शयति। अर्थाभावो हि क्वचिद्देशे कालत्रयेऽप्यभावः, असम्प्रति पुनरुपभोगस्य या वर्त्तमानः कालस्तस्यैव प्रतिषेध इति भिद्यते; असंप्रत्यर्थाभावात्। **अतितैसृकमिति।** तिसृका नाम ग्रामः 'तत्र भवः' 'तत आगतः' इति वाऽण्, तैसृकम्, न तैसृकस्य वर्त्तमानः काल उपभोगस्येत्यर्थेऽतितैसृकमिति भवति।

**अनुरूपमित्यत्र** योग्यतायामनुशब्दः। योग्यं रूपं वहतीत्यर्थः। **प्रत्यर्थमिति।** प्रतिशब्दोऽव्ययमत्र वीप्सायाम्, अर्थमर्थंप्रति प्रत्यर्थम्। ननु चात्र नित्यसमासत्वात् वाक्येन न भवितव्यम्? नैतदस्ति; प्रतिशब्दस्य वीप्सायामर्थे कर्मप्रवचनीयसंज्ञा विहिता, तद्योगे द्वितीया यथा स्यादित्येवमर्थम्। तस्याश्च वाक्य एव प्रयोगो नान्यत्रेति तेन सत्यपि नित्यसमासत्वे वाक्यमपि भवति। **यथाशक्तीति।** पदार्थानतिवृत्तौ यथाशब्दः। पदमत्र

### पदमञ्जरी

**अतितैसृकमिति।** तिसृका नाम ग्रामः, 'तिसृभावे संज्ञायां कन्युपसङ्ख्यानम्' तत्र भवं तैसृकम् = आच्छादनम्। तच्च कालविशेष उपभोग्यम्, उष्णे शीते वा अतिशब्दो नेदानीमित्यस्यार्थे वर्तते। उपभोगक्रिया च वृत्तौ स्वभावादेवान्तर्भवति, यथा—दध्युपसिक्त ओदनो दध्योदन इति। तद्द्वारेण पूर्वोत्तरपदयोः सामर्थ्यम्, नेदानीमुपभोगार्हं तैसृकमाच्छादनमित्यर्थः। आच्छादनापेक्षस्यापि तैसृकशब्दस्य गमकत्वात्समासः। नात्र तैसृकस्य कालानवच्छिन्नो भावः, नापि संप्रति तस्याभावः, किं तर्हि? तदुपभोगस्येत्यर्थाभावादत्ययाच्चा-संप्रतिभिद्यते। **तत्पाणिनीति।** तच्छब्दो निपातोऽप्यस्ति।

### भावबोधिनी

(६) अत्यय = भूतता = अतिक्रम [उत्पत्ति न होना] अतीतानि हिमानि [-इस विग्रह में] निर्हिमम् [अतीतं शीतम्—इस विग्रह में] निःशीतम् [हिम का ध्वंस = समाप्ति। शीत का ध्वंस = समाप्ति। शीतकाल बीत गया। यहाँ 'निर्' यह अव्यय अत्यय = ध्वंस अर्थ में है। समास करने पर उसका पूर्वनिपात होता है।]

**विमर्श**—'अत्यय' का अर्थ,—अतिक्रम उत्पत्ति का अभाव, प्रध्वंसाभाव आदि माने गये हैं। अतः काशिका में 'अत्ययो भूतत्वम्' यह अलग-अलग पाठ ही उचित है। कुछ संस्करणों में अकार प्रश्लेष करके 'अत्ययोऽभूतत्वम्' ऐसा पाठ लिखा है। यह अशुद्ध है। भाष्य में इस पर कुछ नहीं लिखा है।

(७) [अनु०] असम्प्रति = उपभोग के वर्तमान काल का निषेध। [तैसृकं सम्प्रति न युज्यते—इस विग्रह में] अतितैसृकम् [तैसृक ओढ़ने का अब समय नहीं है, ओढ़ना ठीक नहीं है।] तैसृकम् = आच्छादन = ओढ़ना, उसके उपभोग = प्रयोग का यह समय नहीं है, यह अर्थ है।

**विमर्श**—तिसृका नाम का कोई ग्राम था। उसमें पैदा होने वाला या वहाँ से आने वाला पदार्थ—इस अर्थ में 'तत्र भवः' (पा० सू० ४।३।५३) अथवा 'तत आगतः' (पा० सू० ४।३।७४) से अण् प्रत्यय करके यह रूप होता है। तैसृक सम्भवतः ऊनी अथवा रेशमी वस्त्र को कहते हैं। जब इसके ओढ़ने का समय नहीं होता है तब यह प्रयोग होता है। यहाँ वस्तु का अभाव कहना इष्ट नहीं है अपितु उसके उपभोग के काल का अभाव कहना इष्ट है। अतः 'अर्थाभाव' और 'असम्प्रति' का क्षेत्र अलग-अलग हो जाता है। इसी लिये दोनों का उल्लेख है।

(८) [अनु०] शब्द प्रादुर्भाव = शब्द का प्रकाश = प्रसिद्धि। [पाणिनि शब्दस्य प्रकाशः—इस विग्रह में] इति पाणिनिः, तत्पाणिनिः रूप होते हैं। पाणिनि शब्द लोक में प्रकाशित होता है, प्रसिद्ध होता है, यह अर्थ है।

**(११) आनुपूर्व्यम्=अनुक्रमः। अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठानुपूर्व्येण[1] भवन्तः प्रविशन्त्वित्यर्थः।**

**(१२) यौगपद्यम्=एककालता। सचक्रं धेहि। युगपच्चक्रं धेहीत्यर्थः।**

**न्यासः**

शक्तिशब्दस्यार्थः शक्तिरेव तस्या अनतिवृत्तिरनतिक्रमः। यथाशक्ति करोतीति शक्त्यनतिक्रमेण करोतीत्यर्थः। **ज्येष्ठानुपूर्व्येणेति।** ज्येष्ठानुक्रमेणेत्यर्थः।

**सचक्रमिति।** 'अव्ययीभावे चाकाले' इति सहशब्दस्य सभावः। एवं **सक्षित्यादावपि** सभावो वेदितव्यः।

**गुणभूतेऽपीत्यादि।** यदि सादृश्य इति नोच्यते तदा पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात् प्रधानं भवति तदैव स्यात्, सादृश्यं क्षिखाः सक्षिखाति गुणभूते तु न स्यात्, अस्माद् वचनाद्

**पदमञ्जरी**

**प्रत्यर्थमिति।** अर्थमर्थं प्रतीति वाक्यमप्यत्र भवति; भाष्यप्रयोगात्। यद्वि वा नात्राव्ययं वीप्सावृत्ति, किं तर्हि ? कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति। वीप्सा तु द्विर्वचनद्योत्या। अनुपूर्वस्य भाव आनुपूर्व्यम्—ब्राह्मणादित्वात्ष्यञ्, ष्यञः षित्करणात्स्त्रियामपि भवति तस्य प्रयोगः। एवं **ज्येष्ठानुपूर्व्येणेति।**

**सचक्रमिति।** सहशब्दस्य समासः, 'अव्ययीभावे चाकाले' इति सभावः, एवमुत्तरेष्वप्युदाहरणेषु।

**गुणभूतेऽपीत्यादि।** यदि 'सादृश्ये' इति नोच्यते, पूर्वपदार्थप्रधानोऽव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात्

**भावबोधिनी**

**विमर्श**—प्रादुर्भाव का अर्थ प्रकाश = प्रसिद्धि है। 'तत्' यह निपात भी है। इसी को मान कर समास होता है। यह शब्द प्रसिद्धि अर्थ को प्रकट करता है। इसी प्रकार 'इति' शब्द भी प्रसिद्धि अर्थ प्रकट करता है।

(९) [अनु०] पश्चात् = पीछे। [रथानां पश्चात् इस विग्रह में] अनुरथं पादातम् = रथों के पीछे पैदल सेना यह अर्थ है।

(१०) यथा—इस शब्द के अर्थ में जो अव्यय है, उसका समास होता है। (१) योग्यता = योग्य होना, (२) वीप्सा = व्यास करने की इच्छा, (३) पदार्थानतिवृत्ति = पदार्थ का अतिक्रमण न करना, और (४) सादृश्य = समानता—ये चार यथाशब्द के अर्थ हैं। क्रमशः उदा०—(१) योग्यता में—अनुरूपम्। रूप के योग्य होता है, यह अर्थ है। [रूपस्य योग्यम्—यह विग्रह है।] (२) वीप्सा—अर्थम् अर्थं प्रति—प्रत्यर्थम् [अर्थ अर्थ के प्रति = प्रत्येक अर्थ के लिये शब्द का व्यवहार होता है। अर्थ व्याप्य है, शब्द व्यवहार व्यापक है। यह व्याप्य व्यापक भाव बताने के लिये 'प्रति' का प्रयोग है।] (३) पदार्थ की अनतिवृत्ति = अनतिक्रम—इसमें यथाशक्ति [शक्तिम् अनतिक्रम्य—इस विग्रह में] समास करके यह रूप होता है।

**विमर्श**—'यथा' शब्द के चार अर्थ बताकर भी काशिकाकार ने 'सादृश्य' अर्थ का उदाहरण नहीं दिया है। 'यथाऽसादृश्ये' (पा० सू० २।१।७) सूत्र से सादृश्य अर्थ में समास का निषेध होने से यहाँ उदाहरण नहीं दिया गया, ऐसा कुछ विद्वान् मानते हैं। परन्तु सिद्धान्तकौमुदी में इसका उदाहरण दिया गया है—हरेः सादृश्यम्—सहरि। बालमनोरमा के अनुसार 'सह' यह अव्यय सादृश्य अर्थ में है। 'अव्ययीभावे चाकाले' (पा० सू० ६।३।८१) इस सूत्र से 'सह' का 'स' आदेश होता है। पदमञ्जरीकार और न्यासकार इस विषय में मौन हैं।

(११) [अनु०] आनुपूर्व्य=अनुक्रम [बड़े छोटे के क्रम के अनुसार] अनुज्येष्ठं प्रविशन्तु भवन्तः। ज्येष्ठता के क्रम से आप लोग प्रवेश करें यह अर्थ है। [बड़े छोटे फिर छोटे इस क्रम से प्रवेश करें यह भाव है।]

(१२) यौग-पद्य=एक काल होना। सचक्रं धेहि—एक साथ चक्र धारण करें। या चक्कर लगावें यह अर्थ है। [यहाँ चक्रेण सह—इस विग्रह में समास करके सह का पूर्वनिपात और 'अव्ययीभावे चाकाले' (पा० सू० ६।३।८१) सूत्र से 'सह' का स आदेश होता है।]

---

१. 'ज्येष्ठानुपूर्व्या' इति वा पाठः।

**(१३) सादृश्यम्=तुल्यता। किमर्थमिदमुच्यते, यथार्थं इत्येव सिद्धम्? गुणभूतेऽपि सादृश्ये यथा स्यात्—सदृशः किख्या सकिखि।**

**(१४) सम्पत्तिः=अनुरूप आत्मभावः, समृद्धेरन्यः। सब्रह्म बाभ्रवाणाम्। सक्षत्रं शालङ्कायनानाम्।**

### न्यासः

भवति। **सदृशः किख्येति।** सादृश्यवतः प्राधान्यप्रदर्शनेन सादृश्यस्य गुणभावं प्रदर्शयितुं सदृशः किख्या इत्युक्तम्। सादृश्यप्राधान्ये विवक्षिते हि सादृश्यमिति भावप्रत्ययेन युक्तो निर्देशः स्यात्। **सकिखीति।** पूर्ववद् ह्रस्वः।

ननु च सम्पत्तिः समृद्धिरेव, तत् कथं पृथगुच्यत इत्यत आह—**सम्पत्तिरनुरूपमित्यादि। सब्रह्म बाभ्रवाणामिति।** तेषामनुरूप आत्मभाव इत्यर्थः। **अधिकार्थवचनेनेति।** तृणानामभ्यवहारोऽधिकार्थस्तद्वचनेन। न किञ्चिदित्यादिना वाक्येनाधिकार्थतां दर्शयति। यो हि तृणान्यभ्यवहरति स कथमन्यदभ्यवहार्यं परित्यजति।

### पदमञ्जरी

प्रधानं तदेव स्यात्—सादृश्यं किख्येति, गुणभूते न स्यात्। **सदृशः किख्येति।** सादृश्यवतः प्राधान्यदर्शनेन सादृश्यस्य गुणभावं दर्शयति। **सकिखीति।** पूर्ववद्ध्रस्वः। अपचितपरिमाणः शृगालः किखी। अप्रसिद्धोदाहरणम्; चिरन्तनप्रयोगात्।

सम्पत्तिशब्दस्य समृद्धौ रूढत्वात् पुनरुपादानं व्यर्थमित्याशङ्क्याह—**सम्पत्तिरनुरूप आत्मभाव इति। सब्रह्म बाभ्रवाणामिति।** तेषामनुरूपो ब्रह्मभाव इत्यर्थः।

### भावबोधिनी

(१३) सादृश्य = तुल्य होना। यह 'सादृश्य' किस लिये कहा जा रहा है क्योंकि यथा शब्द के अर्थ [पूर्वोक्त चौथे सादृश्य रूप अर्थ) से ही कार्य सिद्ध हो जाता है? गुणभूत भी सादृश्य में भी जिस प्रकार समास हो सके, [उसके लिये इस 'सादृश्य' का पुनः ग्रहण है]—किख्या सदृशः—सकिखि [अपचित परिमाण वाले सियार के समान।]

**विमर्श** - पहले 'यथा' शब्द के चार अर्थों में भी 'सादृश्य' का उल्लेख है, यहाँ सूत्र में पुनः सादृश्य का उल्लेख किया गया है। इसका प्रयोजन है गौण भी सादृश्य में समास करना। किसी के सदृश—इसमें सादृश्यवान् = सदृश में सादृश्य गुणभूत = विशेषण है, सादृश्यवान् विशेष्य है। अतः यथा के अर्थ को मानकर समास नहीं हो पाता। यहाँ सादृश्य के पुनः ग्रहण करने के कारण गुणभूत भी सादृश्य अर्थ में समास होता है। 'सकिखि' यह परम्परागत उदाहरण दिया है। सदृशः सख्या—'ससखि' आदि भी इसी प्रकार समझने चाहिये।

(१४) [अनु०] सम्पत्ति = अनुरूप आत्मभाव [अपने योग्य कर्म—यह अर्थ] 'समृद्धि' से भिन्न [लिया जाता है।] उदा०—सब्रह्म बाभ्रवाणाम् [बाभ्रवों का अनुरूप योग्य ब्रह्मभाव] सक्षत्रं शालङ्कायनानाम् [शालङ्कायनों का अनुरूप क्षत्र होना।]

**विमर्श**—यद्यपि सामान्यतया समृद्धि और सम्पत्ति शब्द पर्याय माने गये हैं परन्तु यहाँ दोनों के अर्थ अलग-अलग हैं—(१) ऋद्धि की अधिकता = समृद्धि है और (२) अनुरूप आत्मभाव = योग्य, अपना होना सम्पत्ति है। अतः दोनों का उल्लेख है। बाभ्रवों का ब्रह्म में आत्मभाव योग्य=उचित है। शालङ्कायनों का क्षत्रियत्व में लीन होना अर्थ है।

(१५) [अनु०] साकल्य = अशेषता = शेष न होना। सतृणम् अभ्यवहरति [तृणम् अपि अपरित्यज्य—इस विग्रह में 'सह' के साथ समास और 'सह' का 'स' आदेश होता है। तिनका सहित खा जाता है, अर्थात् खाते समय तिनका भी नही छोड़ता है—यह आशय है।] सबुसम् [बुसम् अपि अपरित्यज्य—इस विग्रह में 'सह' के साथ समास होता है। सभी कुछ खा लेता है, भूसा भी नहीं छोड़ता है।] कुछ भी खाद्य पदार्थ नहीं छोड़ता है—यह अर्थ अधिक

**(१५) साकल्यम्-अशेषता। सतृणमभ्यवहरति, सबुसम्। न किञ्चिदभ्यवहार्यं परित्यजतीत्ययमर्थोऽधिकार्थवचनेन प्रतिपाद्यते।**

**(१६) अन्तवचने—'अन्त' इति परिग्रहापेक्षया समाप्तिरुच्यते। साग्न्यधीते। सेष्टिपशुबन्धम्। पशुबन्धान्तमधीत इत्यर्थः। इयं समाप्तिरसकलेऽप्यध्ययने भवतीति साकल्यात् पृथगुच्यते॥**

## ३५८. यथाऽसादृश्ये ॥ ७ ॥ (६६१)

**'यथा' इत्येतदव्ययमसादृश्ये वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति। यथावृद्धं**

**न्यासः**

ननु चान्तशब्दः परिसमाप्तौ वर्त्तते, तत्र च साकल्यमस्त्येव, तत् कथमन्तवचनं साकल्यात् पृथगुच्यत इत्यत आह—**अन्तशब्द इत्यादि**। यावतोऽध्ययनस्य परिग्रहः—एतावन्मयाध्येतव्यमिति—तदपेक्षया या समाप्तिः सोऽन्तः, स चासाकल्येऽप्यध्ययनस्य भवतीति साकल्यात् पृथगुच्यते। **साग्न्यधीत इति**। अग्निपर्यन्तमधीत इत्यर्थः। अग्न्यर्थो ग्रन्थस्तादर्थ्यादग्निशब्देनोच्यते। यावतोऽध्ययनस्य परिग्रहस्तस्याग्निरन्तः, न तु ततः परेणाध्ययनमेव नास्तीति। तत्तु नाधीयत इत्यसाकल्यमत्रेत्याह—**इयमित्यादि**। सुबोधम्॥ ६॥

**यथाऽसादृश्ये॥ ये ये वृद्धा इत्यनेन यथावृद्धमित्यत्र** यथाशब्दो वीप्सायां वर्त्तत इत्याचष्टे। **यथा देवदत्तस्तथा यज्ञदत्त इति**। देवदत्तसदृशो यज्ञदत्त इत्यर्थः। ननु च यथाशब्दोऽयमुपमानम् 'यज्ञदत्त' इत्युप-

**पदमञ्जरी**

**सतृणमिति**। न चात्र तृणभक्षणं वास्तवमित्याह—**न किञ्चिदिति**। तृणभक्षणमधिकोऽर्थः, तद्वचनेन किंचिदभ्यवहार्यं न परित्यजतीत्ययमर्थः प्रतिपद्यते—तृणानि भक्षयन् कथमन्यत् परित्यजेदिति।

**परिग्रहापेक्षयेति**। 'इदानीमेतावान्प्रदेशोऽध्येतव्यः' इति यावतः प्रदेशस्य परिग्रहस्तदपेक्षया समाप्तिः= अन्तः, स चासकलेऽप्यध्ययने भवतीति भावः। **साग्नीति**। अग्न्यादयः शब्दास्तदर्थे ग्रन्थे वर्त्तन्ते, तदानीं परिगृहीतस्य प्रदेशस्याग्न्यादिरन्तः, न तु ततः परेणाध्ययनं नास्ति; ततश्च न साकल्यमित्याह—**इयमिति**॥६॥

**यथाऽसादृश्ये**॥ सादृश्ये समासस्य पूर्वेणैव सिद्धत्वादसंदेहार्थं सादृश्ये यथेत्यवचनाच्च नञाऽत्र प्रश्लेषः।

**भावबोधिनी**

अर्थवाचक शब्द से प्रतिपादित होता है। [यहाँ तृणभक्षण में तात्पर्य नहीं है। अपितु जो तिनका भी नहीं छोड़ता, वह दूसरी चीज कैसे छोड़ सकता है। यह तात्पर्य है।]

(१६) अन्तवचन = अन्त अर्थ प्रतीत रहने पर। 'अन्त' यह जितने का ग्रहण करना अभीष्ट है उसकी अपेक्षा समाप्ति कही जाती है। उदा०—साग्नि अधीते [अग्निग्रन्थ पर्यन्त अध्ययन करता है।] सेष्टि पशुबन्धम् अधीते [पशुबन्ध ग्रन्थ तक अध्ययन करता है—यह अर्थ है। यह समाप्ति असकल = असम्पूर्ण अध्ययन में भी होती है, इसलिये 'साकल्य' से इस 'अन्त' को पृथक् कहा गया है।

**विमर्श**—अन्त शब्द यहाँ सापेक्ष है। 'इस समय इतने अंश का ही अध्ययन करना है' इस प्रकार जो सीमा निर्धारित की जाती है, उसे ही यहाँ 'अन्त' शब्द से समझना चाहिये। अतः किसी विषय का सम्पूर्ण अध्ययन न करने पर भी इसका प्रयोग होता है। इस प्रकार साकल्यवचन और अन्तवचन में भेद है। अतः दोनों का ग्रहण किया गया॥ ६॥

असादृश्य अर्थ में वर्त्तमान 'यथा' यह अव्यय सुबन्त के साथ समास प्राप्त करता है और यह अव्ययीभाव समास होता है। उदा०—यथावृद्धं ब्राह्मणान् आमन्त्रयस्व [जो जो वृद्ध हैं, उन ब्राह्मणों को आमन्त्रित करो] ये ये वृद्धाः इस विग्रह में समास होता है। यहाँ यथा शब्द सादृश्य अर्थ में नहीं है अपितु वीप्सा = व्यास करने की इच्छा अर्थ में है। दूसरा उदाहरण] यथाऽध्यापकम् [जो जो अध्यापक हैं, यो यो अध्यापकः—इस विग्रह में समास होता है।

ब्राह्मणानामन्त्रयस्व । ये ये वृद्धाः यथावृद्धम् । यथाध्यापकम् ।

असादृश्ये इति किम् ? यथा देवदत्तस्तथा यज्ञदत्तः (म० भा०)। यथार्थे यदव्ययमिति पूर्वेणैव सिद्धे समासे वचनमिदं सादृश्यप्रतिषेधार्थम् ॥

**३५९. यावदवधारणे ॥ ८ ॥ (६६२)**

'यावत्' इत्येतदव्ययमवधारणे वर्तमानं सुपा सह समस्यते, अव्ययीभावश्च समासो भवति । अवधारणम्=इयत्तापरिच्छेदः। यावदमत्रं ब्राह्मणानामन्त्रयस्व । यावन्ति पात्राणि संभवन्ति, पञ्च षड् वा, तावत आमन्त्रयस्व ।

अवधारण इति किम् ? यावद्दत्तं तावद् भुक्तम् । नावधारयामि कियन्मया भुक्तमिति ॥

**न्यासः**

मेयमपेक्षते । तत्र 'सापेक्षमसमर्थं भवति' इत्यसामर्थ्यादेव समासो न भविष्यति, तत् किमर्थमसादृश्य इति प्रतिषेधेन ? नेतदस्ति; न ह्यत्र यथाशब्द उपमानम्, किं तर्हि ? 'यथा देवदत्तः' इत्येष समुदायः। तस्मात् तस्यैवोपमेयापेक्षयाऽसामर्थ्यम्, न तु यथाशब्दस्य ॥ ७ ॥

यावदवधारणे ॥ इयत्तापरिच्छेद इति । इयतो भाव इयत्ता = परिमाणम्, तस्याः परिच्छेदो निश्चयः। यावन्ति पात्राणीत्यादिना तमेवेयत्तापरिच्छेदं विस्पष्टीकरोति । नावधारयामीत्यादिना इयत्तापरिच्छेदाभावं दर्शयति ॥ ८ ॥

**पदमञ्जरी**

असादृश्ये इति किमिति । सूत्रं किमर्थमित्यर्थः। यथा देवदत्त इति । देवदत्तस्य यज्ञदत्तं प्रत्युपमानत्वं यथाशब्दो द्योतयति । तत्रोपमानस्योपमेयापेक्षत्वेऽपि यथा देवदत्तशब्दयोः सामर्थ्यात् परस्परेण समासप्रसङ्ग इति भावः। अथ पूर्वेणात्र सादृश्य इति वा, यथार्थं इति वा कस्मान्न भवतीत्याह—पूर्वेणैवेति ॥ ७ ॥

यावदवधारणे ॥ यावन्ति पात्राणीति ।

यावदित्यव्ययं चास्ति, तद्धितान्तं च विद्यते ।
अतो नित्यसमासेऽपि तद्धितान्तेन विग्रहः ॥ ८ ॥

**भावबोधिनी**

'असादृश्य में' इसका क्या प्रयोजन है, अर्थात् सूत्र का क्या प्रयोजन है, यथा देवदत्तः तथा यज्ञदत्तः [जैसा देवदत्त है वैसा यज्ञदत्त है—यहाँ सादृश्य अर्थ होने के कारण समास न हो, इसी के लिये 'असादृश्ये' का ग्रहण है ।]

'यथा' शब्द के अर्थ में जो अव्यय—इस प्रकार मानकर ['अव्ययं विभक्ति' (पा० सू० २।१।६)] इस पूर्ववर्त्ती सूत्र से समास सिद्ध रहने पर यह सूत्र सादृश्य के प्रतिषेध के लिये है ।

विमर्श—'अव्ययं विभक्ति०' (पा० सू० २।१।६) इसमें यथा का अर्थ सादृश्य भी माना गया है और स्वतन्त्र रूप से 'सादृश्य' अर्थ में भी समास का विधान किया गया है। अतः 'यथा देवदत्तः तथा यज्ञदत्तः' यहाँ 'यथार्थ सादृश्य' अथवा 'सादृश्य' इन दोनों में समास प्राप्ति सम्भव है। परन्तु 'यथाऽसादृश्ये' यह सूत्र सादृश्य भिन्न अर्थ में ही 'यथा' शब्द के साथ समास का विधान करते हुए नियमार्थ बन जाता है कि—'असादृश्ये एवं यथा शब्दः समस्यते' ॥ ७ ॥

अवधारण अर्थ में वर्तमान 'यावत्' यह अव्यय शब्द सुबन्त के साथ समास प्राप्त करता है और यह अव्ययीभाव होता है। अवधारण = इयत्ता का परिच्छेद = इतना है—इसका निश्चय । उदा०—यावदमत्रं ब्राह्मणान् आमन्त्रयस्व । पाँच या छः जितने पात्र सम्भव हैं उतने ब्राह्मणों को आमन्त्रित करो। [यहाँ यावत् 'शब्द अव्यय है और तद्धितान्त भी है । अतः तद्धितान्त के साथ अस्वपद विग्रह करके अव्यय के साथ ही समास होता है । अव्ययीभाव समास करने पर नपुंसकलिङ्ग हो जाने से विभक्तियों का अम् आदेश हो जाता है ।]

## ३६०. सुप् प्रतिना मात्रार्थे ॥ ९ ॥ (६६३)

मात्रा, बिन्दुः, स्तोकम्, अल्पमिति पर्यायाः। मात्रार्थे वर्तमानेन प्रतिना सह सुबन्तं समस्यते, अव्ययीभावश्च समासो भवति। अस्त्यत्र किञ्चित् शाकं शाकप्रति। सूपप्रति।

मात्रार्थं इति किम्? वृक्षं प्रति विद्योतते विद्युत् सुबिति वर्तमाने पुनः सुब्ग्रहणमव्ययनिवृत्त्यर्थम्।

## ३६१. अक्षशलाकासङ्ख्याः परिणा ॥ १० ॥ (६६४)

अक्षशब्दः, शलाकाशब्दः, संख्याशब्दाश्च परिणा सह समस्यन्ते, अव्ययीभावश्च समासो भवति। कितवव्यवहारे समासोऽयमिष्यते। पञ्चिका नाम द्यूतं पञ्चभिरक्षैः शलाकाभिर्वा भवति। तत्र यदा सर्वे

**न्यासः**

सुप्प्रतिना मात्रार्थे॥ वृक्ष प्रतीत्यत्र लक्षणे प्रतिशब्दो वर्त्तते, न मात्रार्थे। ननु परं सुब्ग्रहणं किमर्थम्, यावता 'सुबामन्त्रिते' इत्यतः सुब्ग्रहणमनुवर्त्तिष्यत इत्यत आह—सुब्ग्रहणमित्यादि। सुब्ग्रहणं पूर्वं ह्यव्ययेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्। तस्मादव्ययनिवृत्त्यर्थमिदमन्यत् सुब्ग्रहणं क्रियते॥९॥

अक्षशलाकासंख्याः परिणा॥ कितवव्यवहार इत्यादि। कथं पुनः कितवव्यवहार इष्यमाणोऽपि तत्र लभ्यते? स्वभावत एव; समासस्य तत्र वृत्तेः। न ह्यर्था अतिदिश्यन्ते, लौकिकत्वात् तेषाम्। तस्येत्यादि।

**पदमञ्जरी**

सुप्प्रतिना मात्रार्थे॥ अस्त्यत्र किंचित्सूप इति किञ्चिदित्यव्ययं सूप इति पुंल्लिङ्गेन समानाधिकरणम्।

सुबिति वर्त्तमान इति। 'सुबामन्त्रिते' इत्यतः। अव्ययनिवृत्त्यर्थमिति। पूर्वं हि सुब्ग्रहणमव्ययग्रहणेन सम्बद्धम्, तथा च पूर्वसूत्रेऽव्ययस्यैव ग्रहणादनव्ययेन सह विग्रहः कृतः। स्वरादीनां च दोषामन्यमहः, दिवामन्या रात्रिरिति वृत्तिविषये सत्त्वप्रधानतादर्शनान्मात्रावति वृत्तिरविरुद्धेत्यव्ययस्यैव समासः स्यात्॥९॥

अक्षशलाकासङ्ख्याः परिणा॥ अक्षशलाकासङ्ख्याशब्दा इति। अक्षशलाकाशब्दौ सङ्ख्यावाचिनश्च शब्दा इत्यर्थः। क्वचित्तु—अक्षशब्दः शलाकाशब्दः सङ्ख्याशब्दाश्चेति पाठः। कितवव्यवहार इति।

**भावबोधिनी**

'अवधारण अर्थ में' इसका क्या प्रयोजन है? यावद् दत्तं तावद् भुक्तम्, न अवधारयामि कियद् भुक्तम्। जितना दिया उतना खाया, कितना खाया—यह नहीं निश्चित कर पा रहा हूँ। [अतः यहाँ अवधारण = निश्चित परिमाण की प्रतीति न होने से समास नहीं होता है॥ ८॥

मात्रा, बिन्दु = बूँद, स्तोक और अल्प— ये पर्याय शब्द है। मात्रा अर्थ में विद्यमान 'प्रति' शब्द के साथ सुबन्त शब्द समास प्राप्त करता है और यह अव्ययीभाव होता है। उदा०—अस्ति अत्र किञ्चित् शाकम् – [इस विग्रह में] शाकप्रति। [थोड़ा शाक = सब्जी। अस्ति अत्र कश्चित् सूपः—इस विग्रह में] सूपप्रति। [थोड़ी दाल यहाँ 'प्रति' शब्द के साथ समास और अव्यय संज्ञा होने से विभक्ति का लोप हो जाता है।]

मात्रा अर्थ में—इसका क्या प्रयोजन है? वृक्षं प्रति विद्योतते विद्युत्। यहाँ प्रति शब्द लक्ष्य-लक्षणभाव अर्थ में है। अतः समास नहीं होता है।]

['सुबामन्त्रिते पराङ्गवत् स्वरे' (पा० सू० २।१।२) इस सूत्र से] 'सुप' इसकी अनुवृत्ति रहने पर यहाँ पुनः 'सुप्' का ग्रहण अव्यय की निवृत्ति के लिये है॥ ९॥

अक्ष शब्द, शलाकाशब्द और संख्याशब्द परि के साथ समास प्राप्त करते है और वह अव्ययीभाव होता है। कितव = जुआरी लोगों के व्यवहार = खेल में यह समास इष्ट है। [अर्थात् जुआरी के पाँसे आदि गिराने के खेल में यह होता है।] पंचिक नाम जुआं पाँच अक्षों = पासों अथवा शलाकाओं से होता है। उसमें जब सभी चित गिरते है या

**उत्तानाः पतन्ति, अवाञ्चो वा तदा पातयिता जयति, तस्यैवैतस्य विपातोऽन्यथा पाते सति जायते। अक्षेणेदं न तथा वृत्तं यथा पूर्वं जये** (म० भा०)—**अक्षपरि, शलाकापरि; एकपरि, द्विपरि, त्रिपरि। परेण[1] चतुष्परि।**

**पञ्चसु त्वेक त्वेकरूपासु जय एव भविष्यति।**
**अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत्।**
**कितवव्यवहारे च एकत्वेऽक्षशलाकयोः॥** (म० भा० २.१.१०)

**न्यासः**

तस्य पातयितुस्तस्य च विघात इत्यनेन सम्बन्धः। विपातः = पराजयः। **एतस्येति**। अक्षादेरेव प्रत्यवमर्शः। अभेदविवक्षायामेकवचनम्। एतस्यान्यथा पात इत्यनेन सम्बन्धः। **अन्यथेति**। जये य उक्तः पातप्रकारस्तदपेक्षयाऽन्यथात्वं विवक्षितम्। **पञ्चसु त्वेकरूपासु जय एव भवतीति**। पञ्च परीति समासो न भवतीति भावः। जये हि यदक्षादीनां वृत्तं तदपेक्षयान्यपातत्वे सति समासेन भवितव्यम्। न च पञ्चस्वेकरूपास्वन्यथात्वं सम्भवति। अत एव जयस्तदा भवति यदा पञ्चाप्येकरूपा भवन्ति—उत्ताना अवाञ्चो वा। एतेन प्रकारेण **परेण चतुष्परीत्यत्रोपपत्तिर्दर्शिता**। **परेणेति**। अतिशयेनेत्यर्थः।

**अक्षादयस्तृतीयान्ता इत्यादि**। अन्यथा वृत्तावयं समास इष्यते। तत्र चाक्षादीनामन्यथावृत्तौ कर्तृत्वं करणत्वं वा भवति, अतस्तृतीयया भवितव्यमिति तदन्ता एव समस्यन्ते। **पूर्वोक्तस्येति**। अक्षादेरित्यर्थः।

**पदमञ्जरी**

कितवाः=द्यूतकाराः, तेषां व्यवहारेऽक्षशलाकानां पातनं तत्रैवायं समास इष्यते, एतच्चाभिधानस्वाभाव्याल्लभ्यते। **सर्वं उत्ताना इति**। शलाकानामपि प्रकृतत्वात्सर्वे च सर्वाश्च सर्वे, उत्तानाश्च उत्तानाश्च उत्तानाः, अवाञ्चश्चावाच्यश्चावाञ्चः, 'पुमान्स्त्रिया' इति पुंसः शेषः। **तस्यैवास्येति**। पातयितुरित्यर्थः। विपातः = पराजयः। अन्यथापाते सति, जये यादृशः पातः सर्वे उत्तानाः पतन्त्यवाञ्चो वेति ततोऽन्यादृशेषु केषुचिदुत्तानेषु, केषुचिदवाक्षु पतत्स्वित्यर्थः। **अक्षेणेति**। वृत्तापेक्षया कर्त्तरि तृतीया। **परमेणेति**। अतिशयेनातः परमित्यर्थः। पञ्चपरीति न भवतीति यावत्।

**अस्योपपादन श्लोकेन क्रियते। पञ्चसु त्वेकरूपेष्विति**। अत्रापि पुंसः शेषः। **एकरूपास्विति** प्रायेण पाठः। तत्र शलाकानामेव ग्रहणम्। **जय एव भविष्यतीति**। लृटोऽर्थो मृग्यः; यतः पञ्चस्वेकरूपेषु जय एव भवति, तेन परमेण चतुः—परीत्यन्वयः।

**अक्षादयस्तृतीयान्ता इति**। अन्यथा वृत्तावयं समास इष्यते, तत्र चाक्षादीनां कर्तृत्वात्तृतीयैव

**भावबोधिनी**

पट = उल्टे गिरते हैं तब गिराने वाला जीतता है। यदि इसके विपरीत गिरने पर [अर्थात् सभी चित या पट न होकर कुछ चित और कुछ पट गिरते हैं तब] उस गिराने वाले की (विपात =) हार होती है। अक्ष उस प्रकार नहीं हुआ जैसे पहले जीत में हुआ था [इस अर्थ में] अक्षपरि [एक पांसा उलटा गिरा] [शलाकया विपरीतं वृत्तम्—इस विग्रह में] शलाका परि [एक शलाका के उलटा गिरा]। [एकेन विपरीतं वृत्तम् इस विग्रह में] एक परि [एक उलटा गिरा]। [द्वाभ्यां विपरीतं वृत्तम् इस विग्रह में] द्विपरि [दो उल्टे गिरे]। [त्रिभिः विपरीतं वृत्तम्–इस विग्रह में] त्रिपरि [तीन उल्टे गिरे]। [चतुर्भिः परेण विपरीतं वृत्तम्—यह विग्रह है। परेण = अतिशयेन यह अर्थ है] परेण चतुष्परि [चार अतिशय उल्टे गिरे]। इन सभी में एक दो तीन और चार पाँसों के विपरीत गिरने से पराजय होती है। अतः समास होता है। उक्त कथन का उपपादन श्लोक के माध्यम से करते हैं—]

पाँचों शलाकाओं के एक रूप अर्थात् सीधा अथवा उल्टा गिरने पर [गिराने वाले की] विजय ही होती है, अक्ष आदि [अर्थात् शलाका और संख्या इन] तृतीयान्त शब्दों का तब समास हो जाता है जब पूर्वोक्त=जय के समय

1. 'परमेण' इति पदमञ्जरीसम्मतः पाठः।

**३६२. विभाषा ॥ ११ ॥ (६६५)**

**'विभाषा' इत्ययमधिकारो वेदितव्यः** (म० भा०)। **यदित ऊर्ध्वमनुक्रमिष्यामस्तद्विभाषा भवति। वक्ष्यति—'अपपरिबहिरञ्चवः पञ्चम्या'** (२.१.१२), **अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः ॥**

**न्यासः**

कुत एतत् ? अक्षादयस्तृतीयान्ता इति पूर्वमक्षादेरेवोक्तत्वात्। अभेदविवक्षायामेकवचनम्। षष्ठी चेयं शेषविवक्षायां वृत्तशब्दापेक्षया सम्बन्धलक्षणा, वृत्तशब्दस्त्वध्याहर्तव्यः। **यथा न तदिति।** अक्षादेः पूर्वोक्तस्य यथा वृत्तमभूत् पूर्वं जये तथा वृत्तं यदि संप्रति न भवत्येवं समासो भवति, नान्यथा। पूर्ववृत्तस्यान्यथात्वद्योतने समासोऽयम्, तच्चैकेनापि क्रियते, ततो द्विवचनाद्यपेक्षया निष्प्रयोजनमित्याह—**एकत्वेऽक्षशलाकयोरिति।** अक्षशलाकयोरेकवचनान्तयोरित्यर्थः। ततोऽयं न्यायसिद्ध एवार्थः श्लोकेन संगृहीतः।

अथ वा—उत्तरं विभाषाग्रहणमिहापि सिंहावलोकितन्यायेन सम्बध्यते। सा च व्यवस्थितविभाषा। तेन वचनसिद्ध एवायमर्थो वेदितव्यः। अक्षादय इति किम् ? पाशकेनेदं न तथा वृत्तं यथा पूर्वं जये। परिणेति किम् ? सुबन्तमात्रेण सह समासो मा भूत्। कितवव्यवहार इति किम् ? अक्षेणेदं न तथा वृत्तं यथा पूर्वं शकटेन। एकत्व इति किम् ? अक्षाभ्यामक्षैर्वा न तथा वृत्तं यथा पूर्वं जये ॥ १० ॥ **विभाषा ॥ ११ ॥**

**पदमञ्जरी**

युक्तेति भावः। **पूर्वोक्तस्येति।** पूर्ववृत्तस्येत्यर्थः। अनेकार्थत्वाद्धातूनां वचिरिह वर्तने वर्तते, तदेव **यथा न तदिति** तच्छब्देन परामृश्यते। पूर्वंजये वृत्तस्याक्षादेर्यथा तद्वृत्तमभूत्, यदि संप्रति तथा न भवति एवं समासो भवतीत्यर्थः। पूर्वोक्तस्येति सामान्यापेक्षमेकवचनम्। जयकालेऽक्षादीनां यदेकरूपं वर्तनं तद्विपरीते वर्तने परिणा द्योत्ये समास इति यावत्। **एकत्वेऽक्षशलाकयोरिति।** अक्षशलाकाशब्दयोरेकवचनान्तयोः समास इत्यर्थः। इदमप्यभिधानस्वाभाव्यादेव लभ्यते, अन्यथा 'राजपुरुषः' इत्यादाविवाभेदैकत्वमवगम्येत, न तु शुद्धमेकत्वम्। प्रायेण तु **'कितवव्यवहारे च एकत्वेऽक्षशलाकयोः'** इति श्लोकरूपेण पठ्यते, तत्रार्थान्तरं मृग्यं संहिताकार्यप्रसङ्गश्च।

कितवव्यवहार इति किम् ? अक्षेणेदं न तथा वृत्तं यथा पूर्वंशकटे। एकत्व इति किम् ? अक्षाभ्याम-क्षैर्वा इदं न तथा वृत्तम्। अक्षादय इति किम् ? प्रसङ्गेनेदं न तथा वृत्तं यथा पूर्वंजये, परिणेति वचनात्सुबन्तमात्रेण न भवति ॥ १०-११ ॥

**भावबोधिनी**

गिरने के समान नहीं गिरते हैं, और कितव = जुआरियों का व्यवहार होता है और अक्ष तथा शलाका की एक संख्या रहती है अर्थात् एकवचनान्त ही अक्ष और शलाका का समास होता है।

**विमर्श**—प्रस्तुत सूत्र के भाष्य में ये काशिकोक्त श्लोक नहीं हैं। अन्तिम पंक्ति के भाव वाले वार्तिक अवश्य हैं। यहाँ शलाकाओं को मानकर 'एकरूपासु' यह है। 'भविष्यति' यह कालसामान्य में ही समझना चाहिये। 'अक्ष' आदि तृतीयान्त शब्दों का समास होता है। पूर्वोक्तस्य—यहाँ न्यासकार ने 'अक्षादेः' यह अर्थ किया है। परन्तु पदमंजरीकार ने 'पूर्ववृत्तस्य' यह अर्थ किया है। धातु अनेक अर्थों वाली होती हैं—अतः यहाँ √वच् को √वृत् के अर्थ में समझ लेना चाहिये। जय के समय अक्ष आदि जैसे गिरते हैं, वैसे नहीं गिरते हैं, तब समास होता है। विग्रह वाक्य में एकवचनान्त 'अक्ष' आदि का प्रयोग करना चाहिये। अतः द्विवचनान्त या बहुवचनान्त शब्दों के साथ समास नहीं होता है ॥ १० ॥

'विभाषा' यह अधिकार सूत्र समझना चाहिये। अब इसके आगे जिन्हें कहेंगे, वे विभाषा = विकल्प से होते हैं। 'पाणिनि' आगे कहेंगे—'अप, परि, बहिः और अञ्चु–इनका पञ्चम्यन्त के साथ समास होता है।' (पा० सू०

## ३६३. अपपरिबहिरञ्चवः पञ्चम्या ॥ १२ ॥ (६६६)

**अप, परि, बहिस्, अञ्चु—इत्येते सुबन्ताः पञ्चम्यन्तेन सह विभाषा समस्यन्ते, अव्ययीभावश्च समासो भवति। अपत्रिगर्त्तं वृष्टो देवः, अप त्रिगर्तेभ्यः। परित्रिगर्तम्, परि त्रिगर्तेभ्यः। बहिर्ग्रामम्, बहिर्ग्रामात्। प्राग्ग्रामम्, प्राग्ग्रामात्। बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकम् ॥**

### न्यासः

**अपपरिबहिरञ्चवः पञ्चम्या ॥** ननु बहिःशब्दयोगे न केनचित् पञ्चमी विधीयते, तत् कथं तदन्तेन समास इत्याह—**बहिःशब्दयोग इत्यादि।** यदेतत् पञ्चम्यन्तेन सह बहिःशब्दस्य समासविधानम्, तज्ज्ञापयति—भवति हि बहिःशब्दयोगे पञ्चमीति। अथोपादानसामर्थ्याद् बहिःशब्दयोगे पञ्चमी न सम्भवतीत्यपञ्चम्यन्तेनैव सुबन्तमात्रेण समास इत्येवं कस्मान्न विज्ञायते? अशक्यमेतद् विज्ञातुम्ः, पञ्चमीग्रहणस्य वैयर्थ्यप्रसङ्गात्। तथा हि 'अपपरी वर्जने' इत्येवमपपर्थ्योः कर्मप्रवचनीयसंज्ञायां सत्यां ताभ्यां योगे 'पञ्चम्यपाङ्परिभिः' इति पञ्चम्यैव भवितव्यम्, नान्यथा विभक्त्या। अञ्चुशब्देनापि योगे 'अन्यारात्' इत्यादिना पञ्चम्यैव भवितव्यमित्यपार्थकं पञ्चमीग्रहणं स्यात्। ननु चाकर्मप्रवचनीयौ यावपपरी तयोरपञ्चम्यन्तेन समासो मा भूदित्येवमर्थं पञ्चमीग्रहणं स्यात्—परिगतः, अपगत इति? नैतदस्ति, परत्वाद्धि तयोः 'कुगतिप्रादयः' इति तत्पुरुषेण भवितव्यम्। ननु च नाप्राप्ते ह्येतस्मिन्नयमारभ्यमाणा बाधको भवति? नैतदस्ति; कर्मप्रवचनीयौ यावपपरी तत्रावकाशः स्यात्। तत्र हि कर्मप्रवचनीयानां प्रतिषेधं वक्ष्यति। तस्माद्बहिः-

### पदमञ्जरी

**अपपरिबहिरञ्चवः पञ्चम्या ॥** ननु बहिःशब्देन योगे न केनचित्पञ्चमी विधीयते, तत्कथं तस्य पञ्चम्यन्तेन समासः? बहिर्गतो ग्रामादित्यत्र त्वसामर्थ्यान्नैव समासेन भवितव्यमत आह—**बहिःशब्देनेति।** न च वचनसामर्थ्याद्बहिःशब्दस्यापञ्चम्यन्तेन समासो भवत्विति वाच्यम्; पञ्चमीग्रहणाद्। इह ह्यपपरिशब्दौ परस्परसाहचर्याद्वर्जनार्थौ गृह्येते, तौ च कर्मप्रवचनीयौ, तद्योगे च पञ्चम्येव विहिता। अञ्चतिरप्यपपरिसाहचर्यादव्ययमेव गृह्यते, तद्योगेऽप्यञ्चूत्तरपदलक्षणा पञ्चम्येवास्ति। तदेतत्पञ्चमीग्रहणं ज्ञापयति—षष्ठीविषये बहिर्योगे पञ्चमी भवतीति ॥ १२ ॥

### भावबोधिनी

२।१।१२) अपत्रिगर्तं वृष्टो देवः, अप त्रिगर्तेभ्यः [त्रिगर्त देश को छोड़कर वर्षा हुयी। यहाँ समास होने पर अव्यय और नपुंसक लिङ्ग होता है। वैकल्पिक होने के कारण समासरहित दूसरा रूप भी होता है।

**विमर्श**—भाष्यादि ग्रन्थों में 'विभाषापपरिबहिरञ्चवः पञ्चम्या' यही सूत्र का रूप प्राप्त होता है। इससे पाणिनिकृत आकार की पुष्टि होती है। इस सूत्र के भाष्य में विभाषा इस योग विभाग की बात अवश्य है। संभवतः काशिकाकार ने इसे ही महत्त्व देकर इस सूत्र के दो सूत्र बना दिये। सिद्धान्तकौमुदी में भट्टोजिदीक्षित ने भी इसी प्रकार योग विभाग को महत्त्व देकर दो सूत्र अलग-अलग लिखे हैं।

इस योग विभाग की कल्पना से एक बात सिद्ध होती है कि इससे पहले जितने समास बताये गये वे सभी नित्य हैं। इसी कारण उनके अस्वपद विग्रह अथवा अविग्रह की कल्पना की गयी है ॥ ११ ॥

अप, परि, बहिस् अञ्चु [ = अञ्चूत्तरपद]—ये सुबन्त शब्द पञ्चम्यन्त के साथ विकल्प से समास प्राप्त करते हैं और वह समास अव्ययीभाव होता है। उदा०—अपत्रिगर्तं वृष्टो देवः। [त्रिगर्त देश को छोड़कर वर्षा हुई। समास न होने पर] अपत्रिगर्तेभ्यः। परित्रिगर्तं परित्रिगर्तेभ्यः।

**विमर्श**—'अपपरी वर्जने' (पा० सू० १।४।८८) सूत्र से वर्जन = छोड़ना अर्थ में अप और परि की कर्मप्रवचनीय संज्ञा होती है और 'पञ्चम्यपाङ्परिभिः' (पा० सू० २।३।१०) इसमें इनके योग में पञ्चमी विभक्ति ही होती

## ३६४. आङ् मर्यादाभिविध्योः ॥ १३ ॥ (६६७)

**'आङ्' इत्येतन्मर्यादायामभिविधौ च वर्तमानं पञ्चम्यन्तेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात्। अभिविधौ–आकुमारं यशः पाणिनेः, आकुमारेभ्यः ॥**

### न्यासः

शब्दस्य पञ्चम्यन्तेनैव समासविधानम्, नान्येन; अन्यथा पञ्चमीग्रहणमनर्थकं स्यात्। तस्मात् साधूक्तम्—बहिःशब्दयोगे पञ्चमीभावस्यैतदेव ज्ञापकमिति ॥ १२ ॥

**आङ् मर्यादाभिविध्योः ॥** अथ मर्यादाभिविधिग्रहणं किमर्थम्, यावता पञ्चमीत्यनुवर्त्तते, आङा च कर्मप्रवचनीयेनैव योगे पञ्चमी विधीयते—एतयोरेवार्थयोः 'आङ् मर्यादावचने' इत्याङः कर्मप्रवचनीयसंज्ञा, नान्यत्र; तत्रान्तरेणापि मर्यादाभिविधिग्रहणं तयोरेवार्थयोः समासो भविष्यति, नान्यत्रेति ? सत्यमेतत्; तथापि मन्दधियां सुखावबोधनार्थं मर्यादाभिविधिग्रहणम् ॥ १३ ॥

### पदमञ्जरी

**आङ् मर्यादाभिविध्योः ॥** 'मर्यादाभिविध्योः' इति शक्यमकर्त्तुम्, कथम् ? पञ्चम्येति वर्त्तते, आङा च कर्मप्रवचनीयेनैव योगे पञ्चमी विहिता, एतयोश्चैवार्थयोराङः कर्मप्रवचनीयसंज्ञा—'आङ् मर्यादावचने' इति। तत्र हि वचनग्रहणं मर्यादोक्तिमात्रे यथा स्याद् इत्यभिविधावपि भवति। तत्रैव वाऽभिविधिग्रहणमेवास्तु ॥ १३ ॥

### भावबोधिनी

है। अतः पञ्चम्यन्त शब्दों के साथ इनका वैकल्पिक समास होने पर विभक्ति लुक्, अव्ययत्व और नपुंसकलिङ्ग करने पर रूप सिद्ध होते हैं। समासाभाव पक्ष में विभक्ति वाला रूप रहता है।

[अनु०] [ग्रमाद् वहिः—इस विग्रह में] बहिर्ग्रामम् [और समास न होने पर] बहिः ग्रामाद्। प्राग् ग्रामम्, प्राग् गमाद् [गाँव से पूर्व—इस अर्थ में प्र उपपद अञ्चु धातु से क्विप् प्रत्यय आदि करने पर प्राक् रूप बनता है।] बहिः शब्द के योग में पञ्चमी होने में यह [समास विधान] ही ज्ञापक है।

**विमर्श**—किसी भी सूत्र से 'बहिः' के योग में पञ्चमी विभक्ति का विधान नहीं किया गया है। अतः बहिः के साथ पञ्चम्यन्त का प्रयोग न मिलने के कारण यह समास विधान व्यर्थ होकर यह ज्ञापित करता है कि 'बहिः' के योग में भी पञ्चमी होती है। अर्थात् षष्ठी के विषय में पञ्चमी विधान का यही सूत्र ज्ञापक है ॥ १२ ॥

मर्यादा और अभिविधि इन अर्थों में विद्यमान 'आङ्' यह पञ्चम्यन्त के साथ विकल्प से समास प्राप्त करता है और वह समास अव्ययीभाव होता है। उदा०—आपाटलिपुत्रं वृष्टो देवः, आ पाटलिपुत्रात् [पटना तक वर्षा हुई।] अभिविधि में—आकुमारं यशः पाणिनेः, आ कुमारेभ्यः। [कुमारों = बच्चों तक पाणिनि का यश फैला हुआ है।]

**विमर्श**—आङ् मर्यादावचने (पा० सू० २।१।१३) इस सूत्र से मर्यादा और अभिविधि इन दोनों अर्थों में 'आङ्' की कर्मप्रवचनीय संज्ञा होती है। इस कर्मप्रवचनीय आङ् के योग में 'पञ्चम्यपाङ्परिभिः' (पा० सू० २।३।१०) इससे पञ्चमी होती है। तब प्रस्तुत सूत्र से समास होता है।

जब सीमा का भी ग्रहण होता है तब अभिविधि होती है—तेन सह अभिविधिः; जैसे—कुमारों तक पाणिनि का यश फैला है। जब सीमा को छोड़ दिया जाता है तब मर्यादा होती है—तेन बिना मर्यादा। जैसे 'आपाटलिपुत्रं वृष्टो देवः, यहाँ पटना से पहले तक ही वर्षा होती है। पटना उससे व्याप्त नहीं होता है। अतः मर्यादा है ॥ १३ ॥

## ३६५. लक्षणेनाभिप्रती आभिमुख्ये ।। १४ ।। (६६८)

लक्षणम्=चिह्नम्, तद्वाचिना सुबन्तेन सहाभिप्रती शब्दावाभिमुख्ये वर्तमानौ विभाषा समस्येते, अव्ययीभावश्च समासो भवति। अभ्यग्नि शलभाः पतन्ति, अग्निमभि। प्रत्यग्नि, अग्निं प्रति। अग्निं लक्ष्यीकृत्य अभिमुखं पतन्तीत्यर्थः।

**न्यासः**

**लक्षणेनाभिप्रती आभिमुख्ये ।। अभ्यग्नि, प्रत्यग्नीति। अग्निमभि, अग्निं प्रतीति** विग्रहः। 'कर्मप्रवचनीययुक्ते द्वितीया'। कर्मप्रवचनीयसंज्ञा त्वेकस्य 'अभिरभागे' इत्यनेन। अपरस्य 'लक्षणेत्थम्भूताख्यान' इत्यादिना। अत्र चाग्निर्लक्षणम्, तेन शलभपातो लक्ष्यते। अत्राभिमुख्ये चाभिप्रती वर्त्तेते, तथा ह्यग्न्यभिमुखमेव शलभाः पतन्ति, नापि पार्श्वतः, नापि पृष्ठत इत्यर्थोऽवगम्यते।

**स्रुघ्नं प्रतिगत इति।** स्रुघ्नान्मथुरां प्रस्थितो दिङ्मोहात् स्रुघ्नमेव प्रतिनिवृत्त इति नात्र स्रुघ्नो लक्षणम्। यदुद्दिश्य हि गच्छति तल्लक्षणं भवति। यदा तु दिङ्मोहाद्यत एव प्रस्थितस्तमेव प्रतिगच्छति तदा तदप्रतीतं कथं लक्षणं भवति—स्रुघ्नमिति! 'तथायुक्तञ्चानीप्सितम्' इति कर्मसंज्ञायां सत्यां कर्मणि द्वितीया। **येनाग्निस्तेन गत इति** भवत्यत्राग्निर्लक्षणमाभिमुख्यमप्यस्ति, अभिप्रती तु न स्त इति तेन येनतेनशब्दाभ्यां

**पदमञ्जरी**

**लक्षणेनाभिप्रती आभिमुख्ये ।। अभ्यग्नि, प्रत्यग्नीति।** अग्निं प्रतीति विग्रहः, 'अभिरभागे' 'लक्षणेत्थम्भूत' इति चाभिप्रत्योः कर्मप्रवचनीयत्वाद् द्वितीया। तत्राग्निर्लक्षणम्, तेन हि शलभानां पातो लक्ष्यते; अभिप्रती च लक्ष्यलक्षणभावं द्योतयित्वाभिमुख्यमपि द्योतयतः।

**स्रुघ्नं प्रतिगत इति।** स्रुघ्नादागतस्तमेव प्रतिगतः=प्रतिनिवृत्त इत्यर्थः। अत्र प्रतिगमनं प्रति कर्मत्वेन विवक्षितत्वात् स्रुघ्नो लक्षणं न भवति। **येनाग्निस्तेन गत इति।** येन देशेनाग्निर्गतस्तेनेति प्रतीतिर्भवति, गमनस्याग्निर्लक्षणमाभिमुख्यं चास्ति, 'येन-तेन' शब्देन सह समासः स्यात्। **अभ्यङ्काः प्रत्यङ्का इति।**

**भावबोधिनी**

लक्षण = चिह्न. इसके वाचक सुबन्त के साथ अभि और प्रति शब्द, जो आभिमुख्य [सामने] अर्थ में वर्तमान हैं, का विकल्प से समास होता है और वह समास अव्ययीभाव होता है। उदा०—अभ्यग्नि शलभाः पतन्ति, अग्निम् अभि। [आग के सामने पतंगे गिरते हैं।] प्रत्यग्नि शलभाः पतन्ति, अग्निम् प्रति [आग पर पतंगे गिरते हैं।] आग को लक्ष्य बनाकर सामने गिरते हैं—यह अर्थ है।

विमर्श—अग्नि लक्षण हैं क्योंकि इससे पतंगों का गिरना ज्ञात होता है। अतः 'अभिरभागे' (पा० सू० १।४।९१ से) 'अभि' की और 'लक्षणेत्थम्भूताख्यान०' (पा० सू० १।४।९०), इससे 'प्रति' की कर्मप्रवचनीय संज्ञा होने से इनके योग में 'कर्मप्रवचनीययुक्ते द्वितीया' (पा० सू० २।३।८) से द्वितीया होती है। यहाँ अग्नि लक्षण है और 'अभि' तथा 'प्रति' शब्द अभिमुख्य अर्थ में है। अतः वैकल्पिक समास होता है, पक्ष में विभक्ति वाला रूप भी रहता है।

[अनु०] लक्षण वाचक के साथ—इसका क्या प्रयोजन है? स्रुघ्नं प्रति गतः। लौटकर स्रुघ्न की ओर ही वापस चला गया। [स्रुघ्न से मथुरा की ओर चला किन्तु दिग्भ्रम के कारण पुनः स्रुघ्न की ओर ही वापस आ गया। अतः स्रुघ्न लक्षण नहीं है। इसलिए समास नहीं होता है।

अभि और प्रति का समास होता है = इसका क्या फल है? येन अग्निस्तेन गतः [जिस स्थान से आग गया उसी स्थान से गया। यहाँ आग गमन का लक्षण है और अभिमुख्य भी है। परन्तु सूत्रोक्त शब्द नहीं हैं। अतः समास नहीं होता है।

लक्षणेनेति किम् ? स्रुघ्नं प्रति गतः। प्रतिनिवृत्य स्रुघ्नमेवाभिमुखं गतः। अभिप्रती इति किम् ? येनाग्निस्तेन गतः। आभिमुख्य इति किम् ? अभ्यङ्का गावः, प्रत्यङ्का गावः। नवाङ्का इत्यर्थः॥

## ३६६. अनुर्यत्समया ॥ १५ ॥ (६६९)

**समया=समीपम्। अनुर्यस्य समीपवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुवनमशनिर्गतः।**

### न्यास

सह समासो न भवति। अभ्यङ्का गावः, प्रत्यङ्का गाव इति। अभिनवः प्रतिनवोऽङ्क आसामिति बहुव्रीहिः। अभिशब्दोऽत्राभिनवार्थे वर्त्तते, प्रतिशब्दश्च प्रतिनवार्थे। अङ्कोऽत्र भवति गवां लक्षणम्, आभिमुख्यं तु नास्ति। ननु चात्र परत्वाद् बहुव्रीहिणा भवितव्यम्, अतः स बाधको भविष्यति किमाभिमुख्यग्रहणेन ? नैवम्, असत्याभिमुख्यग्रहणेऽशेषत्वात् कुतो बहुव्रीहिर्भवति ! अथ वैतज् ज्ञापयति—बहुव्रीहिरव्ययीभावेन बाध्यत इति। तेन द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणमिति सिद्धं भवति; अन्यथा हि स्वपदार्थे चरितार्थोऽव्ययीभावो द्विमुनि व्याकरणमित्यत्रान्यपदार्थे परत्वाद् बहुव्रीहिणा बाध्येत ॥ १४ ॥

**अनुर्यत्समया ॥** यस्य समया यत्समयेति षष्ठीसमासोऽयम्। ननु च समयाशब्दयोगे 'अभितःपरितःसमयानिकषा' इत्याद्युपसंख्यानाद् द्वितीयया भवितव्यम्, अतः षष्ठ्येव तावन्न सम्भवति, कुतः पुनस्तस्याः समासः ? अथापि कथञ्चित् षष्ठी स्यात्, तथापि समयाशब्दस्याव्ययत्वात् 'पूरणगुण' इत्यादिना षष्ठीसमासप्रतिषेधेन भवितव्यम् ? नैष दोषः; योगग्रहणादिह समयाशब्दार्थेन योगे द्वितीया विज्ञायते। स चार्थो मुख्य

### पदमञ्जरी

अभिनवोऽङ्क आसाम्, प्रतिनवोऽङ्क आसामिति बहुव्रीहिः। अङ्कोऽत्र भवति गवां लक्षणम्, आभिमुख्यं तु नास्ति। ननु च सति संभवेऽव्ययार्थे प्रधानेऽव्ययीभाव इत्युक्तम्, कथमत्र प्रसङ्गः ? एवं तर्ह्येतज्ज्ञापयति—भवत्यत्र प्रकरणे बहुव्रीहिविषयेऽव्ययीभाव इति। तेन 'संख्या वंश्येन', 'द्विमुनि व्याकरणम्' इत्येतत्सिद्धं भवति ॥ १४ ॥

**अनुर्यत्समया ।** यत्समयेति षष्ठीसमासोऽयम्। कथं पुनः समयाशब्देन योगे षष्ठी, यावता'अभितःपरितःसमया' इति द्वितीयया भवितव्यम् ? नैष दोषः; समयाशब्दस्य मुख्योऽर्थः सामीप्यम्, तद्योगे द्वितीया। इह तु समयाशब्दवाचिन्यनुशब्दे समयाशब्दो वर्त्तते, तदाह—**अनुर्यत्समया। समयावाचीति।** यस्य समयेति

### भावबोधिनी

अभिमुख्य = सामने—इसका क्या प्रयोजन ? अभ्यङ्काः गावः, प्रत्यङ्काः गावः, नव = अभिनव, अंक=चिह्नवाली गायें—यह अर्थ है।

**विमर्शः**—अभिनवः अङ्कः आसाम् और प्रतिनवः अङ्कः आसाम—इस विग्रह में बहुव्रीहि समास होता है। यहाँ अङ्क=चिह्न गायों का लक्षण तो है परन्तु आभिमुख्यक अर्थ नहीं है। अतः इनमें समास नहीं होता है। यही ज्ञापक होता है कि अव्ययीभाव द्वारा बहुव्रीहि का बाध होता है। अतः यदि आभिमुख्य रहता तो अव्ययीभाव ही होता ॥ १४ ॥

समया=समीप, अनु जिसका समीपवाची है, उस लक्षणभूत = चिह्नवाचक के साथ विकल्प से समास प्राप्त करता है और वह अव्ययीभाव समास होता है। उदा०—अनुवनम् अशनिः गतः [जंगल में वज्र = बिजली गिरी। यहाँ 'अनु' शब्द 'वन के समीप' अर्थ का द्योतक है। अतः 'वन' शब्द वनसमीप में लाक्षणिक है।

'अनु' यह किस लिये है ? वनं समया। [यहाँ अनु नहीं है अतः समासः नहीं होता है।]

**अनुरिति किम् ? वनं समया । यत्समयेति किम् ? वृक्षमनु विद्योतते विद्युत् । 'अव्ययं विभक्ति-समीप' (२.१.६) इत्येव सिद्धे पुनर्वचनं विभाषार्थम् ॥**

**न्यासः**

एव गृह्यते, न गौणः । स पुनर्मुख्योऽर्थः समीपम् । न चेह समया शब्दस्य मुख्योऽर्थोऽस्ति, किं तर्हि ? गौणोऽर्थः । अनुरेव समयाशब्देनोच्यते, तस्माच्छेषलक्षणा षष्ठ्येव न्याय्या । अत एव द्रव्यवाचित्वादव्ययसंज्ञाया अभावात् 'पूरणगुण' इति प्रतिषेधो नोपपद्यते । **अनुर्यत्समयेति** । एतेनानुशब्दार्थे समयाशब्दो वर्त्तत इति दर्शयति । ननु च समयाशब्दस्य समीपमर्थः, तत् कथमनुशब्दः समयाशब्देनोच्यत इत्याह—**यस्य समीपवाचीति** । एतेन समयाशब्दार्थाभिधायित्वादनुशब्दः समयाशब्देनोपचाराद्व्यपदिष्ट इत्याचष्टे । भवत्युपचारेण हि तदर्थाभिधायिनि तद्व्यपदेशः, यथा—सीताहरणं काव्यमिति । तेनेत्यनेन यस्यानुशब्दः समयावाची स परामृश्यते । ननु च सोऽर्थः, तत् कुतस्तेन समासः ? अर्थे कार्यासम्भवात् तद्वाचिनि शब्दे कार्यं विज्ञायते, तथा च तेनेत्यस्य तद्वाचिना शब्देनेत्ययमर्थोऽत्र गम्यते । **अनुवनमिति** । तेनेत्यनेन यत् षष्ठ्यन्तं तेन वनशब्देन समासः । वनस्यान्विति समीपसमीपिसम्बन्धे षष्ठ्येव युक्ता ।

**वनं समयेति** । पूर्वोक्तेनोपसंख्यानेन वनशब्दात् द्वितीया । **वृक्षमनु विद्योतते विद्युदिति** । अत्र कर्मप्रवचनीयलक्षणा द्वितीया । अनुशब्दोऽत्रलक्षणे वर्त्तते, न सामीप्ये ॥ १५ ॥

**पदमञ्जरी**

कोऽर्थः ? समयावाचीत्यर्थः, तदिह मुख्येनार्थेनायोगाद् द्वितीया न भवति, षष्ठ्येव तु भवति, तस्याश्च समासः । न च पूरणगुणेति प्रतिषेधः; अनव्ययत्वात् । सामीप्ये हि वर्त्तमानः समयाशब्दोऽसत्त्ववाचित्वादव्ययम् । इह त्वनुशब्दार्थे वर्त्तते, तत्र यथा 'अभिरभागे' इत्यादावनुकरणस्याव्ययसंज्ञा न भवति, तथास्यापि । एवं च यत्समयेत्यविभक्तकः सौत्रो निर्देशः । वृत्तावपि यत्समयेति सूत्रानुकरणेन विभक्त्यभावः । **तेनेति** । तद्वाचिना शब्देनेत्यर्थः । **अनुवनमिति** ।

वनस्यान्विति सामीप्यसम्बन्धे षष्ठीसमासः, अस्यार्थमाह—**वनं समयेति** ॥ १५ ॥

**भावबोधिनी**

'अनु' जिसका समीपवाची है—इसका क्या प्रयोजन ? वृक्षम् अनु विद्योतते विद्युत् [वृक्ष से लक्ष्यमाण विद्युत् प्रकाशित हो रही है—यह अर्थ है । अतः यहाँ 'अनुर्लक्षणे' (पा० सू० १।४।४८) से अनु की कर्मप्रवचनीय संज्ञा होती है, और द्वितीया होती है । यहाँ 'समीप' अर्थ का नहीं अपितु लक्ष्यलक्षणभाव अर्थ का प्रतिपादक 'अनु' है । अतः समास नहीं होता] 'अव्ययं विभक्ति समीप०' [पा० सू० २।१।६] इस सूत्र द्वारा [समीप अर्थ में अव्यय का समास होता है—यह अर्थ होने से] सिद्ध है फिर यह सूत्र बनाना 'विभाषा' [विकल्प] के लिये है ।

**विमर्श**—जब 'अनु' शब्द समीप का वाचक हो तभी समास होता है । अतः लक्ष्यलक्षणभाव में समास नही होता है ।

यद्यपि 'अव्ययं विभक्तिसमीप०' (पा० सू० २।१।६) इस पूर्वोक्त सूत्र से समीप अर्थ में अनु को मानकर समास होना सम्भव है । किन्तु इससे होने वाला समास नित्य समास है और प्रस्तुत सूत्र से होने वाला समास वैकल्पिक है और यह विकल्प ही अभीष्ट है । अतः 'अनुवनम्' यह समास और 'वनस्य अनु' यह व्यास प्रयोग होता है । यदि लक्ष्यलक्षणभाव अर्थ अभीष्ट होता है तब कर्मप्रवचनीय मान कर द्वितीया होकर 'वनम् अनु' ऐसा ही होता है, समास नहीं होता । यदि 'अव्ययं विभक्ति समीप०' सूत्र से समास करते हैं तो नित्यसमास होने से व्यास नहीं होता है । एक ही प्रयोग रहता है ॥ १५ ॥

**३६७. यस्य चायामः ॥ १६ ॥ (६७०)**

**'लक्षणेन' इति वर्त्तते। आयामः = दैर्घ्यम्। अनुर्यस्यायामवाची तेन लक्षणभूतेन सह विभाषा समस्यते, अव्ययीभावश्च समासो भवति। अनुगङ्गं वाराणसी** (म० भा०)। **अनुयमुनं मथुरा। यमुनाऽऽयामेन मथुराऽऽयामो लक्ष्यते।**

**आयाम इति किम्? वृक्षमनु विद्योतते विद्युत् ॥**

**न्यासः**

**यस्य चायामः ॥** अत्राप्युपचारेणायामवाचित्वादनुरेवायामशब्देनोक्तः। **अनुगङ्गं वाराणसीति।** यद्यपि गङ्गावाराणस्यावुभे अप्यायामवत्यौ, तथाप्यायामवत्तया गङ्गायाः प्रसिद्धत्वाद् गङ्गैवात्र लक्षणम्, न वाराणसी। प्रसिद्धं हि लक्षणं भवति, नाप्रसिद्धम्। तस्माद् गङ्गयैवात्र समासो भवति, न वाराणस्या। **यमुनायामेन मथुरायाम लक्ष्यत इति।** यमुनया तद्वत्या लक्षणभूतयेति वेदितव्यम्। **यस्माद्** यस्यायामवाच्यनुशब्दस्तेन लक्षणभूतेन सुबन्तेन समस्यते। यमुनायाश्चायामवाच्यनुशब्दः, न यमुनायामस्य। न ह्यायामस्यापर आयामोऽस्ति, तस्माद् यमुनायामेनेति हेताविियं तृतीया। यमुनायामेन हेतुना तद्वत्या यमुनया लक्षणभूतया करणभावमापन्नया वा मथुरायामो लक्ष्यत इत्ययमर्थो वेदितव्यः ॥ १६ ॥

**पदमञ्जरी**

**यस्य चायामः ॥ लक्षणेनेति वर्त्तत इति।** अन्यथा आयामो गङ्गाया इत्यस्यार्थेऽनुगङ्गमिति स्यात्। अत्राप्यायामवाचित्वादनुरेवायामशब्देनोच्यते, इत्याह—**अनुर्यस्यायामवाचीति। अनुगङ्गं वाराणसीति।** षष्ठ्यन्तेन गङ्गाशब्देन समासः। **गङ्गया अन्विति।** आयामो लक्षणत्वं चानुना द्योत्यते, लक्षणस्य, लक्ष्यापेक्षत्वाल्लक्ष्यं समासार्थं इत्यर्थादुपमानोपमेयभावे समास इति वाराणस्या सामानाधिकरण्यम्—गङ्गाया इवायामो यस्याः, गङ्गेवायता वाराणसीत्यर्थः। तद्वदत्यन्तायतेत्यर्थ इति केचित्। तथा च 'अनुगङ्गमेतत्सूत्रम्' इत्येकशेषसूत्रे **भागवृत्तिकारः** प्रयुङ्क्ते। नेति वयम्। किं प्रागायता वाराणसी? उतोदगायता? इति संदेहे इदमुच्यते—अनुगङ्गं वाराणसीति, यथोदगायता गङ्गा तथोदगायता वाराणसीत्यर्थः। गङ्गायामानुसारेण वाराणस्यायाम इत्यर्थः। **यमुनायामेन मथुरायामो लक्ष्यत इति।** न यमुना स्वरूपेण लक्षणम्, किं तर्हि? आयामेन, मथुरापि न स्वरूपेण लक्ष्यम्, किं तर्हि? आयामेन। तत्र प्राप्ताप्राप्तविवेकेनेदमुच्यते—यमुनायामेन मथुरायामो लक्ष्यत इति ॥ १६ ॥

**भावबोधिनी**

'लक्षणेन' [लक्षणवाचक के साथ] इसकी अनुवृत्ति रहती है। आयाम = दीर्घता = विस्तार। 'अनु' जिसका विस्तारवाची होता हैं, उस लक्षणभूत के साथ विकल्प से समास होता है, और वह अव्ययीभाव समास होता है। उदा०—अनुगङ्गं वाराणसी [गङ्गायाः अनु—इस विग्रह में गङ्गा शब्द वाराणसी के आयाम = विस्तार का वाचक है अतः समास होता है। समास करने पर अव्यय, नपुंसक लिङ्ग और ह्रस्व आदि करने पर अनुगङ्गम्—यह रूप होता है, गङ्गा के विस्तार के समान वाराणसी का विस्तार—यह प्रतीति होती है।] अनुयमुनं मथुरा। यमुना के आयाम = विस्तार से मथुरा का विस्तार लक्षित होता है। [अतः 'अनु' शब्द लक्षणवाची है। समास होकर पूर्ववत् प्रक्रिया से रूप सम्भव होता है।]

आयाम = विस्तार—यह किस लिये है? वृक्षम् अनु विद्योतते विद्युत्। [यहाँ अनु शब्द लक्ष्यलक्षणभाव में है, अतः समास नहीं होता है।]

**विमर्श**—अनुगङ्गं वाराणसी और अनुयमुनं मथुरा—इन प्रयोगों में गङ्गा और वाराणसी ये दोनों ही आयामवाची है, इसी प्रकार यमुना और मथुरा भी हैं। परन्तु प्रसिद्ध होने के कारण गङ्गा और यमुना को ही विस्तार

## ३६८. तिष्ठद्गुप्रभृतीनि च ॥ १७ ॥ (६७१)

**तिष्ठद्ग्वादयः समुदाया एव निपात्यन्ते। तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञकानि भवन्ति। तिष्ठद्गु=कालविशेषः** (म० भा०)। **तिष्ठन्ति गावो यस्मिन्काले दोहनाय स तिष्ठद्गु कालः। खलेयवादीनि प्रथमान्तानि विभक्त्यन्तरेण न संबध्यन्ते, अन्यपदार्थे च काले वर्तन्ते। चकारोऽवधारणार्थः। अपरः समासो न भवति—परमतिष्ठद्ग्विति।**

### न्यासः

**तिष्ठद्गुप्रभृतीनि च ॥** तिष्ठद्गुप्रभृतीनां गणपाठादेव कृतसाधुत्वानामिह प्रकरणे संकीर्त्तनमव्ययीभावसंज्ञार्थम्, न तु सुबन्तेन समासार्थम्। अत एवाह—**समुदाया एव निपात्यन्त इति।** तथाभूतानां पाठ एवैषां निपातनम्। **अव्ययीभावसंज्ञकानि भवन्तीति।** अनेन संज्ञामात्रं विधीयते, न त्वेषां सुबन्तेन समास इति दर्शयति।

### पदमञ्जरी

**तिष्ठद्गुप्रभृतीनि च ॥ समुदाया एव निपात्यन्त इति।** गणे तथा पाठ एव तेषां निपातनम्। तेन शतृशानजाद्यपि भवति। 'सुपो धातुप्रातिपदिकयोः' इति च प्रक्रियाऽऽर्यं न कर्त्तव्यमिति भावः। **अव्ययीभावसंज्ञानि भवन्तीति।** समाससंज्ञापि विधेया, अन्तोदात्तत्वं च। **प्रातिपदिकसंज्ञा च यथा स्यादिति। तिष्ठद्गु कालविशेष इति।** कालविशेष इत्येतदुत्तरैरपि सम्बध्यते, अत एवान्ते वक्ष्यति—'एते कालशब्दाः' इति, एतावान्कालविशेष इत्यस्याधिकार इत्यर्थः। **विभक्त्यन्तरेण न सम्बध्यन्ते इति।** अव्यतिरिक्त एव प्रातिपदिकार्थे प्रयोग एषां कर्त्तव्यः, नान्यत्रेत्यर्थः। **अन्यपदार्थे च वर्त्तन्त इति।** तिष्ठद्गु, वहद्गु आयतीगवमित्येतैरप्यस्य सम्बन्धः; अन्यथा कालशब्दत्वायोगात्। **चकारोऽवधारणार्थ इति।** अनेकार्थत्वान्निपातानाम्। **अपरः समासो न भवतीति।** वृत्त्यन्तरं न भवतीत्यर्थः। 'आतिष्ठद्गु जपन्सन्ध्याम्' इति तु पञ्चम्या 'अव्ययात्' इति लुक्, न समासः।

### भावबोधिनी

का वाचक और लक्षणवाचक माना जाता है। इसलिये जितनी विस्तार वाली गंगा, उतनी वाराणसी अर्थात् गंगा के किनारे-किनारे वाराणसी बसी हुयी है—यह तात्पर्य ज्ञात होता है। यही स्थिति यमुना और मथुरा के विषय में भी है।

एक बात ध्यान देने की है कि गंगा अथवा यमुना स्वरूपतः लक्षण नहीं हैं अपितु अपने आयाम से। अतः इनके आयाम के समान नगरियों का आयाम—यह प्रतीत होता है ॥ १६ ॥

तिष्ठद्गु आदि समुदाय ही निपातित होते हैं। तिष्ठद्गु आदि शब्द रूपों की अव्ययीभाव संज्ञा होती है। तिष्ठद्गु = एक समय विशेष है। जब गायें दुही जाने के लिये अपने-अपने स्थान पर ठहरतीं हैं—तिष्ठन्तु गावः यस्मिन् काले सः—तिष्ठद्गु कालः। [अव्ययीभाव होने से नपुंसक लिङ्ग और ह्रस्व हो जाने से यह रूप बनता है।] खलेयवम् आदि प्रथमान्त अन्य विभक्ति के साथ नहीं सम्बद्ध होते हैं, और काल रूपी अन्य पदार्थ में विद्यमान हैं [अर्थात् अव्ययीभाव होने पर भी इनमें पूर्व पदार्थ प्रधान न होकर काल प्रधान रहता है। [अतः यहाँ गण में पठित सभी शब्द काल का बोध कराते हैं।] 'च' यह अवधारण के लिये है। [अर्थात् जैसे पठित हैं वैसे ही अव्ययीभाव संज्ञक होते हैं] अन्य प्रकार के समास नहीं होते हैं। अतः 'परमतिष्ठद्गु' आदि नहीं होते हैं।

[इस गण में पठित शब्द]— तिष्ठद्गु वहद्गु [जब गायें = बैल बोझा आदि ढोते हैं]। आयतीगवम् [आयत्यः गावः यस्मिन् काले। जब गायें चर कर वापस आती हैं। यहाँ शतृप्रत्यय, पुम्वद्भाव का अभाव और समासान्त टच् आदि प्रत्यय निपातित होता है।] खलेयवम् [खले यवाः यस्मिन् काले—जब खलिहान में जौ होते हैं। यहाँ सप्तमी का

**तिष्ठद्गु । वहद्गु । आयतीगवम् । खलेयवम् । खलेबुसम् । लूनयवम् । लूयमानयवम् । पूतयवम् । पूयमानयवम् । संहृतयवम् । संह्रियमाणयवम् । संहृतबुसम् । संह्रियमाणबुसम् । एते कालशब्दाः ।**

**समभूमि । समपदाति । सुषमम् । विषमम् । निष्षमम् । दुष्षमम् । अपरसमम् । आयतीसमम् ।**

**न्यासः**

**तिष्ठद्गु वहद्गु इति ।** पूर्वपदस्य शत्रादेशो निपात्यते । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः । तिष्ठन्ति गावो यस्मिन् काले स तिष्ठद्गु कालः । वहन्ति गावो यस्मिन् काले स वहद्गु कालः । **चकारोऽवधारणार्थं इति ।** असति तस्मिन् परमतिष्ठद्ग्विति 'सन्महत्' इत्यादिना परमशब्देन समासः स्यात् । अवधारणार्थे तु तस्मिन् तिष्ठद्गुप्रभृतीनीत्येवम्भूतान्येवावतिष्ठन्ते । **आयतीगवमिति ।** पुंवद्भावाभावः समासान्तश्च भवति । आयत्यो गावो यस्मिन् काले स आयतीगवम् । **खलेयवम् । खलेबुसमिति ।** सप्तम्या अलुग् निपात्यते । **लूयमानयवमिति ।** शानज् निपात्यते । तथा **पूयमानयवमित्यत्रापि । एते कालशब्दा इति ।** तिष्ठद्गुप्रभृतयः संस्क्रियमाणबुसपर्यन्ताः ।

**समभूमि, समपदातीति ।** समत्वं भूमेः, समत्वं पदातेरिति पूर्वपदार्थप्राधान्येऽव्ययीभावः । उत्तरपदार्थप्राधान्यविवक्षयान्तु समपदातिः समभूमिरिति विशेषणसमासस्तत्पुरुषो भवति । अन्ये मकारान्तं समशब्दं पठन्ति—**समम्भूमि समम्पदातीति । सुषमम्, विषमम्, दुःषमम्, अपरसममिति । समशब्देनेति ।** सुषमादयश्चैते पूर्वपदार्थप्राधान्ये समासाः । अत्र शोभनत्वं समस्येत्येवमादि वाक्यं द्रष्टव्यम् । उत्तरपदार्थप्राधान्ये तु

**पदमञ्जरी**

**तिष्ठद्गु, वहद्ग्विति ।** लटः शत्रादेशो निपातनात्, 'गोस्त्रियोः' इति ह्रस्वः । **आयतीगवमित्यत्र** तु पुंवद्भावाभावः शत्रादेशः समासान्तश्च । **खलेयवं खलेबुसमिति** सप्तम्या अलुक् । **लूयमानयवादिषु** शानजादेशः ।

**समभूमि, समपदातीति ॥** समत्वं भूमेरिति पूर्वपदार्थप्राधान्येऽव्ययीभावः । क्वचित् **समंभूमि समंपदातीति** पाठः; तत्र पूर्वपदस्य मुमागमः । अन्ये तु—**संभूमि संपदातीति** पठन्ति, तत्र समस्यान्तलोपः, संशब्दस्य वा समासः । सुषमादौ शोभनत्वं समस्य विगतत्वं दुष्टत्वं निर्गतत्वमपगतत्वं समस्येति विग्रहः । आयतीसमा आयतीसमम्, शत्रादेशः, पूर्ववत् पुंवद्भावश्च । समा = संवत्सरः । एवं **पापसमं पुण्यसममिति ।**

**भावबोधिनी**

अलुक् निपातित होता है ।] खले बुसम् [खले बुसाः यस्मिन् काले । जब खलिहान में भूसा होता है । यहाँ भी सप्तमी का अलुक् है] लूनयवम् [लूनाः = छिन्नाः यवाः यस्मिन् काले] लूयमानयवम् [लूयमानाः यवाः यस्मिन् काले । यहाँ शानच् प्रत्यय निपातित होता है ।] पूतयवम् [पूताः यवाः यस्मिन् काले । जब जौ स्वच्छ किये जाते हैं ।] पूयमानयवम् [पूयमानाः यवाः यस्मिन् काले] संहृतयवम् [जब जौ इकट्ठे किये जा चुके हों,] संह्रियमाणयवम् [जब जौ एकत्रित किये जा रहे हों । संहृतबुसम् [जब भूसा इकट्ठा किया जा चुका है ।] संह्रियमाणबुसम् [जब भूसा इकट्ठा किया जा रहा हो]—ये कालवाची शब्द हैं ।

समभूमि [भूमि की समता] । समपदाति [पदातियों की समता] । [यहाँ किसी ने मकारान्त पाठ भी किया है—समम्भूमि । समम्पदाति । दूसरे लोगों ने सम्भूमि । सम्पदाति—यह पाठ माना है । पूर्व पाठ वाले मुम् आगम का निपातन करते हैं । बाद वाले आकार का लोप निपातित करते हैं ।] सुषमम् । विषमम् । निष्षमम् । दुष्षमम् । [इनमें सम बराबर की शोभनता, विगतता, निर्गतता, दुष्टत्व और अपगतत्व प्रतीत होता है ।] आयतीसमम् [आयती समा = सम्वत्सरः [आने वाला संवत्सर] । प्राह्णम् [प्रगतत्वम् अह्नः = दिन का बीत जाना] । प्ररथम् [रथ का प्रकर्ष] । प्रमृगम् [मृग का प्रकर्ष] । प्रदक्षिणम्, अपरदक्षिणम् । सम्प्रति [इस समय] । असम्प्रति [इस समय नहीं] । पापसमम् [पापयुक्त

प्राह्णम्। प्ररथम्। प्रमृगम्। प्रदक्षिणम्। अपरदक्षिणम्। सम्प्रति। असम्प्रति। पापसमम्। पुण्यसमम्। 'इच् कर्मव्यतीहारे'(५.४.१२७)—दण्डादण्डि। मुसलामुसलि ॥

**३६६. पारे मध्ये षष्ठ्या वा ॥ १८ ॥ (६७२)**

षष्ठीसमासे प्राप्ते तदपवादोऽव्ययीभाव आरभ्यते। वावचनाच्च षष्ठीसमासोऽपि पक्षेऽभ्यनुज्ञायते। पारमध्यशब्दौ षष्ठ्यन्तेन सह विभाषा समस्येते, अव्ययीभावश्च समासो भवति। तत्सन्नियोगेन चानयोरेका-

**न्यासः**

प्रादिसमासो विशेषणसमासश्च यथायोगं कर्त्तव्यः। आयतीसममिति। समाशब्दः संवत्सरवाची, तेन समासः—आयती समा आयतीसमम्। एवं पापा समा पापसमम्। पुण्या समा पुण्यसमम्। अन्ये तु तृतीयासमासं वर्णयन्ति—आयत्या समम् आयतीसममिति एवमन्यत्रापि। प्रगतत्वमह्नः प्राह्णम्। अयमपि पूर्वपदार्थप्रधानः। उत्तरपदार्थप्राधान्ये तु तत्पुरुष एव भवति—प्राह्णे कल्याणनामानावेतौ तिष्यपुनर्वसू इति। एवं **प्ररथम्, प्रदक्षिणम्, प्रमृगम्, अपरदक्षिणम्, संप्रति, असम्प्रति**। 'इच् कर्मव्यतीहारे' इतीचोऽव्ययीभावत्वे प्रयोजनमव्ययसंज्ञा, नपुंसकत्वञ्च। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं वृत्तमिति। 'तत्र तेनेदमिति सरूपे' इति समासः, 'इच् कर्मव्यतीहारे' इतीच् समासान्तः—'अन्येषामपि दृश्यते' इति दीर्घः, दण्डादण्डीति ॥ १७ ॥

**पारे मध्ये षष्ठ्या वा ॥** ननु च प्रकृतैव महाविभाषा, तयैव विकल्पो भविष्यति, तत् किं वाग्रहणे-

**पदमञ्जरी**

प्राह्णादिषु चतुर्षु प्रगतत्वमह्न इत्यादिविग्रहः। सङ्गतं प्रतिगतमस्य सम्प्रति। विपरीतम् **असम्प्रति। इच् कर्मव्यतीहार इति**। अयमेव द्विदण्ड्यादिष्वपि विधीयत इति। तत्राप्यव्ययीभावः। **दण्डादण्डीति**। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तम्, 'तत्र तेनेदमिति सरूपे' इति बहुव्रीहिः। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः। इच अव्ययीभावत्वेनाव्ययत्वात्सुपो लुक् ॥ १७ ॥

**पारे मध्ये षष्ठ्या वा ॥ वावचनादिति**। ननु महाविभाषयैवापवादेऽव्ययीभावे विकल्पिते पक्षे षष्ठीसमासोऽपि भविष्यति, सोऽपि विकल्पित इति वाक्यमपि भविष्यति उच्यते—इह वाक्येनाभिधाने प्राप्ते वृत्तिरारभ्यमाणा वाक्यस्य बाधिका प्राप्नोतीति विकल्पेन वाक्यमेव पक्षेऽभ्यनुज्ञायते। तत्रापवादविकल्पो

**भावबोधिनी**

संवत्सर]। पुण्यसमम् [पुण्ययुक्त संवत्सर]। दण्डादण्डि [दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं वृत्तम्—इस विग्रह में 'तत्र तेनेदं सरूपे' (पा० सू० २।२।२७) से समास होता है और 'इच् कर्मव्यतिहारे (पा० सू० ५।४।१२७) इससे इच् यह समासान्त प्रत्यय होता है। 'अन्येषामपि दृश्यते' (पा० सू० ६।३।१३७) से दीर्घ होकर रूप बनता है]। मुसलामुसलि [मुसलैः मुसलैश्च प्रहृत्य इदं प्रवृत्तम्—इस विग्रह में यह रूप बनता है। प्रक्रिया पूर्ववत् ही है।]

**विमर्श**—यह सूत्र समास का विधान करने वाला नहीं है। अपितु गणपाठ में पठित शब्दों की सिद्धि में निपातन कार्य का बोधक है। इसीलिये काशिकाकार ने लिखा है—'तिष्ठद्गुप्रभृतीनि शब्दरूपाणि अव्ययीभावसंज्ञाकानि भवन्ति।' इसमें पठित शब्दों में उत्तरपदार्थ की प्रधानता मान कर प्रादि समास और विशेषण समास करने पर तत्पुरुष हो जाते हैं ॥ १७ ॥

षष्ठी समास प्राप्त रहने पर उसका अपवाद अव्ययीभाव आरम्भ किया जा रहा है और 'वा' यह वचन होने से पक्ष में षष्ठी समास भी स्वीकार किया जाता है। पार और मध्य शब्द षष्ठ्यन्त के साथ विकल्प से समास प्राप्त करते हैं और वह अव्ययीभाव होता है। इसके अव्ययीभाव के सन्नियोग से इन दोनों का एकारान्तत्व निपातित होता है। उदा०—पारे गङ्गायाः—पारे गङ्गम्। [गङ्गा के दूसरी ओर] मध्यं गङ्गायाः—मध्ये गङ्गम् [गंगा के मध्य में।] षष्ठीसमासपक्ष में—गङ्गापारम्, गङ्गामध्यम्।

रान्तत्वं निपात्यते। पारं गङ्गायाः पारेगङ्गम्। मध्यं गङ्गायाः मध्येगङ्गम्। षष्ठीसमासपक्षे—गङ्गापारम्, गङ्गामध्यम्। महाविभाषया वाक्यविकल्पः क्रियते॥

### ३७०. संख्या वंश्येन ॥ १९ ॥ (६७३)

विद्यया जन्मना वा प्राणिनामेकलक्षणसंतानो वंश इत्यभिधीयते। तत्र भवो वंश्यः। तद्वाचिना सुबन्तेन सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। द्वौ मुनी व्याकरणस्य वंश्यौ द्विमुनि व्याकरणस्य। त्रिमुनि व्याकरणस्य।

**न्यासः**

नेत्याह—वावचनादित्यादि। गतार्थम्। यदि तर्हि वावचनात् पक्षे षष्ठीसमासो भवति, महाविभाषया किं क्रियत इत्याह—महाविभाषयेत्यादि॥ १८॥

**संख्या वंश्येन॥** एकलक्षण इति। एकस्वभावः। सन्तानः = प्रबन्धः। सन्तानिनामेकलक्षणत्वात् सन्तानोऽप्येकलक्षणो भवति। तत्र विद्ययैकलक्षणः—वैयाकरणवंशः, उपाध्यायवंश इति। जन्मना—ब्राह्मणवंशः, क्षत्रियवंश इति। तत्र भवो वंश्य इति दिगादित्वाद् यत्। द्वौ मुनि इति पाणिनिकात्यायनौ। व्याकरणस्येति

**पदमञ्जरी**

वाक्यस्यैव प्रापक इत्युत्सर्गस्य नित्यो बाधकः स्याद्, वावचनात् सोऽपि पक्षेऽभ्यनुज्ञायत इति त्रैरूप्यसिद्धिः। एतदेव वावचनं ज्ञापकम्—यत्रोत्सर्गापवादौ महाविभाषया विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न भवतीति। तेन पूर्वं कायस्येत्यत्रैकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति, दक्षस्यापत्यं दाक्षिरित्यत्र इञा मुक्तेऽण्न भवति। एकारान्तत्वनिपातनं यत्र सप्तम्यर्थो न सम्भवति—पारेगङ्गादानयेति, तदर्थम्। सम्भवे तु 'तत्पुरुषे कृति बहुलम्' इति बहुलवचनादलुका सिद्धम्॥ १८॥

**संख्या वंश्येन॥** एकलक्षण इति। एकस्वभावः सन्तानः=सम्बन्धः, सन्तानिनामेकलक्षणत्वात् सन्तानस्यैकलक्षणत्वम्। द्वौ मुनी इति। पाणिनिकात्यायनौ। त्रिमुनीति। तौ च भाष्यकारश्च। जन्मना त्वेकलक्षणस्योदाहरणम्—एकविंशति भारद्वाजमिति।

**भावबोधिनी**

**विमर्श**—पहले 'विभाषा' (पा० सू० २।१।११) यह अधिकार बताया जा चुका है। इस सूत्र में पुनः 'वा' शब्द का प्रयोग किया गया है। इसके फलस्वरूप दो विकल्पों में तीन रूप होते हैं (१) अव्ययीभाव वाला जिसमें एकारान्तत्व निपातित होता है और पार तथा मध्य का पूर्व निपात होता है। अव्ययीभाव के कारण नपुंसक लिङ्ग और ह्रस्व आदि होता है—पारे गङ्गम्, मध्ये गङ्गम्। (२) षष्ठी समास पक्ष में षष्ठ्यन्त का पूर्वनिपात होता है—गङ्गापारम्, गङ्गामध्यम्। (३) महाविभाषा के कारण विग्रह वाक्य का भी प्रयोग होता है—गङ्गायाः पारम्, गङ्गायाः मध्यम्॥ १८॥

विद्या अथवा जन्म के द्वारा प्राणियों का एकलक्षण = एकस्वभाव वाला सन्तान = सम्बन्ध को 'वंश' ऐसा कहा आता है। [भाव यह है कि विद्या अथवा जन्म के कारण प्राणियों का एक वंश माना जाता है।] उस वंश में होने वाला 'वंश्य' है। वंश्यवाचक सुबन्त के साथ संख्यावाचक का समास होता है और वह समास अव्ययीभाव होता है। उदा०—द्वौ मुनी वंश्यौ व्याकरणस्य—इस विग्रह में—द्वि मुनि व्याकरणस्य—[व्याकरण के दो मुनि = पाणिनि और कात्यायन]। त्रिमुनि व्याकरणस्य [त्रयः मुनयः वंश्याः व्याकरणस्य—इस विग्रह में यह समास है]। व्याकरण के तीन मुनि—पाणिनि, कात्यायन और पातञ्जलि]।

परन्तु जब [व्याकरणनामक] विद्या के साथ तद्वान् = विद्यावान् पाणिनि आदि का अभेद विवक्षित रहता है, तब सामानाधिकरण्य होता है—द्वि मुनि व्याकरणम्, त्रिमुनि व्याकरणम्। [भाव यह है कि जब पाणिनि और

यदा तु विद्यया तद्वतामभेदविवक्षा तदा सामानाधिकरण्यं भवति—द्विमुनि व्याकरणम्, त्रिमुनि व्याकरणमिति।

जन्मना—एकविंशति भारद्वाजम् ॥

## ३७१. नदीभिश्च ॥ २० ॥ (६७४)

'संख्या' इत्यनुवर्तते। नदीवचनैः शब्दैः सह संख्या समस्यते, अव्ययीभावश्च समासो भवति। समाहारे चायमिष्यते। सप्तगङ्गम्। द्वियमुनम्। पञ्चनदम्। सप्तगोदावरम् ॥

### न्यासः

सम्बन्धलक्षणा षष्ठी। त्रिमुनि व्याकरणस्येति। पूर्वौ द्वौ, भाष्यकारस्तृतीयः। विद्ययेति व्याकरणाख्यया। तद्वतामिति पाणिनिप्रभृतीनाम्। अभेदविवक्षेति। यौ तौ द्वौ मुनी तावेव व्याकरणमित्यतिशयेन विद्यया योगं तयोराख्यातुमभेदविवक्षा यदा क्रियते तदा सामानाधिकरण्यं भवति—द्विमुनि व्याकरणमिति ॥ १९ ॥

नदीभिश्च ॥ चकारेण संख्येत्यनुकृष्यते। बहुवचननिर्देशेनार्थस्येदं ग्रहणम्, न स्वरूपस्य, नापि संज्ञायाः; तेन सर्वैर्नदीवाचिभिः समासो विज्ञायत इत्याह—नदीवचनैरित्यादि। समाहारे चायमिष्यत इति। चकारोऽवधारणे—समाहार एव नान्यत्रेति। यद्येवम्, समाहारग्रहणं कर्त्तव्यम्? न कर्त्तव्यम्, यत एव हेतो-

### पदमञ्जरी

यदा तु विद्यया सहेति 'लक्षणेनाभिप्रती' इत्यत्र प्रकारान्तरेणाप्ययमर्थः साधितः ॥ १९ ॥

नदीभिश्च ॥ नदीवचनैः शब्दैरिति। नदीभिरिति बहुवचननिर्देशात्स्वरूपस्य संज्ञा नद्याश्च ग्रहणमिति भावः। समाहारे चायमिष्यत इति। अन्यथा पुरस्तादपवादन्यायेन (व्या० परि० १) 'पूर्वकालैक' इत्यस्यायं बाधकः स्यात्। समाहारे तु परत्वाद् द्विगुरेव स्यात्। ततश्चैकनदीत्यत्राव्ययीभावे सति तन्निबन्धनः 'नदीपौर्णमास्याग्रहायणीभ्यः' इति टच् प्राप्नोति नपुंसकत्वं च, न ह्यत्र विशेषवाचिनामेव ग्रहणमिति प्रमाणमस्ति। यस्तु

### भावबोधिनी

कात्यायन इन दोनों मुनियों को ही व्याकरण कहना इष्ट होता है तब सामानाधिकरण्य=समानार्थकता मानकर ये प्रयोग होते हैं। पाणिनि और कात्यायन दो मुनि व्याकरण हैं। पाणिनि, कात्यायन और पतञ्जलि ये तीनों मुनि ही व्याकरण हैं—यह अर्थ होता है।]

जन्म से वंश का उदा०—एक विंशतिभारद्वाजम [एकविंशतिः भारद्वाजाः—इस विग्रह में कर्मधारय का बाध करके यह अव्ययीभाव है [भारद्वाज वंश के इक्कीस लोग]।

विमर्श—विद्या और विद्यावान् का अभेद मानकर द्विमुनि व्याकरणम्, त्रिमुनि व्याकरणम्—यहाँ अव्ययीभाव किया गया है। यद्यपि यह रूप बहुव्रीहि समास करके भी बनाया जा सकता है। परन्तु प्रथमा के अतिरिक्त अन्य विभक्तियों में बहुव्रीहि में दूसरे रूप होते हैं और अव्ययीभाव में एक ही रूप होता है। अतः इसकी उपयोगिता है। एकविंशतिभारद्वाजम्—यहाँ समास में 'उपकादिभ्योऽन्यतरस्याम्०' (पा० सू० २।४।६९) अञ् का लोपनिषेध होने से वृद्धियुक्त 'भारद्वाज' ही रहता है ॥ १९ ॥

[पूर्व सूत्र से] 'संख्या' इसकी अनुवृत्ति होती है। नदीवाचकों के साथ संख्या का समास होता है और अव्ययीभाव समास होता है और यह समास समाहार में ही इष्ट है। उदा०—सप्तगङ्गम् [सप्तानां गङ्गानां समाहारः—इस विग्रह में अव्ययीभाव समास और विभक्ति लोप, नपुंसकत्व और ह्रस्वत्व करने पर यह रूप बनता है। कौन सी सात गंगाओं का समाहार है—यह ज्ञात करना कठिन है।] द्वियमुनम् [द्वयोः यमुनयोः समाहारः। प्रक्रिया पूर्ववत्] पञ्चनदम् [पञ्चानां नदीनां समाहारः]। सप्तगोदावरम् [सप्तानां गोदावरीणां समाहारः]।

## ३७२. अन्यपदार्थे च संज्ञायाम् ॥ २१ ॥ (६७५)

**'संख्या' इति निवृत्तम्, नदीग्रहणमनुवर्तते। नदीभिः सह सुबन्तमन्यपदार्थे वर्त्तमानं संज्ञायां विषये समस्यते, अव्ययीभावश्च समासो भवति। विभाषाधिकारेऽपि नित्यसमास एवायम्। न हि वाक्येन संज्ञा गम्यते। उन्मत्तगङ्गं नाम देशः। लोहितगङ्गम्। कृष्णगङ्गम्। शनैर्गङ्गम्।**

**अन्यपदार्थं इति किम्? कृष्णवेण्णा। संज्ञायामिति किम्? शीघ्रगङ्गो देशः॥**

**न्यासः**

रक्षादीनां परिणा सह कितवव्यवहार एव समासो भवति, तत एव हेतोरयमपि समाहार एव भविष्यति—सप्त गङ्गा समाहृताः सप्तगङ्गमिति। पूर्ववद् ह्रस्वः। अन्यपदार्थे तु न भवति—द्वीरावतीको देश इति। **पञ्चनदम्। सप्तगोदावरमिति।**

कृष्णोदकपाण्डुपूर्वाया भूमेरच्प्रत्ययः स्मृतः।
गोदावर्याश्च नद्याश्च संख्याया उत्तरे यदि॥

इति वचनादच्समासान्तः॥ २०॥

**अन्यपदार्थे च संज्ञायाम्॥ कृष्णवेण्णेति।** कृष्णा चासौ वेण्णा चेति विशेषणसमासः। **शीघ्रगङ्ग इति** बहुव्रीहिः॥ २१॥

**पदमञ्जरी**

'गोदावर्याश्च नद्याश्च' इत्यच् समासान्तः, स पञ्चनदमित्यादावव्ययीभाव एव भवति, एकनदीत्यत्र तत्पुरुषे न भवति। समाहारविवक्षायां च एकापूपोवदेकनदमित्यपि भवति। तथान्यपदार्थेऽप्यव्ययीभावाः स्याद्—द्वीरावतीको देश इति। न चात्र परत्वाद्बहुव्रीहिः; अशेषत्वात्, न ह्यसति समाहारग्रहणेऽयं शेषो भवति। तस्मात्सुष्ठूक्तम्—**समाहारे चायमिष्यत इति।** एतच्चाभिधानस्वाभाव्याल्लभ्यते॥ २०-२१॥

**भावबोधिनी**

**विमर्श**—'नद्या च' ऐसा उल्लेख न करके 'नदीभिश्च' इस बहुवचन निर्देश से 'नदी' शब्द का लेकर और 'नदी संज्ञा' न लेकर नदी अर्थ लिया जाता है। अतः नदीवाची सभी शब्दों के साथ समास होता है। न्यास में उद्धृत वचन के अनुसार पञ्च संख्या से उत्तरवर्त्ती नदी शब्द से और सप्तसंख्या से उत्तरवर्त्ती गोदावरी शब्द से अच् = अ प्रत्यय होकर भसंज्ञा और ई लोप करने पर रूप सिद्ध होते हैं। यह समास समाहार अर्थ में ही होता है। अतः जिस देश में सात गङ्गाओं = गंगा की धाराओं का समाहार होता है उसे 'सप्तगङ्गम्' कहा जाता है। अन्य पदार्थ को प्रधानता में तो बहुव्रीहि ही होता है—द्वीरावतीको देशः॥ २०॥

'संख्या' इसकी अनुवृत्ति नहीं होती है, 'नदी' इसकी अनुवृत्ति होती है। अन्य पदार्थ में विद्यमान सुबन्त शब्द का नदीवाचकों के साथ संज्ञा विषय में समास होता है और वह अव्ययीभाव समास होता है। विभाषा—यह अधिकार रहने पर भी यह नित्य समास ही [माना जाता] है, क्योंकि वाक्य द्वारा संज्ञा = नाम की प्रतीति नहीं होती है। उदा०—उन्मत्तगङ्गं नाम देशः [उन्मत्ता गङ्गा यस्मिन् देशे—इस विग्रह में समास होने से नपुंसकत्व और ह्रस्वत्व आदि करने पर उक्त रूप सिद्ध होता है। वह देश विशेष जहाँ गङ्गा उन्मत्त होकर प्रवाहित होती है] लोहितगङ्गम् [लोहिता गङ्गा यस्मिन् देशे। जिस देशविशेष में गङ्गा लोहितवर्ण की होकर प्रवाहित होती है।] कृष्णगङ्गम् [कृष्णा = कृष्णवर्णा गङ्गा यस्मिन् देशे] शनैर्गङ्गम् [शनैः = मन्दा गङ्गा यस्मिन् देशे ]।

अन्य पदार्थ में—इसका क्या लाभ? कृष्णवेण्णा [कृष्णा चासौ वेण्णा च—यह कर्मधारय है। अन्य पदार्थ की प्रधानता नहीं है]। संज्ञा = नाम अर्थ की प्रतीति में—इसका क्या फल है? शीघ्रगङ्गः देशः [शीघ्रा गङ्गा यस्मिन् देशे सः—इस विग्रह में किसी की संज्ञा की प्रतीति नहीं हो रही है। अतः अव्ययीभाव न होकर बहुव्रीहि होता है। इसमें भी ह्रस्व और देश के अनुसार पुंल्लिग होने पर रूप सिद्ध होता है॥ २१॥

## २७३. तत्पुरुषः ॥ २२ ॥ (६८४)

'तत्पुरुषः' इति संज्ञाऽधिक्रियते प्राग्बहुव्रीहेः (२.२.२३)। यानित ऊर्ध्वमनुक्रमिष्यामस्तत्पुरुषसंज्ञास्ते वेदितव्याः। वक्ष्यति—'द्वितीयाश्रितातीतपतित' (२.१.२४) इति, कष्टश्रितः। पूर्वाचार्यसंज्ञा चेयं महती, तदङ्गीकरणमुपाधेरपि तदीयस्य परिग्रहार्थम्—'उत्तरपदार्थप्रधानस्तत्पुरुषः' (म० भा०) इति।

तत्पुरुषप्रदेशाः—'तत्पुरुषे कृति बहुलम्' (३.३.१४) इत्येवमादयः॥

## २७४. द्विगुश्च ॥ २३ ॥ (६८५)

द्विगुश्च समासस्तत्पुरुषसंज्ञो भवति। द्विगोस्तत्पुरुषत्वे समासान्ताः प्रयोजनम् (म० भा०)। पञ्च-

### न्यासः

तत्पुरुषः ॥ कष्टश्रित इति। तत्पुरुषसंज्ञायां सत्याम् 'तत्पुरुषे तुल्यार्थ' इत्यादिना पूर्वपदप्रकृतिस्वरत्वम्। अथ किमर्थमियं महती संज्ञा विधीयत इत्याह—**पूर्वाचार्यसंज्ञा चेयमिति**। तदङ्गीकरणं किमर्थमित्याह—**तदङ्गीकरणमित्यादि**। उपाधिः = विशेषणम्। कः पुनरसौ तदीय उपाधिरित्याह—**उत्तरपदार्थप्रधानस्तत्पुरुष इति** ॥ २२ ॥

**द्विगुश्च** ॥ **समासान्ताः प्रयोजनमिति**। 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' इत्यतस्तत्पुरुष इत्यनुवर्त्तमाने 'राजाहःसखिभ्यष्टच्', 'गोरतद्धितलुकि' इति च द्विगोरपि यथा स्यात्। **पञ्चराजीति**। पञ्चानां राज्ञां

### पदमञ्जरी

तत्पुरुषः ॥ **उत्तरपदार्थप्रधान इति**। पूर्वकायाः, अर्द्धपिप्पलीत्यादौ त्वधिकारवशात्तत्पुरुष इति संज्ञा ॥ २२ ॥

**द्विगुश्च** ॥ **समासान्ता इति**। यद्यपि 'राजाहःसखिभ्यष्टच्' 'तत्पुरुषस्यांगुलेः संख्याव्ययादेः' इति टजचौ तत्पुरुषनिबन्धनौ, तथापि प्रकृतिभेदाद्भेदविवक्षायां बहुवचनम्। **पञ्चराजमिति**। उत्तरपदस्यानकारान्त-

### भावबोधिनी

बहुव्रीहि से पहले तक 'तत्पुरुष' इस संज्ञा का अधिकार है। इसके आगे से जिन्हें कहा जायगा उन्हें तत्पुरुष-संज्ञक समझना चाहिये। [पाणिनि] आगे कहेंगे 'द्वितीया श्रितातीतपतित०' (पा० सू० २।१।२४)। उदा०—[कष्टं श्रितः इस विग्रह में] कष्टश्रितः। पूर्ववर्त्ती आचार्यों की यह महती संज्ञा हैं, इसको स्वीकार करना इसकी उपाधि = विशेषण का भी ग्रहण करने के लिये है—'तत्पुरुष उत्तरपदार्थ प्रधान होता है।'

तत्पुरुष के प्रदेश हैं—'तत्पुरुषे कृति बहुलम्' (पा० सू० ३।३।१४) आदि तत्पुरुषपद घटित सूत्र हैं।

**विमर्श**—पाणिनिकल्पित संज्ञायें छोटी-छोटी ही हैं। पूर्वाचार्यों ने बड़ी-बड़ी संज्ञाओं की कल्पना की है। वहाँ उनका अर्थ और उनकी विशेषता का ग्रहण किया जाता है। तत्पुरुष समास में पूर्वपद का अर्थ प्रधान = विशेष्य माना जाता है। वैयाकरणभूषण आदि में इस विशेषता को प्रायिक माना गया है ॥ २२ ॥

और द्विगु समास भी तत्पुरुषसंज्ञक होता है। द्विगु के तत्पुरुष होने में समासान्त प्रत्यय करना प्रयोजन है। उदा०—पञ्चराजम्, दशराजम् [पञ्चानां राज्ञां समाहारः, दशानां राज्ञां समाहारः—इन विग्रहों में ये शब्द सिद्ध होते हैं।] द्व्यहः त्र्यहः [द्वयोः अह्नोः समाहारः, त्रयाणाम् अह्नां समाहारः] पञ्चगवम्, दशगवम् [पञ्चानां गवां समाहारः, दशानां गवां समाहारः]।

**विमर्श**—पञ्चानां राज्ञां समाहारः—इस विग्रह में 'तद्धितार्थोत्तरपद समाहारे च' (पा० सू० २।१।५१) इससे समास होता है। 'संख्यापूर्वो द्विगुः' (पा० सू० २।१।५२) इससे द्विगु संज्ञा होती है और प्रस्तुत सूत्र से तत्पुरुष संज्ञा होती है। 'राजाहः सखिभ्यष्टच्' (पा० सू० ५।४।९१) इससे टच् = अ प्रत्यय, 'नस्तद्धिते' (पा० सू० ६।४।१४४) इससे टि = अन् का लोप होने पर—पञ्चराज। 'स नपुंसकम्' (पा० सू० २।४।१७) इससे नपुंसकत्व, एकवचन करने पर पञ्चराजम् = पाँच राजाओं का समूह। इसी प्रकार दशराजम् = दश राजाओं का समूह—यह अर्थ है।

**राजी, दशराजी। द्व्यहः, त्र्यहः। पञ्चगवम्, दशगवम्॥**

**३७५. द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः॥ २४॥ (६८६)**

**'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतद् द्वितीया। द्वितीयान्तं सुबन्तं श्रितादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। कष्टं श्रितः कष्टश्रितः। नरकश्रितः। अतीत—कान्तारमतीतः कान्तारातीतः।**

**न्यासः**

समाहार इति 'तद्धितार्थोत्तरपदसमाहारे च' इति समासः। 'संख्यापूर्वो द्विगुः' इति द्विगुसंज्ञा, टच्, 'नस्तद्धिते' इति टिलोपः, 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गता, 'द्विगोः' इति ङीप्। द्व्यहः, त्र्यह इति। 'अह्नष्टखोरेव' इति टिलोपः, 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम्। **पञ्चगवमिति।** 'स नपुंसकम्' इति नपुंसकत्वम्। सत्यप्यकारान्तत्वे स्त्रीत्वं न भवति; 'पात्रादीनां प्रतिषेधो वक्तव्यः' इति वचनात्॥ २३॥

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः॥ श्रितादिष्वित्यादि।** श्रितादिषु समासकारणत्वेनोपात्तेषु सत्सु गमिगाम्यादीनां समासस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। एतैरपि समासः प्रतिपाद-

**पदमञ्जरी**

त्वात्स्त्रीत्वाभावः। समासार्थोत्तरपदस्यान्ताः समासान्ता इति तु पक्षे पात्रादित्वात्। क्वचित् **पञ्चराजीति** स्त्रीलिङ्गस्य पाठः, स भाष्यविरोधादपपाठः। **द्व्यह इति।** 'अह्नष्टखोरेव' इति टिलोपः, 'रात्राह्नाहाः पुंसि' **पञ्चगवमिति।** 'गोरतद्धितलुकि' इति टच्, पूर्ववत्स्त्रीत्वाभावः॥ २३॥

**द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः॥** श्रितादिषु गत्यर्थत्वात्कर्त्तरि क्तः। पतिरपि सकर्मकः, नेज्जिह्मायन्तो नरकं पतामेति यथा। अत्यासः=व्यतिक्रमः, गतिविशेष एव। प्राप्तिरप्यत्र गतिरेव, न फलम्। एवमापत्तिरपि। इह श्रितपतितगतैरयं समासो न विधेयः, कथम्? यः कष्टं श्रितः कष्टं तेन श्रितं

**भावबोधिनी**

कुछ संस्करणों में 'पञ्चराजी' और दशराजी' यह पाठ है। इसका आधार न्यास व्याख्या है—'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गता, 'द्विगोः' (पा० सू० ४।१।२१) इति ङीप्।'

परन्तु यह प्रामादिक है क्योंकि 'टच्' प्रत्यय समास का ही अन्तावयव है, केवल उत्तरपद का नहीं। अतः उत्तरपद 'राजन्' अकारान्त नहीं है। अतः स्त्रीलिङ्गत्व सम्भव नहीं है। यदि यह कहा जाय कि 'समासार्थोत्तरपदान्ताः समासान्ताः' अतः अकारान्त उत्तरपद हो जाता है। तब तो 'पात्राद्यन्तस्य न' इससे स्त्रीत्व का निषेध मानना चाहिये। अतः नपुंसक लिङ्ग वाला ही प्रयोग प्रामाणिक है। भाष्य में भी यही मिलता है। न्यासकार के अतिरिक्त उपलब्ध व्याख्याओं में नपुंसकलिङ्ग वाला ही रूप दृष्टिगोचर होता है। यदि 'पञ्चराजी' रूप पर आग्रह करते हैं तो 'पञ्च' यही मानना होगा, पञ्चगवम् नहीं। क्योंकि राजन् और गो ये दोनों टच् करने पर ही अकारान्त होते हैं।

द्व्यहः, त्र्यहः इसमें 'राजाहः सखिभ्यष्टच्' (पा० सू० ५।४।९१) इससे टच् प्रत्यय और 'अह्नष्टखोरेव' (पा० सू० ६।४।१४५) इससे टि लोप और 'रात्राह्नाहाः' (पा० सू० २।४।२९) इससे पुल्लिंग होता है।

'पञ्चगवम्' आदि में 'गोरतद्धितलुकि' (पा० सू० ५।४।९२) इससे टच् होता है और प्रक्रिया पञ्चराजम् के समान है॥ २३॥

('सुबामन्त्रिते' पा० सू० २।१।२ इससे) 'सुप्' और ('सह सुपा' पा० सू० २।१।४ इससे) 'सुपा' इनकी अनुवृत्ति होती है। इस सुप् का विशेषण 'द्वितीया' यह है (और तदन्तविधि होने से सुबन्त और द्वितीयान्त ये अर्थ होते हैं।) द्वितीयान्त सुबन्त का श्रित आदि सुबन्तों के साथ समास होता है, और वह समास तत्पुरुष होता है। उदा०—(१) कष्टं श्रितः (इस विग्रह में द्वितीयान्त 'कष्टम्' का श्रित के साथ समास होने पर विभक्तिलोप आदि के बाद) कष्टश्रितः (यह रूप बनता है। 'श्रित' यहाँ कर्ता अर्थ में 'क्त' है अतः 'श्रयणकर्ता' यह अर्थ है। श्रयण का कर्म कष्टं है।)

**पतित—नरकं पतितः नरकपतितः। गत—ग्रामं गतः ग्रामगतः। अत्यस्त—तरङ्गानत्यस्तः तरङ्गात्यस्तः। तुहिनात्यस्तः। प्राप्त—सुखं प्राप्तः सुखप्राप्तः। आपन्न—सुखमापन्नः सुखापन्नः। दुःखापन्नः।**

**न्यासः**

यितव्यः। तत्रेदं प्रतिपादनम्—द्वितीया' इति योगविभागः क्रियते, तेन गमिगामिप्रभृतिभिरपि समासो भवति। न चैवं श्रितादिग्रहणमनर्थकम्; पूर्वविषयस्यासर्वविषयत्वज्ञापनार्थत्वात्। आदिशब्दः प्रकारवाची। गमिगामिशब्दयोरेकतरोपादानेनैव सिद्धे द्वयोरुपादानमुणादीनामन्येषाञ्च यथा स्यात्; अन्यथा यदि गमिग्रहणमेव क्रियेत तदाऽऽदिशब्दस्य प्रकारवाचित्वाद् गमिप्रकाराणामुणादीनामेव ग्रहणं स्यात्। अथ गामिग्रहणमेव क्रियेत, तदा गामिप्रकाराणामनुणादीनां स्यात्। तस्माद् द्वयोरपि ग्रहणं कर्त्तव्यम्। **ग्रामं गमीति। 'गमेरिनिः'**

**पदमञ्जरी**

भवति तत्र बहुव्रीहिणा सिद्धम्; नार्थभेदः, न रूपभेदः न स्वरभेदः। तत्पुरुषेऽपि 'अहीने द्वितीया' इति श्रितपतितगतेभ्यः पूर्वपदप्रकृतिस्वर एव भवति। अतीतादिभिस्तु स्वरसिद्धये विधेयः, तथा हि—तैस्तत्पुरुषे थाथादिस्वरेण भाव्यम्, नाहीनस्वरेण; 'अतीतात्यस्तयोरहीने' इति निषेधात्, प्राप्तापन्नयोस्त्वहीने द्वितीयानुपसर्गं इति वचनात्। बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यम्, तस्माच्छ्रितादिभिरयं समासो न विधेयः। तत्रायमप्यर्थः, 'अहीने द्वितीया' इत्येतदपि न वक्तव्यं भवति। जातिस्वरप्रसङ्गस्तु, यदा जातिकालसुखादिभ्यः परे श्रितादयो भवन्ति तदा पूर्वपदप्रकृतिस्वरं बाधित्वा 'जातिकालसुखादिभ्योऽनाच्छादनात्' इत्यन्तोदात्तत्वप्रसङ्गः। ननु च तत्पुरुषारम्भेऽपि बहुव्रीह्यर्थविवक्षायां न दण्डवारितो बहुव्रीहिरिति जातिस्वरः स्यादेव? एवमप्यस्ति भेदः, तत्पुरुषे 'अहीने द्वितीया' इति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ 'जातिकाल' इत्यन्तोदात्तत्वमिति द्वौ स्वरौ भवतः, अनारम्भे तु जातिस्वर एव स्यादिति। एवं तर्हि यदेतद्वा जात इति तद्वा जातश्रितपतितगतेष्विति वक्तव्यम्? एवमपि 'अहीने द्वितीया' इत्येतदपि न वक्तव्यमित्यस्त्येव लाघवम्। एतावांस्तु विशेषः—तत्पुरुषारम्भे तत्र पूर्वपदप्रकृतिस्वरत्वम्, बहुव्रीहौ तु जातिस्वर इति द्वयोः समासयोर्द्वैस्वर्यम्; अनारम्भे तु बहुव्रीहावेव द्वैस्वर्यमिति?

अत्रोच्यते—जातिकालसुखादिव्यतिरिक्तैः सह बहुव्रीहौ श्रितादीनां निष्ठेति पूर्वनिपातप्रसङ्गाद्रूपभेदः, तथा सर्वत्र कबपि प्राप्नोति। नन्वसौ 'शेषाद्विभाषा' इति विकल्पितः, स च तत्पुरुषारम्भेऽपि भवत्येव, बहुव्रीहेरप्यभ्युपगमात्? एवमपि बहुव्रीहावपि द्वैस्वर्याभ्युपगमात् पूर्वपदप्रकृतिस्वरपक्षेऽपि बहुव्रीहित्वानपायात्पक्षे

**भावबोधिनी**

**विमर्शः**—'प्रथमानिर्दिष्टं समास उपसर्जनम्' (पा० सू० १।२।४३) के अनुसार समासविधायकशास्त्र में प्रथमाविभक्त्यन्तरूप से निर्दिष्ट से बोध्य की उपसर्जन संज्ञा होती है। और 'उपसर्जनं पूर्वम्' (पा० सू० २।२।३०) इससे पूर्वनिपात होता है। यहाँ 'द्वितीया श्रितातीत०' सूत्र में द्वितीया प्रथमानिर्दिष्ट है और इससे बोध्य हैं—कष्टम् आदि। इन्हीं का पूर्व निपात=पहले प्रयोग होता है। तत्पुरुष समास विधायक सूत्रों में यही देखकर पूर्व प्रयोग का निर्माण करना चाहिये। (अनु०) नरकश्रितः (नरकं श्रितः—इस विग्रह में समास करने पर रूप सिद्ध होता है।) (२) अतीत—कान्तारम् अतीतः—कान्तारातीतः (अति उपसर्गपूर्वक गत्यर्थक इण् धातु से कर्ता में क्त प्रत्यय करने पर रूप बना है। कान्तार = घने जंगल को पार कर जाने वाला) (३) पतित—नरकं पतितः (इस विग्रह में)-नरक पतितः (यहाँ भी पत् धातु से कर्ता अर्थ में 'क्त' प्रत्यय है) (४) गत—ग्रामं गतः (इस विग्रह में) ग्रामगतः (गम् धातु से कर्ता अर्थ में क्त प्रत्यय है।) (५) अत्यस्त = व्यतिक्रान्त = फेंका गया, तरङ्गात् अत्यस्तः (इस विग्रह में) तरङ्गात्यस्तः। (अति उपसर्ग युक्त अस् धातु से कर्ता अर्थ में 'क्त' होता है। तरङ्गों में फेंका गया)। तुहिनात्यस्तः (तुहिनम् अत्यस्तः इस विग्रह में यह बनता है। बरफ में फेंका गया)। (६) प्राप्त—सुखं प्राप्तः (इस विग्रह में) सुखप्राप्तः (प्राप्ति का भी गति मानकर यहाँ

* श्रितादिषु गमिगाम्यादीनामुपसंख्यानम् * (म० भा०. २.१.२४ वा० १)। ग्रामं गमी ग्रामगमी। ग्रामं गामी ग्रामगामी। ओदनं बुभुक्षुः ओदनबुभुक्षुः॥

**३७६. स्वयं क्तेन ॥ २५ ॥ (६८७)**

'स्वयम्' एतदव्ययमात्मनेत्यस्यार्थे वर्त्तते, तस्य द्वितीयया सह सम्बन्धो नोपपद्यत इति द्वितीया-

**न्यासः**

इतीनिप्रत्ययः। स च भविष्यत्काले; 'भविष्यति गम्यादयः' इति वचनात्। ग्रामं गामीति। 'आवश्यकाधमर्ण्ययोः' इत्यावश्यकेणिनिः। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधः। ओदनं बुभुक्षुरिति। भुजेः सन्नन्तात् 'सनाशंसभिक्ष उः' इत्युप्रत्ययः। 'न लोक' इत्यादिना षष्ठीपतिषेधः। कष्टं श्रित इत्यादावप्यनेनैव षष्ठीप्रतिषेधः॥ २४॥

स्वयं क्तेन॥ तस्य द्वितीयया सह सम्बन्धो नोपपद्यत इति। द्वितीयार्थासम्भवात्। इतिशब्दो हेतौ। यतस्तस्य द्वितीयया सह सम्बन्धोऽनुपपन्नस्तस्माद् द्वितीयाग्रहणमुत्तरार्थमनुवर्त्तते, न त्वेतदर्थम्। स्वयंधौतौ पादाविति। 'धावु गतिशुद्ध्योः', अस्योदित्वाद् विभाषितेट्। 'यस्य विभाषा' इतीट्प्रतिषेधः। 'च्छ्वोः शूडनु-

**पदमञ्जरी**

कपः प्रसङ्गः; तत्पुरुषारम्भे तु तत्रैव 'अहीने द्वितीया' इति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ तु जातिस्वर एव नित्यमित्यन्तोदात्तादेव कब्न पूर्वपदप्रकृतिस्वरादित्यस्त्येव विशेषः। तथाऽर्थभेदोऽपि 'गत्यर्थाकर्मक' इति कर्तरि क्तो धात्वर्थस्य सर्वात्मनाऽनिष्ठितत्वेऽपि भवति—आरूढो वृक्षं देवदत्त इति वृक्षस्य एवोच्यते। कर्मणि तु भवन्सर्वात्मना निष्ठितत्वे भवति—आरूढो वृक्षो देवदत्तेनेति, तथेहापि कष्टं श्रित इति कष्टमनुभवन्नेवमुच्यते, कष्टं श्रितमनेनेत्यनुभूतकष्टः श्रितशब्दविवक्षितस्यार्थस्य साक्षादवगतिर्भवति तत्पुरुषे। बहुव्रीहौ त्वर्थात्, तद्यथा—राज्ञः सखेत्युक्ते नूनं राजाप्यस्य सखेति स एष सूक्ष्मदृशामेव विषयः।

गमिगाम्यादीनामिति। उणादीनामन्येषां च संग्रहार्थमुभयोरुपादानम्। ग्रामं गमीति। 'गमेरिनिः' (दश० उ० ६.५७) इत्यौणादिक इनिप्रत्ययः 'भविष्यति गम्यादयः' इति भविष्यति काले। ग्रामं गामीति। आवश्यके णिनिः। 'गत्यर्थकर्मणि' इत्यत्र द्वितीयाग्रहणमपवादविषयेऽपि विधानार्थमिति कृत्प्रयोगे द्वितीयैव भवति। ओदनं बुभुक्षुरिति। भुजेः सन्, 'सनाशंसभिक्ष उः'। 'न लोकाव्यय' इति षष्ठीनिषेधः॥ २४॥

स्वयं क्तेन॥ स्वयं धौताविति। 'धावु गतिशुद्ध्योः' (धा० पा० ६०१), 'उदितो वा' इति क्त्वायां विकल्पितेट्त्वात् 'यस्य विभाषा' इतीट्प्रतिषेधः, 'च्छ्वोः शूडनुनासिके च' इत्यूठ् 'एत्येधत्यूठ्सु' इति वृद्धिः।

**भावबोधिनी**

भी कर्ता अर्थ में क्त है) (७) आपन्न—सुखम् आपन्नः—(इस विग्रह में) सुखापन्नः। (दुःखम् आपन्नः—) दुःखापन्नः (आङ् उपसर्गयुक्त पद् धातु से कर्ता अर्थ में 'क्त' प्रत्यय है। सर्वत्र 'गत्यर्थाकर्मक०' (पा० सू० ३.४.७२) इस सूत्र से गत्यर्थक मानकर 'कर्ता' अर्थ में 'क्त' प्रत्यय होता है।

'श्रित आदि में गमी और गामी आदि का उपसंख्यान करना चाहिए।' उदा०—ग्रामं गमी (इस विग्रह में—) ग्रामगमी। ग्रामं गामी (इस विग्रह में—) ग्रामगामी। '(गमी' इसमें 'गमेरिनिः' (उ० सू० ६.५७) से इनि प्रत्यय होता है। 'गामी' इसमें 'आवश्यकाधमर्ण्ययोः' (पा० सू० ३।२।१७०) से 'णिनि' प्रत्यय उपधावृद्धि होती है।) ओदनं बुभुक्षुः (इस विग्रह में) ओदनबुभुक्षुः। (भात खाने की इच्छा वाला)॥ २४॥

'स्वयम्' यह अव्यय 'आत्मना' [अपने आप] इस अर्थ में है। इसका द्वितीयान्त के साथ समास नहीं उपपन्न होता है, इसलिये 'द्वितीया' का ग्रहण उत्तरसूत्र [में अनुवृत्ति] के लिये [यहाँ भी] अनुवृत्त होता है। 'स्वयम्' यह सुबन्त क्तान्त के साथ समस्त होता है, और वह तत्पुरुष समास होता है। उदा०—स्वयंधौतौ पादौ [यह विग्रह करके समास

ग्रहणमुत्तरार्थमनुवर्त्तते। 'स्वयम्' इत्येतत्सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। स्वयंधौतौ पादौ। स्वयं वि'लीनमाज्यम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति॥

## ३७७. खट्वा क्षेपे॥ २६॥ (६८८)

**खट्वाशब्दो द्वितीयान्तः क्तान्तेन सह क्षेपे गम्यमाने समस्यते, तत्पुरुषश्च समासो भवति। क्षेपः= निन्दा, स च समासार्थ एव, तेन विभाषाधिकारेऽपि नित्यसमास एवायम्। न हि वाक्येन क्षेपो गम्यते। खट्वारोहणं चेह विमार्गप्रस्थानस्योपलक्षणम्। सर्व एवाविनीतः खट्वारूढ इत्युच्यते। खट्वारूढो जाल्मः। खट्वाप्लुतः। अपथप्रस्थित इत्यर्थः।**

### न्यासः

नासिके च' इत्यूठ्। 'एत्येधत्यूठ्सु' इति वृद्धिः। **स्वयंविलीनमाज्यमिति**। 'लीङ् श्लेषणे', 'स्वादय ओदितः' इत्योदित्वाद् 'ओदितश्च' इति नत्वम्। 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति गतिपूर्वस्यापि समासो भवति। कः पुनरत्र समासे सति विशेषः, यावता विनापि तेनैतद्रूपं सिध्यतीत्याह—**ऐकपद्यमित्यादि**॥ २५॥

**खट्वा क्षेपे॥ स चेत्यादि**। एवकारेण वाक्यार्थतां क्षेपस्य निरस्यति। स्यादेतत्—वाक्यार्थोऽपि क्षेपः, तेन वाक्यमपि भविष्यतीत्याह—**न हीत्यादि**। वाक्येन हि क्रियाकारकसम्बन्धमात्रं गम्यते, न तु क्षेपः।

### पदमञ्जरी

**स्वयंविलीनमिति**। 'लीङ् श्लेषणे' (धा० पा० ११३९), 'स्वादय ओदितः', 'ओदितश्च' इति निष्ठानत्वम्, 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद्' (व्या० परि० १२६) विलीनशब्दः क्तान्तः। **ऐकपद्यमैकस्वर्यं समासत्वादिति**। समसनं समासः, संज्ञा वा, ततो हेतोरित्यर्थः॥ २५॥

**खट्वा क्षेपे॥ खट्वारोहणं चेत्यादि**। विनिन्दितो मार्गः=विमार्गः। भूमिशयनार्हो ब्रह्मचारी, वेदाध्ययनकाले तेनाधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वा रोढव्या। यस्त्वन्यथा खट्वारोहणं तद्विमार्ग-

### भावबोधिनी

होता है और पादौ का विशेषण होने से द्विवचन होता है। स्वयं विलीनम् आज्यम्। [अपने आप धोये गये पैर, अपने आप विलीन घी] समास होने के कारण एक पद और ऐकस्वर्य होता है।

**विमर्श**—'स्वयम्' यह अव्यय 'आत्मना' इस अर्थ में है। अतः कर्तृशक्ति प्रधान होने के कारण 'द्वितीया' के साथ सम्बन्ध उपपन्न नहीं होता है। अतः इस सूत्र में 'द्वितीया' की उपयोगिता नहीं है। परन्तु अग्रिम सूत्र में अनुवृत्ति आवश्यक है। अतः इसको छोड़कर आगे अनुवृत्ति उचित न होने से इसमें भी सम्बन्ध मान लिया जाता है।

यद्यपि 'स्वयम्' यह अव्यय है अतः समास करने और न करने से रूप में कोई अन्तर तो नहीं होता है। अतः समास का क्या लाभ? इसके उत्तर में यह कहना है कि समास होने से दोनों को मिलाकर एक पद बन जाता है। और उसे एक स्वर ही किया जाता है। समुदाय प्रकृति हो जाने से 'स्वयं कृतस्य अपत्यम्' इस अर्थ में इञ् प्रत्यय और आदि वृद्धि होकर 'स्वयंकृति' यह होता है। यदि समास नहीं होता तो 'कृत' को प्रकृति मान कर इञ् करने पर उसी की आदि वृद्धि होने पर 'कार्तिः' यह रूप होने लगता। अतः समास आवश्यक है॥ २५॥

'क्षेप' प्रतीयमान रहने पर द्वितीयान्त खट्वा शब्द का क्त प्रत्ययान्त के साथ समास होता है, और वह तत्पुरुष होता है। क्षेप=निन्दा, और यह समास का ही अर्थ है। इसलिए 'विभाषा' इस अधिकार के रहने पर भी यह 'नित्य समास ही समझना चाहिए; क्योंकि (विग्रह) वाक्य से निन्दा की प्रतीति नहीं होती है। यहाँ खट्वा का आरोहण विनिन्दित मार्ग के प्रस्थान का उपलक्षण है। सभी अविनीत 'खट्वारूढ' ऐसे कहे जाते हैं। उदा०—खट्वारूढो जाल्मः। (खट्वाम् आरूढः—इस विग्रह में द्वितीयान्त के साथ समास और विभक्ति लोप होने पर रूढ बनता है।) खट्वाम् आप्लुतः (इस विग्रह में) खट्वाप्लुतः बनता है। अपथ पर चलने वाला—यह अर्थ है।

क्षेप इति किम् ? खट्वामारूढः ॥

**३७८. सामि ॥ २७ ॥ (६८९)**

**'सामि' इत्येतदव्ययमर्द्धशब्दपर्यायः, तस्यासत्त्ववाचित्वाद् द्वितीयया नास्ति सम्बन्धः। तत् सुबन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति। सामिकृ'तम्। सामिपी'तम्। सामिभु'क्तम्। ऐकपद्यमैकस्वर्यं च समासत्वाद्भवति ॥**

**न्यासः**

**खट्वारोहणञ्चेत्यादि**। विरुद्धो मार्गः = विमार्गः, तेन प्रस्थानम् = गमनम्। अधीत्य स्नात्वा गुरुणाभ्यनुज्ञातेन खट्वा रोढव्या। यत् त्वन्यथा खट्वारोहणं तद् विमार्गप्रस्थानम्, न तु खट्वारोहणमेव। इह च 'खट्वारूढः' इत्यादौ खट्वारोहणं विमार्गप्रस्थानस्योपलक्षणं वेदितव्यम्। किं पुनः कारणमेवं विज्ञायत इत्याह—**सर्व एवेत्यादि**। आरूढ इत्याङ्पूर्वस्य रुहेः क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपदीर्घेषु कृतेषु रूपम्। जाल्म इत्ययुक्तकारीत्यर्थः ॥

**सामि ॥ असत्त्ववाचित्वादिति**। द्रव्याधारा हि कर्मशक्तिः। अतो द्रव्यवाचिन एव द्वितीयया सम्बन्धो भवति, नासत्त्ववाचिनः ॥ २६–२७ ॥

**पदमञ्जरी**

प्रस्थानम्। तच्चोदाहरणमन्यस्याप्येवंविधस्योपलक्षणम्, तेन खट्वामारोहतु मा वाऽरुक्षद्विमार्गप्रस्थितः खट्वारूढ इत्युच्यत इत्यर्थः ॥ २६ ॥

**सामि ॥ तस्यासत्त्ववाचित्वादिति**। द्रव्याधारा हि कर्मशक्तिः; अतो द्रव्यवाचिन एव द्वितीया भवति, नाद्रव्यवाचिन इत्यर्थः ॥ २७ ॥

**भावबोधिनी**

क्षेप—यह किसलिये है ? खट्वाम् आरूढः (चारपाई पर चढ़ा हुआ। यह सामान्य कथन है। निन्दा नहीं। अतः समास नहीं होता है)।

**विमर्श**—प्रस्तुत सूत्र भाष्य में क्षेप = निन्दा का उपपादन करते हुए यह लिखा है 'अधीत्य स्नात्वा (च) गुरुभिरनुज्ञातेन खट्वारोढव्या। य इदानीमतोऽन्यथा करोति स उच्यते—खट्वारूढोऽयं जाल्मः'। (म० भा० २।१।२५) इसका भाव यह है कि ब्रह्मचारी का अपना अध्ययन सम्पन्न करने के बाद दीक्षान्त संस्कार का अङ्गभूत स्नान करके गृहस्थ आश्रम में प्रवेश करना चाहिए और तभी खट्वा पर शयन करना चाहिये। यह स्मृति आदि में कहा गया है। इसके विपरीत जो आचरण करके भूमिशयन को छोड़कर खट्वारोहण करता है, उसके लिए यह प्रयोग होता है। यह एक मुहावरा जैसा है। इससे सभी 'अविनीत' लक्षित होते हैं। यहाँ समास से ही निन्दा प्रतीत होती है विग्रह वाक्य से नहीं। अतएव इसे नित्य समास माना गया है ॥ २६ ॥

'सामि' यह अव्यय अर्द्ध का पर्याय है। यह असत्त्ववाची है। अतः द्वितीया के साथ सम्बन्ध नहीं होता है। सामि इस सुबन्त का क्तप्रत्ययान्त के साथ समास होता है और यह तत्पुरुष समास होता है। उदा०—सामिकृतम् आधा किया हुआ। सामिपीतम् (आधा पिया हुआ) सामिभुक्तम् (आधा खाया हुआ) समास होने के कारण एक पद बन जाता है और एक स्वर हो जाता है।

**विमर्श**—'सामि' यह अव्यय है। इसका समास होने अथवा न होने से रूप में कोई अन्तर नहीं आता है। परन्तु समास होने पर दोनों मिलकर एक पद हो जाता है। और एक ही स्वर होता है अलग-अलग नहीं। साथ ही तद्धित प्रत्यय भी समुदाय से ही होते हैं जिससे सामिकृतस्य अपत्यम्—इस अर्थ में 'सामिकृतिः' यह रूप होता है। अलग-अलग व्यास में 'सामि कार्तिः' यह अनिष्ट रूप होने लगता। अतः समास आवश्यक है ॥ २७ ॥

## ३७९. कालाः ॥ २८ ॥ (६९०)

**'द्वितीया' 'क्तेन' इति वर्तते। कालवाचिनः शब्दा द्वितीयान्ताः क्तान्तेन सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। अनत्यन्तसंयोगार्थं वचनम्। 'कालाः' इति न स्वरूपविधिः। षण्मुहूर्त्ताश्चराचराः,**

### न्यासः

**कालाः॥ चराचरा इति।** अनत्यन्तसंयोगप्रतिपादनार्थम्। चरन्ति भ्रमन्तीति चराचराः, अनवस्थिता इत्यर्थः। 'चरिचलिपतिवदीनामच्याक्चाभ्यासस्य' इति चरेः पचाद्यचि द्विर्वचनमभ्यासस्याक्चगमश्च। **कदाचिदहर्गच्छन्तीत्युत्तरायणे। कदाचिद्रात्रिमिति** दक्षिणायने। एतेन तदेवानवस्थितत्वं व्यक्तीकुर्वन्नह्नो रात्रेश्च तैर्मुहूर्त्तैरनत्यन्तसंयोगमाचष्टे। **अहरतिसृता इति।** 'रोऽसुपि' इत्यह्नो नकारस्य रेफः। **अहःसंक्रान्ता इति।** 'क्रमु पादविक्षेपे', पूर्ववदिट्प्रतिषेधः। अनुनासिकस्य क्विझलोः' इति दीर्घः। **मासप्रमित इति।** 'माङ् माने' 'आदिकर्मणि कर्त्तरि च' इति कर्त्तरि निष्ठा। 'द्यतिस्यति' इत्यादिनेत्त्वम्। **मासं प्रमातुरब्ध इति।** मासस्यैकदेशस्य प्रतिपदश्चन्द्रमसा योगं दर्शयन् मासस्य तेनानत्यसंयोगमाचष्टे। कालस्य हि कृत्स्नस्य स्वेन

### पदमञ्जरी

**कालाः॥** इह 'काला अत्यन्तसंयोगे' इत्येको योगः कर्त्तव्यः, तत्र 'क्तेन' इत्यस्य निवृत्तत्वात्सर्वत्र समासः सिद्धयति, किमर्थं योगविभागे क्तान्तेन समासो विधीयत इत्यत आह—**अनत्यन्तसंयोगार्थं वचनमिति।** अनत्यन्तसंयोगमेव दर्शयति—**षण्मुहूर्त्ता इति। चराचरा इति।** चरेः पचाद्यचि 'चरिचलिपतिवदीनामुपसंख्यानमाक् चाभ्यासस्य' (वा०) इति द्विर्वचनमागागमश्चाभ्यासस्येति। चरन्तोऽनवस्थिता इत्यर्थः। **कदाचिदहरिति।** उत्तरायणे। **कदाचिद्रात्रिमिति।** दक्षिणायने। ततस्तैश्च षड्भिर्मुहूर्त्तैरह्नो रात्रेश्च नास्त्यत्यन्तसंयोगः।

### भावबोधिनी

'द्वितीया' 'क्तेन' इन दो की अनुवृत्ति होती है। (क्त प्रत्यय है अतः तदन्तविधि करने से क्तान्त यह अर्थ होता है।) कालवाचक द्वितीयान्त शब्द का क्त प्रत्ययान्त सुबन्त के साथ विकल्प से समास होता और वह तत्पुरुष समास होता है। अनत्यन्त संयोग के लिए यह सूत्र है अर्थात् जहाँ अनवरत = लगातार काल का सम्बन्ध नहीं है वहाँ भी समास हो, इसके लिए यह सूत्र है। (क्योंकि अत्यन्त संयोग में समास के लिए अलग सूत्र है।) 'कालाः' यह स्वरूप विधि नहीं है अर्थात् काल इस शब्द के साथ समास नहीं होता है। छः मुहूर्त चराचर = चलते रहते हैं, ये कभी (उत्तरायण में) दिन में चलते हैं और कभी (दक्षिणायन में) रात में चलते हैं। उदा०—अहरतिसृताः = अहः संक्रान्तः अर्थात् दिन = उत्तरायण का उल्लंघन किया। रात्र्यतिसृताः = रात्रिसंक्रान्ताः, रात्रि = दक्षिणायन का उल्लंघन किया। दोनों में 'मुहूर्ताः' कर्ता है। मासप्रथितः चन्द्रः, महीने को नापना आरम्भ कर दिया, अर्थात् प्रतिपदा का चन्द्र।

**विमर्श**—प्रस्तुत सूत्र में 'काल' अर्थवाचक लिया जाता है। जब काल का सम्बन्ध लगातार = अत्यन्त नहीं होता है तब समास के लिए यह सूत्र है। चरन्ति—इस अर्थ में 'चरिचलिपतिवदीनामुपसंख्यानभाक् चाभ्यासस्य' इससे अच् परे रहते धातु का द्वित्व और आक् आगम करने पर 'चराचर' शब्द बना है। इसका अर्थ 'चलनेवाला' यह है, चर और अचर नहीं। 'मुहूर्त' एक कामविशेष माना जाता है। छः मुहूर्तों में कोई दिन में और कोई रात में चलते हैं। दिन = उत्तरायण और रात्रि = दक्षिणायन है। अतः अतिसृताः इस विग्रह में समास और विभक्ति का लोप होकर बहुवचन का यह रूप है। 'रात्रिम् अतिसृताः' इस विग्रह में समास और विभक्तिलोप तथा यण् करके बहुवचन में यह रूप बना है। मुहूर्तों के दिन = उत्तरायण का उल्लंघन किया। इसी प्रकार रात्रि = दक्षिणायन का उल्लंघन किया। ये मुहूर्त चलते रहते हैं। अतः छः का एक साथ लगातार सम्बन्ध न होने से अनत्यन्त संयोग है।

ते कदाचिदहर्गच्छन्ति, कदाचिद्रात्रिम् (म० भा०)। अहरतिसृता मुहूर्त्ताः अहस्संक्रान्ताः। रात्र्यतिसृता मुहूर्त्ताः रात्रिसंक्रान्ताः। मासप्रमितश्चन्द्रमाः। मासं प्रमातुमारब्धः प्रतिपच्चन्द्रमा इत्यर्थः॥

**३८०. अत्यन्तसंयोगे च ॥ २९ ॥ (६८१)**

'कालाः' इति वर्तते, 'क्तेन' इति निवृत्तम्। अत्यन्तसंयोगः=कृत्स्नसंयोगः, कालस्य स्वेन सम्बन्धिना व्याप्तिः। कालवाचिनः शब्दा द्वितीयान्ता अत्यन्तसंयोगे गम्यमाने सुपा सह समस्यन्ते विभाषा, तत्पुरुषश्च समासो भवति। मुहूर्त्तं सुखम्। मुहूर्त्तसुखम्। सर्वरात्रकल्याणी। सर्वरात्रशोभना॥

**३८१. तृतीया तत्कृतार्थेन गुणवचनेन ॥ ३० ॥ (६८२)**

'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतत्तृतीया। तृतीयान्तं सुबन्तं गुणवचनेनार्थशब्देन च सह समस्यते, तत्पुरुषश्च समासो भवति।

**न्यासः**

सम्बन्धिना व्याप्तिः = अत्यन्तसंयोगः। न च प्रतिपच्चद्रमसा मासस्येह व्याप्तिः = संयोगोऽस्तीति नेहात्यन्तसंयोगः॥ २८॥

**अत्यन्तसंयोगे च ॥ कृत्स्नसंयोग इति।** कृत्स्नस्य सकलस्य संयोगः कृत्स्नसंयोगः, कृत्स्नस्य कालस्य मुहूर्त्तादेः स्वेन सम्बन्धिना = सुखादिना संयोगः = सम्बन्धोऽत्यन्तसंयोगः। एतदेव स्पष्टीकर्तुमाह—**कालस्येत्यादि। मुहूर्त्तं सुखमिति।** 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। अत्र मुहूर्त्तस्य कालस्य स्वेन सम्बन्धिना सुखेन व्याप्तिः॥ २९॥

**तृतीया तत्कृतार्थेन गुणवचनेन ॥ तत्कृतेति** एतदर्थशब्देनासमस्तमेव, अविभक्तिकश्च। तृतीयाविभक्तेः 'सुपां सुलुक्' इति लुप्तत्वात्। एतच्च गुणवचनेनेत्यस्य समानाधिकरणं विशेषणम्।

**पदमञ्जरी**

**मासप्रमित इति।** माङ आदिकर्मणि कर्तरि क्तः, मासं परिच्छेत्तुमारब्धवानित्यर्थः। **प्रतिपच्चन्द्रमा इति।** न च तेन मासस्यात्यन्तसंयोग इति भावः॥ २८-२९॥

**तृतीया तत्कृतार्थेन गुणवचनेन ॥** तृतीयायाश्छान्दसे लुकि 'गुणवचनेन' इत्यनेन सामानाधिकरण्यम्। अर्थेनेति पृथक् पदम्, अत एव **गुणवचनेनार्थशब्देन चेति।**

**भावबोधिनी**

इसी प्रकार मासप्रमितः (मासं प्रमितः, यहाँ प्र उपसर्गपूर्वक माङ् धातु से 'आदि कर्म' में क्त प्रत्यय होता है। महीने का परिच्छेद = बनना प्रारम्भ करने वाला चन्द्रमा यह अर्थ होता है॥ २८॥

'कालाः' इसकी अनुवृत्ति आती है और 'क्तेन' इसकी निवृत्ति है। अत्यन्त संयोग = सम्पूर्ण संयोग, काल की अपने सम्बन्धी के साथ व्याप्ति। (सम्पूर्ण काल = मुहूर्त आदि का अपने सम्बन्धी = सुख आदि के साथ लगातार सम्बन्ध)। अत्यन्त = निरन्तर संयोग प्रतीत होते रहने पर कालवाची द्वितीयान्त शब्दों का सुबन्त के साथ विकल्प से समास होता है। उदा०—मुहूर्तं सुखम् (इस विग्रह में समास करने पर) मुहूर्तसुखम् (समास न होने पर) मुहूर्तं सुखम्। (यहाँ काल = मुहूर्त का सुख के साथ लगातार सम्बन्ध है।) सर्वरात्रं कल्याणी—इस विग्रह में समास और विभक्ति-लोप करने पर-) सर्वरात्रकल्याणी [कल्याण करने वाली सारी रात]। सर्वरात्रं शोभना—इस विग्रह में समास करने पर) सर्वरात्रशोभना (अच्छी लगनेवाली सारी रात। यहाँ सर्वा चासौ रात्रिश्च—में 'अहः सर्वैकदेशसंख्यात पुण्याच्च रात्रेः' (पा० सू० ५।४।८७) से अच् प्रत्यय करने पर रात्रि के इ का लोप होने पर 'रात्र' बना है। यहाँ लगातार सम्बन्ध होने के कारण समास होता है।)॥ २९॥

'सुप्' और 'सुपा' इन दोनों की अनुवृत्ति होती है। इस सुप् का विशेषण यह तृतीया है। तृतीयान्त सुबन्त का गुणवाचक के साथ और अर्थ शब्द के साथ समास होता है और तत्पुरुष समास होता है।

**कीदृशेन गुणवचनेन ? तत्कृतेन=तदर्थकृतेन; तृतीयान्तार्थकृतेनेति यावत्। शङ्कुलया खण्डः शङ्कुलाखण्डः। किरिणा काणः किरिकाणः[1]। अर्थशब्देन—धान्येनार्थः, धान्यार्थः।**

**न्यासः**

अत एव **कीदृशेनेति** पृष्ट सन्नाह—**तत्कृतेनेति**। तदिति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्श इति तृतीयान्तकृतेनेति दर्शयति। तृतीयान्तेन गुणवचनस्य करणत्वं न सम्भवतीत्यतः सामर्थ्यात् तदर्थकृतेनेति विज्ञायत इत्यत आह—**तृतीयान्तार्थकृतेनेति यावदिति**। अर्थद्वारेण चेदं गुणवचनस्य विशेषणं वेदितव्यम्—तृतीयान्तार्थकृतो गुणवचनार्थ इति। सोऽपि तथोच्यते। एतदुक्तं भवति—तृतीयान्तार्थकृतेन गुणवचनार्थेनेति। अर्थ एव हि तृतीयान्तार्थेन क्रियते, न च गुणवचनशब्दः। गुणमुक्तवान् = गुणवचनः। 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्। अथ वा—करणे, गुण उक्तोऽनेनेति गुणवचनः। यश्च पूर्वं गुणे वर्त्तित्वा पश्चात् तद्वति द्रव्ये वर्त्तते स गुणवचनः। गुणेनेत्युच्यमाने घृतेन पाटवमित्यादौ प्रसङ्गः, अतस्तन्निवृत्यर्थं वचनग्रहणम्। तस्मिंश्च सति गुणे वर्त्तित्वा तद्वति द्रव्ये यो वर्त्तते तेनैव समासो भवति, न तु गुण एव यो वर्त्तते तेन सह। न च पाटवादयः शब्दा पूर्वं गुणे वर्त्तित्वा पश्चात् तद्वति द्रव्ये वर्त्तन्ते, अपि तु गुण एव। वचनग्रहणात् तैः सह समासो न भवति। **शङ्कुलाखण्डः, गिरिकाण इति**। खण्डकाणशब्दावत्रखण्डने निमीलने च क्रियारूपापन्ने गुणे वर्त्तित्वा पश्चान्मतुब्लोपादभेदोपचाराद् वा तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः। **धान्यार्थ इति**। भवत्ययमर्थशब्दस्तत्कृतः, न तु गुणवचन इति पृथगस्योपादानं क्रियते। अर्थशब्दश्चायं प्रयोजनवाची, यथा—किमर्थमागतोऽसीत्यभिहिते केन प्रयोजनेनेत्यवगम्यते। अभिधेयवचन इत्यन्ये। सर्वत्र करणे तृतीया।

**पदमञ्जरी**

**कीदृशेन गुणवचनेन ? तत्कृतेनेति**। तदिति सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्शः, स च शब्दः। न च शब्देन गुणवचनस्य करणं सम्भवतीत्यतः सामर्थ्यात्तदर्थकृतेनेति विज्ञायत इत्याह—**तृतीयान्तार्थकृतेनेति। यावदिति**। यावच्छब्दो निपातस्तात्पर्यपर्यायितां दर्शयति। अर्थद्वारकं चेदं गुणवचनस्य विशेषणम्, अर्थ एव हि तृतीयार्थेन क्रियते, न गुणवचनः शब्दः। वचनग्रहणं किम्, यावतार्थेन समासासम्भवाद् गुणवचनेनैव भविष्यति? एवं यथा विज्ञायेत—गुणमुक्तवान् गुणवचनः, 'कृत्यल्युटो बहुलम्' इति भूते कर्त्तरि ल्युट्; गुणमुक्तवता संप्रति गुणोपसर्जनद्रव्यवचनेनेत्यर्थः। तेन घृतेन पाटवमिति गुणमात्रनिष्ठे न भवति। गुणश्चात्र 'सत्त्वे निर्विशतेऽपैति' इति लक्षिता गृह्यते, न तु यस्य गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इति तच्छब्दप्रवृत्तिनिमित्तम्; तृतीयान्तार्थकृते सर्वत्रैव तस्य भावात्। **शंकुलाखण्डः, किरिकाण इति**। 'खडि भेदने' (धा० पा० २८३), 'कण निमीलने' (धा० पा० ४४९)—इत्याभ्यां घञि व्युत्पादितावेतौ क्रियारूपापन्ने गुणे वर्तित्वान्मतुब्लोपादभेदापचाराद्वा तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः। **धान्येनार्थ इति**। अर्थ्यत इत्यर्थः=प्रयोजनम्, अर्थनं वार्थः=प्रार्थना, अभिलाषः। सर्वत्र करणे तृतीयायाः समासः।

**भावबोधिनी**

किस प्रकार के गुणवाचक के साथ ? उसके अर्थ के द्वारा किये गये के साथ, अर्थात् तृतीया विभक्ति वाले पद के अर्थ के द्वारा किए गए गुणवाचक के साथ। उदा०—शङ्कुलया खण्डः—(इस विग्रह में समास होने पर) शङ्कुलाखण्डः = सरौते द्वारा किया गया टुकड़ा। किरिणा काणः (इस विग्रह में समास होने पर) किरिकाणः (सुअर द्वारा किया गया काना) अर्थ-शब्द के साथ—धान्येन अर्थः (इस विग्रह में समास करने पर)—धान्यार्थः (धान्य = अनाज से प्रयोजन)। उसके द्वारा किया गया—इसका क्या प्रयोजन है ? अक्ष्णा काणः। (आँख से काना। यहाँ काणत्व = कानापन आँख द्वारा नहीं किया गया है अपितु अन्य किसी के द्वारा। अतः समास नहीं होता है।)

---

१. 'गिरिकाणः' इति न्यायसम्मतः पाठः।

तत्कृतेनेति किम् ? अक्ष्णा काणः । गुणवचनेति किम् ? गोभिर्वपावान् (म० भा०)॥

## ३८२. पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥ ३१ ॥ (६९३)

पूर्व, सदृश, सम, ऊनार्थ, कलह, निपुण, मिश्र, श्लक्ष्ण—एतैः सह तृतीयान्तं समस्यते, तत्पुरुषश्च

### न्यासः

**अक्ष्णा काण इति ।** अङ्गविकारलक्षणे 'येनाङ्गविकारः' इति तृतीया । नात्र तृतीयान्तेनाक्ष्णा देवदत्तस्य काणत्वं कृतम् । किं तर्हि ? अन्येन केनापि । अक्ष्णा तु केवलं काणत्वयुक्तो देवदत्तो लक्ष्यते । **गोभिर्वपावानिति ।** वपा अस्य सन्तीति वपावान् । भवति वपावान् देवदत्तस्तृतीयान्तार्थकृतः, तथा हि स गोभिर्वपावान् कृतः । न तु वपावानित्ययं शब्दो गुणमुक्तवानिति न गुणवचनः, ततस्तेन सह समासो न भवति ॥३०॥

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ॥** युक्तः समसदृशशब्दाभ्यां समासः, यावता ताभ्यां योगे

### पदमञ्जरी

**अक्ष्णा काण इति ।** नात्राक्ष्णा कृतं काणत्वम्, किं तर्हि ? अन्येनैव केनापि किर्यादिना, अक्ष्णा तु केवलं काणो लक्ष्यत इति तत्कृतत्वाभावः । किं च दध्ना पटुरित्यत्र मा भूदित्येवमर्थमपि तत्कृतग्रहणं कर्तव्यम् । ननु यदि दधिकृतं पाटवं विवक्षितम्—दध्ना कृतः पटुरिति, ततो भवितव्यमेव समासेन; अथ भोजनाद्यपेक्षो दध्नः करणभावः—दध्ना भुङ्क्ते पटुरिति, ततोऽसामर्थ्यादेव न भविष्यति ? इहापि तर्हि न स्यात्—कुंकुमेन लोहितं कोपेन लोहितं मुखमिति, अत्रापि हि करोतिक्रियया करणस्य सम्बन्धः—कुंकुमेन कृतं लोहितमिति । क्व तर्हि स्यात् ? शंकुलया खण्ड इत्यादावेव तु स्यात्, यत्र पूर्वोत्तरपदयोः क्रियाकारकलक्षणः सम्बन्धः । तस्माद्यत्रोत्तरपदे क्रिया न गम्यते तत्रापि तत्कृतत्वे सति यथा स्याद्भोजनादिद्वारके सामर्थ्ये मा भूदिति तत्कृतग्रहणम् । **गुणवचनेनेति किमिति ।** जातिवचनेषु जातेर्नित्यत्वात्तत्कृतस्यासम्भवः । क्रियावचने त्विष्यत एव । 'कर्तृकरणे कृता बहुलम्' इति द्रव्यवाचिष्वपि तत्कृतस्यासम्भव एव । न ह्याकाशस्य तत्त्वं केनचित् क्रियते, अतो गुणवचनेनैव भविष्यतीति प्रश्नः । **गोभिर्वपावानिति ।** गोसम्बन्धिदध्याद्युपयोगादेव तस्य वपावत्त्वं पीवरत्वमित्यस्ति तत्कृतत्वम्, न त्वसौ गुणवचनः ॥ ३० ॥

**पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः ।** पूर्वसूत्रेऽर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमर्थ-

### भावबोधिनी

गुणवाचक के साथ—इसका क्या प्रयोजन है ? गोभिः वपावान् । (यहाँ गाय से चर्बी वाला देवदत्त है । परन्तु 'वपावान्' यह गुणवाचक नहीं है । अतः समास नहीं होता है ।)

**विमर्श**—सूत्र में तृतीया = तृतीयान्त । 'तत्कृतार्थेन' इसमें 'तत्कृत' यह लुप्त तृतीया वाला एक अलग पद है इसका अभिप्राय है—तत्कृतेन, तत् इस सर्वनाम शब्द के द्वारा तृतीयान्त का परामर्श होता है । इस प्रकार तृतीयान्त-पद के अर्थ के द्वारा किये गये पदार्थवाची के साथ तृतीयान्त का समास होता है । यह गुणवाचक होना चाहिये । शङ्कुला द्वारा खण्डत्व = गुण किया गया है, अतः इसके साथ समास होता है । इसी प्रकार किरि = सुअर द्वारा काणत्व = गुण किया गया है । ऐसे स्थलों में 'मतुप्' प्रत्यय होता है, उसका लुक् = लोप 'गुणवचनेभ्यो मतुपो लुक्' (का० वा० ५।२।९४) से होता है । परन्तु गोभिः वपावान् यहाँ वपा = चर्बी गाय के दूध, घी आदि से की गयी है परन्तु यह गुणवाली नहीं है । अतः यहाँ समास नहीं होता है । 'गुणेन' न कहकर 'गुणवचनेन' यह कहने से 'गुणमुक्तवान्' ऐसी व्याख्या करके गुण है उपसर्जन जिसका ऐसे द्रव्य के वाचक के साथ ही समास होता है केवल के साथ नहीं । अतः 'घृतेन पाटवम्' आदि में समास नहीं होता है ॥ ३० ॥

पूर्व, सदृश, सम, अनार्थ, कलह, निपुण, मिश्र, श्लक्ष्ण—इन शब्दों के साथ तृतीयान्त का समास होता है, वह तत्पुरुष समास होता है । इस सूत्ररूपी वचन के कारण ही पूर्व आदि के योग में तृतीया विभक्ति होती है; [सभी

समासो भवति। अस्मादेव वचनात् पूर्वादिभिर्योगे तृतीया भवति, हेतौ वा द्रष्टव्या। पूर्व—मासेन पूर्वः मासपूर्वः, संवत्सरपूर्वः। सदृश—मातृसदृशः, पितृसदृशः। सम—मातृसमः, पितृसमः। ऊनार्थ—माषोनम्, कार्षापणोनम्। माषविकलम्, कार्षापणविकलम्। कलह—असिकलहः, वाक्कलहः। निपुण—वाग्निपुणः, आचारनिपुणः। मिश्र—गुडमिश्रः, तिलमिश्रः। श्लक्ष्ण—आचारश्लक्ष्णः॥

*पूर्वादिष्ववरस्योपसंख्यानम्* (म० भा० २.१.३० वा० १)। मासेनावरः मासावरः। संवत्सरावरः॥

**न्यासः**

'तुल्यार्थैरतुलोपमाभ्याम्' इति तृतीयाविधानम्; इतरैस्तु पूर्वादिभिः कथं तृतीयासमास उपपद्यते, न हि तद्योगे केनचित् तृतीया विहिता इत्याह—**अस्मादेवेत्यादि**। सुबोधम्।

**पूर्वादिष्ववरस्योपसंख्यानमिति**। पूर्वादिषु समासकारणत्वेनोपात्तेषु सत्स्ववरशब्दस्योपसंख्यानं प्रतिपादनं कर्त्तव्यमित्यर्थः। अवरशब्देनापि तृतीयासमासः प्रतिपाद्यत इत्यर्थः। तत्रेदं प्रतिपादनम्—उत्तरसूत्रे बहुलग्रहणं क्रियते, तेनावरशब्देनापि समासो भवति॥ ३१॥

**पदमञ्जरी**

निर्देशार्थम्। तच्चानन्तरेणोनशब्देनैव सम्बध्यते, न पूर्वादिभिः; समसदृशशब्दयोः पृथगुपादानात्। **एतदेवेत्यादि**। समसदृशशब्दाभ्यामन्यत्रेदं तद्योगे तुल्यार्थैरिति तृतीयास्ति। इह तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते, ततस्तस्याः समासे मातुः सदृशो मातृसदृश इति सिद्धम्, किमर्थमिह सदृशग्रहणम? 'तत्पुरुषे तुल्यार्थतृतीया' इति पूर्वपदप्रकृतिस्वरो यथा स्यात्, सिद्धोऽत्र प्रकृतिस्वरः—'सदृशप्रतिरूपयोः सादृश्ये' इति। तच्च तत्र सदृशग्रहणमवश्यं कर्त्तव्यम्, यदा षष्ठीसमासस्तदान्तोदात्तत्वं मा भूदिति। ननु चेदानीमनभिधानात् षष्ठीसमासो न भविष्यति ? नैवं शक्यम्, अलुक्समासे हि दोषः स्यात् 'षष्ठ्या आक्रोशे'—दास्याः सदृशः, वृषल्याः सदृश इति, तस्मात्तत्कर्तव्यम्, इदं तु न कर्त्तव्यम् ? इदमपि कर्त्तव्यम्, हेतुतृतीयार्थं विद्यया हेतुना सदृशो विद्यासदृश इति, न ह्यत्र 'तुल्यार्थैः' इति षष्ठी भवति, प्रतियोगिन्येव हि सा विधीयते। एवमपि न कर्त्तव्यम्—तत्कृतत्वात् पूर्वेणैव सिद्धम्, यो हि विद्यया सदृशः, विद्याकृतं हि तत्सादृश्यम्, तत्र पूर्वेणैव सिद्धम्। 'मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्' गुडसंमिश्रा धाना इत्येवमर्थम्? ज्ञापकात्सिद्धम्, यदयं 'मिश्रं चानुपसर्गमसन्धौ' इत्यनुपसर्गग्रहणं करोति, तज्ज्ञापयति—मिश्रग्रहणे सोपसर्गस्यापि ग्रहणमिति।

**पूर्वादिष्विति**। अवरशब्दोऽपि सूत्रे पठितव्यः इत्यर्थः॥ ३१॥

**भावबोधिनी**

तृतीयान्त के साथ इनका समास उपपन्न होता है], अथवा हेतु अर्थ में तृतीया समझनी चाहिये। [वास्तव में 'सदृश' और 'सम' के योग में 'तुल्यार्थैरतुलोपमाभ्याम्' (पा० सू० २.३.७२) से ही तृतीया सम्भव है। अन्य के योग में तृतीया की उपपत्ति करनी है।] (१) पूर्व—मासेन पूर्वः—मासपूर्वः [एक महीना पूर्व उत्पन्न यह अर्थ है] संवत्सरपूर्वः [संवत्सरेण पूर्वः—यह विग्रह है।] (२) सदृश—मातृसदृशः, पितृसदृशः [मात्रा सदृशः, पित्रा सदृशः यह विग्रह है]। (३) सम—मातृसमः, पितृसमः [माता के समान, पिता के समान] (४) ऊन अर्थ वाले का—माषोनम, कार्षापणोनम [मासा से कम, कार्षापण से कम] माषविकलम् कार्षापणविकलम [माषेण विकलम्, कार्षापणेन विकलम यह विग्रह है। विकल भी ऊन = कम अर्थ वाला है।] (५) कलह—असिकलहः [असिना कलहः—यह विग्रह है। तलवार से लड़ाई] वाक्कलहः [वाचा कलहः—यह विग्रह है। वाणी = बातों से झगड़ा] (६ निपुण—वाग्निपुणः [वाचा निपुणः वाणी से चतुर। 'यरोऽनुनासिकेऽनुनासिको वा' (पा० सू० ८।४।४५) से वैकल्पिक अनुनासिकत्व के कारण यहाँ अनुनासिक नहीं है। अन्यथा वाङ्निपुणः यह भी होता है।] आचारनिपुणः [आचारेण निपुणः यह विग्रह है।] (७) मिश्र—गुडमिश्रः, तिलमिश्रः [गुणेन मिश्रः, तिलैः मिश्रः। गुड़ मिलाया हुआ। तिल मिलाया हुआ] (८) श्लक्ष्ण—आचारश्लक्ष्णः। [आचरेण श्लक्ष्णः] [आचार के कारण कुशल]।

## ३८३. कर्तृकरणे कृता बहुलम् ॥ ३२ ॥ (६९४)

'तृतीया' इति वर्तते। कर्तरि करणे च या तृतीया तदन्तं कृदन्तेन सह समस्यते बहुलम्, तत्पुरुषश्च समासो भवति। सर्वोपाधिव्यभिचारार्थं बहुलग्रहणम्। कर्तरि—अहिना हतः अहिहतः। करणे—नखैर्निर्भिन्नो नखनिर्भिन्नः। परशुना छिन्नः परशुच्छिन्नः।

कर्तृकरणे इति किम्? भिक्षाभिरुषितः। बहुलग्रहणं किम्? दात्रेण धान्यं लूनवान्, परशुना छिन्नवान्—इह समासो न भवति; पादहारकः, गलेचोपकः (म० भा०) इति च भवति॥

### न्यासः

कर्तृकरणे कृता बहुलम्॥ भिक्षाभिरुषित इति। हेतौ तृतीया विहिता। वसेर्वच्यादिसूत्रेण संप्रसारणम्, 'शासिवसिघसीनाञ्च' इति षत्वम्, 'वसतिक्षुधोः' इतीट्। दात्रेण धान्यं लूनवानिति। 'ल्वादिभ्यश्च' इति निष्ठानत्वम्। पादहारक इति। पादाभ्यां ह्रियत इति पादहारकः। पादाभ्यामिति पञ्चमी चतुर्थी वा। हारक इति 'कृत्यल्युटो बहुलम्' इति कर्मणि ण्वुल्। गलेचोपक इति। गले चुप्यत इति। 'चुप मन्दायां गतौ' इत्यस्मात् पूर्ववदेव ण्वुल्। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्॥ ३२॥

### पदमञ्जरी

कर्तृकरणे कृता बहुलम्॥ 'कर्तृकरणे' इति प्रथमाद्विवचनम्। वृत्तौ वस्तुव्याख्यानं कृतम्—कर्तरि करणे च या तृतीयेति। तथा चोत्तरत्र वक्ष्यति—'कर्तृकरणं कृत्यैः सहाधिकार्थवचने समस्येते' इति। सर्वोपाधिव्यभिचारार्थमिति। अव्याप्त्यतिव्याप्तिपरिहारार्थमित्यर्थः।

पादहारक इति। ह्रियत इति हारक इति 'कृत्यल्युटो बहुलम्' इति कर्मणि ण्वुल्, पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः। गले चोपक इति। 'चुप मन्दायां गतौ' (धा० पा० ४०३), हेतुमण्णिजन्तात्कर्मणि ण्वुल्, 'अमूर्द्धमस्तकात्' इत्यलुक्। कृद्ग्रहणमनर्थकम्; अन्यस्याभावात्। इह कर्तृकरणं क्रियाया एव भवतः, क्रिया च धातुवाच्या, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च। अत्र सुपेत्यधिकारातिङन्ते न प्रसङ्गः। तद्धितनिवृत्त्यर्थं तु—इह काष्ठैः पचतितराम्, काष्ठैः पचतिरूपम्, काष्ठैः पचतिदेश्यम्, हस्तेन कृतपूर्वी, दध्ना भुक्तपूर्वी, घृतेनेष्टीति॥ ३२॥

### भावबोधिनी

पूर्व आदि में 'अवर' शब्द का भी उपसंख्यान करना चाहिये। मासेन अवरः—मासावरः। [एक महीना पूर्व] संवत्सरेण अवरः—संवत्सरावरः [एक वर्ष पूर्व] यहाँ 'अवर' का अर्थ 'कम' नहीं लेना चाहिये, क्योंकि यह तो 'ऊन' अर्थ मान कर ही सम्भव है। अतः 'अवर' का अर्थ 'पूर्व' ही लेना उचित है। क्योंकि 'चैत्रादवरः फाल्गुनः आदि में 'पूर्व' अर्थ देखा गया है॥ ३१॥

'तृतीया' इसकी अनुवृत्ति होती है। कर्ता और करण अर्थ में जो तृतीया, तदन्त = तृतीया शब्द का कृदन्त शब्द के साथ बहुलरूप से समास होता है, और वह तत्पुरुष समास होता है। सभी उपाधियों के व्यभिचार के लिये 'बहुल' का ग्रहण है। (१ कर्ता में [तृतीया के समास का उदाहरण]—अहिना हतः—अहिहतः [साँप द्वारा मारा गया]। (२) करण में [तृतीया में समास का उदा०]—नखैः निर्भिन्नः—नखनिर्भिन्नः [नाखूनों से फाड़ा गया]। परशुना छिन्नः—परशु छन्नः [फरसे से काटा गया]।

कर्ता और करण में—इसका क्या प्रयोजन है? भिक्षाभिः उषितः [यहाँ भिक्षा के कारण रहा। यह अर्थ होने से हेतु में तृतीया है। समास नहीं होता है।] बहुल—इसका ग्रहण किस लिये है? दात्रेण धान्यं लूनवान्, परशुना

## ३८४. कृत्यैरधिकार्थवचने ॥ ३३ ॥ (६६५)

**स्तुतिनिन्दाप्रयुक्तमध्यारोपितार्थवचनमधिकार्थवचनम्। कर्तृकरणयोर्या तृतीया तदन्तं सुबन्तं कृत्यैः सह समस्यतेऽधिकार्थवचने गम्यमाने विभाषा, तत्पुरुषश्च समासो भवति। कर्त्ता—काकपेया (३.१.९७)**

न्यासः

**कृत्यैरधिकार्थवचने ॥ स्तुतिनिन्दाप्रयुक्तमिति।** स्तुत्या निन्दया वा यत् प्रयुक्तं प्रवर्त्तितं तत् स्तुतिनिन्दाप्रयुक्तम्। तदर्थमुच्चारितमित्यर्थः। **अध्यारोपितार्थवचनमिति।** अध्यारोपितोऽर्थोऽसन्नेव बुद्धया समारोपितस्तस्य वचनमिति षष्ठीसमासः। **कर्त्तृकरण इति।** अर्थे कार्यासम्भवात् तदभिधायिनि सुबन्ते कार्यं विज्ञायते। **काकपेयेति।** 'पा पाने' इति 'अचो यत्' 'ईद् यति' ईत्त्वम्। अत्र सम्पूर्णतोयत्वोद्भावनं नद्याः स्तुतिः, अध्यारोपितः पुनरत्रार्थः काकपेयत्वम्—एवं नाम सम्पूर्णतोया नदी, यत् तटस्थैरपि काकैः शक्या पातुम्। **श्वलेह्यः कूप इति।** 'ऋहलोर्ण्यत्' अत्राप्यासन्नोदकत्वोद्भावनं कूपस्य स्तुतिः। अध्यारोपितः पुनरत्रार्थः श्वलेह्यत्वम्—एवं नामासन्नोदकः कूपो यतः श्वभिरपि लिह्यते। **बाष्पच्छेद्यानि तृणानीति।** अत्र मार्दवातिशयोद्भावनं तृणानां स्तुतिः। अध्यारोपितः पुनरत्रार्थो बाष्पच्छेद्यता—एवं नाम मृदूनि तृणानि यद्बाष्पेणापि शक्यानि छेत्तुम्। **कण्टकसञ्चेय ओदन इति।** अत्रापि वैषद्यातिशयोद्भावनं विक्लिन्नतोद्भावनञ्चौदनस्य स्तुतिः। अध्यारोपितः पुनरत्रार्थः कण्टकसञ्चेयत्वम्—एवं नामौदनस्य विशदतातिशयो विक्लेदश्च यत् कण्टकेनापि शक्यः सञ्चेतुम्। एवं तावत् स्तुतिप्रयुक्तेऽधिकार्थवचन उदाहरणानि।

पदमञ्जरी

**कृत्यैरधिकार्थवचने ॥ स्तुतिनिन्दाप्रयुक्तमिति।** स्तुत्या निन्दया च प्रवर्तितं स्तोतुं निन्दितुं च कृतमित्यर्थः। **अध्यारोपितार्थवचनमिति।** असन्नेवारोपितोऽध्यारोपितः। **काकपेयेति।** एवं नाम पूर्णतोया नदी यत्तटस्थैः काकैरपि शक्या पातुमिति स्तुतिः; एवं नामाल्पतोया यत्काकैरपि शक्या पातुमिति निन्दा; उभयत्र शक्यार्थे कृत्यः। **श्वलेह्य इति।** एवं नामासन्नतोयः कूपस्तटस्थैरपि श्वभिः शक्यो लेढुमिति स्तुतिः; एवं नामाशुचिः कूपो यज्जलं श्वान एव लेढुमर्हन्तीति निन्दा; अर्हार्थे कृत्यः **बाष्पच्छेद्यानीति।** एवं नाम कोमलानि तृणानि यद्बाष्पेणापि छेत्तुं शक्यानीति स्तुतिः; एवं नाम क्वथितानि तृणानि यद्बाष्पेणापि छेत्तुं

भावबोधिनी

छिन्नवान्—यहाँ [करण तृतीयान्त रहने पर भी] समास नहीं होता है। पादहारकः गलेचोपकः [पादाभ्यं ह्रियते—यहाँ कर्म में ण्वुल् है इसी प्रकार गले चुप्यते—इसमें भी कर्म अर्थ में ही ण्वुल् है। पादाभ्याम्—यहाँ करण में नहीं अपितु अपादान में पञ्चमी है। 'गले' यहाँ अधिकरण सप्तमी है। इस प्रकार इन दोनों में किसी भी अर्थ में तृतीया नहीं है तो भी 'बहुलग्रहण' के बल से समास हो जाता है। 'गलेचोपकः' में 'तत्पुरुषे कृति बहुलम्' (पा० सू० ६।३।१४) अथवा 'अमूर्धमस्तकात्स्वाङ्गे' (पा० सू० ६।३।१२) से सप्तमी का अलुक् होता है।] ॥३२॥

स्तुति = प्रशंसा और निन्दा को मानकर होने वाला, अध्यारोपित = न होते हुए भी मान लिया जाने वाला कथन अधिकार्थवचन है, अर्थात् किसी पदार्थ को बढ़ा चढ़ाकर कहना। कर्ता और करण अर्थ में जो तृतीया तदन्त [तृतीयान्त] सुबन्त का कृत्य प्रत्ययान्तों के साथ, अधिकार्थवचन प्रतीत होने पर विकल्प से समास होता है और वह 'तत्पुरुष' होता है। उदा०—काकपेया नदी [काकैः पेया = पातुं योग्या। इतने अधिक जल वाली नदी है कि कौआ भी ऊपर से पानी पी सकता है। इस प्रकार स्तुति गम्यमान है। अथवा इतने कम या दूषित जल वाली है कि कौआ ही पी सकते हैं। इस प्रकार निन्दा प्रतीत हो रही है। 'पेया' यहाँ शक्य अर्थ में 'अचो यत्' (पा० सू० ३।१।९७) से यत् प्रत्यय और 'ईद्यति' (पा० सू० ६।४।६५) से 'आ' का 'ई' और इसका गुण टाप् = आ करने पर 'पेया' बना है। काकैः पेया इस विग्रह में कर्तृतृतीयान्त के साथ समास होता है।] श्वलेह्यः कूपः [शुना लेह्यः—इस विग्रह में लिह्

नदी। श्वलेह्यः (३.१.१२४) कूपः। करणम्—बाष्पच्छेद्यानि तृणानि। कण्टकसञ्चेय ओदनः। पूर्वस्यैवायं प्रपञ्चः।

* कृत्यग्रहणे यण्ण्यतोर्ग्रहणं कर्त्तव्यम् *। इह मा भूत्—काकैः पातव्या इति।

**३८५. अन्नेन व्यञ्जनम् ॥ ३४ ॥ (६८६)**

'तृतीया' इति वर्तते। व्यञ्जनवाचि तृतीयान्तमन्नवाचिना सुबन्तेन सह समस्यते विभाषा,

**न्यासः**

निन्दाप्रयुक्तेऽधिकार्थवचन एतावन्त्येव द्रष्टव्यानि। तथा हि—काकपेया नदीत्यत्राल्पतोयत्वोद्भावनंनद्या निन्दा। अध्यारोपितः पुनरत्रार्थस्तदेव पूर्वोक्तं काकपेयत्वम्, एवं श्वलेह्यादावपि पूर्वोक्त एवाध्यारोपितोऽर्थो द्रष्टव्यः—एवं नामाल्पतोया नदी यत् काकैरपि शक्यं पातुमिति। श्वलेह्यः कूप इत्यत्राप्यशुद्धतोयत्वोद्भावनं निन्दा—एवं नामाशुचिः कूपो यत् श्वभिरपि लिह्यत इति। बाष्पच्छेद्यानि तृणानीति। क्वथितत्वोद्भावनं निन्दा—एवं नाम क्वथितानि तृणानि यद् बाष्पेणापि च्छिद्यन्ते। कण्टकसञ्चेय ओदन इति। अल्पतोद्भावनं निन्दा—एवं नामाल्प ओदनो यत् कण्टकैरपि चीयत इति। ननु च बहुलवचनादधिकार्थेऽपि पूर्वेणैव सिद्धः समासः, तत् किमर्थमिदमित्याह—पूर्वस्येत्यादि। ते वै विधयः सुसंगृहीता येषां लक्षणं प्रपञ्चश्चेति। सुसंगृहीतं यथा स्यादिति पूर्वस्यायं प्रपञ्चः क्रियते ॥ ३३ ॥

अन्नेन व्यञ्जनम् ॥ दध्योदन इति। ननु च क्रियाकृतः कारकाणां सम्बन्धः, न तु स्वतः। न च

**पदमञ्जरी**

शक्यानीति निन्दा। कण्टकसंचेय इति। एवं नाम क्लिन्न ओदनो यत्कण्टकैः शक्यः संचेतुमिति स्तुतिः; एवं नामाल्प ओदनो यत्कण्टकैः संचीयत इति निन्दा। पूर्वस्यैवायं प्रपञ्च इति। यद्यपि स्तुतिनिन्दापरत्वात्क्रियोपादानस्य कर्तृकरणयोर्गौणत्वम्, तथापि बहुलवचनात्पूर्वेणैव सिद्धम्, तथा च काकपीता नदीत्यत्राकृत्यैरप्यधिकार्थवचनैः समासो दृश्यते, अतः प्रपञ्च एवायम्, नाप्राप्तविधिः, नापि नियम इत्यर्थः ॥ ३३ ॥

अन्नेन व्यञ्जनम् ॥ दध्योदन इति। ननु च नेह क्रिया श्रूयते, न चान्तरेण क्रियां द्रव्याणां परस्परेण

**भावबोधिनी**

धातु से 'ऋहलोर्ण्यत्' (पा० सू० ३.१.१२४) से ण्यत् = य प्रत्यय, उपधा गुण आदि करके लेह्य बना है। कर्तृतृतीयान्त के साथ समास होता है। कुत्ते द्वारा चाट लेने योग्य कुआं। अर्थात् अति जल वाला कुआं] यह स्तुति है। इतने कम और दूषित जल वाला कि कुत्ते ही चाट सकते हैं। यह निन्दा है।] करण [में तृतीया के साथ समास]—वातच्छेद्यानि तृणानि [वातेन छेद्यानि—इस विग्रह में यह समास है। यहाँ 'छेद्य' शब्द कृत्य = ण्य प्रत्ययान्त है। तृण इतने कोमल हैं कि हवा से भी कटने योग्य हैं, यह स्तुति है। अथवा इतने दुर्बल हैं कि हवा से भी कट जाते हैं, यह निन्दा है।] कण्टक सञ्चेयः ओदनः [कांटे से भी इकट्ठे करने योग्य चावल। कण्टकेन संचेयः यहाँ सम् उपसर्ग, चि धातु, यत् प्रत्यय है।] यह पूर्व सूत्र का ही प्रपञ्च है। [भाव यह है कि 'कर्तृकरणे कृता बहुलम्' (पा० सू० २।१।३८) इस पूर्व सूत्र में 'बहुल्' का ग्रहण होने से अधिकार्थवचन में भी समास हो जाता। अतः इस सूत्र को उसी का प्रपञ्च = विस्तार समझना चाहिये]।

* कृत्य प्रत्ययों के ग्रहण में यत् और ण्यत् के ग्रहण का उपसंख्यान करना चाहिये। * यहाँ नहीं हो—काकैः पातव्या। [यहाँ तक प्रत्यय के कारण समास नहीं होता है] ॥ ३३ ॥

'तृतीया' इसकी अनुवृत्ति होती है। व्यञ्जनवाचक तृतीयान्त का अन्नवाचक सुबन्त के साथ विकल्प से समास होता है, और वह तत्पुरुष होता है। संस्कार्य = जिसका संस्कार किया जाता है = अन्न होता है, संस्कारक = जो,

**तत्पुरुषश्च समासो भवति। संस्कार्यमन्नम् संस्कारकं व्यञ्जनम्। दध्ना उपसिक्त ओदनः दध्योदनः। क्षीरौदनः। वृत्तौ क्रियाया अन्तर्भावादन्नव्यञ्जनयोः सामर्थ्यम्॥**

### ३८६. भक्ष्येण मिश्रीकरणम्॥ ३५॥ (६९७)

**मिश्रीकरणवाचि तृतीयान्तं भक्ष्यवाचिना सुबन्तेन समस्यते, तत्पुरुषश्च समासो भवति। खरविशदमभ्यवहार्यं भक्ष्यम्, तस्य संस्कारकं मिश्रीकरणम्। गुडेन मिश्रा धानाः गुडधानाः। गुडपृथुकाः। वृत्तौ क्रियाया अन्तर्भावात्पूर्वोत्तरपदयोः सामर्थ्यम्॥**

**न्यासः**

वृत्ताविह काचन क्रिया श्रूयत इति सामर्थ्याभावः। असति च सामर्थ्ये समासाभावः। अथासत्यपि सामर्थ्ये वचनसामर्थ्यात् समासो भवतीति। चेदास्यतां दध्ना, ओदनो भुज्यतां देवदत्तेनेत्यत्रापि स्यादित्यत आह—**वृत्तावित्यादि**। न ह्यसत्यामुपसेचनक्रियायां संस्कार्यं संस्कारकं वा सम्भवति। अस्ति चेह तदुभयमित्यतस्तद्भावादेव समासान्तर्भूता क्रिया गम्यते। तद्द्वारकश्चान्नव्यञ्जनयोः सम्बन्ध इति विद्यत एव सामर्थ्यम्॥ ३४॥

**भक्ष्येण मिश्रीकरणम्॥ मिश्रीकरणमिति**। अमिश्रं मिश्रं क्रियतेऽनेनेति मिश्रीकरणम्। **खरविशदमभ्यवहार्यं भक्ष्यमिति**। तत्रैव भक्ष्यशब्दस्य रूढत्वात्॥ ३५॥

**पदमञ्जरी**

सम्बन्ध इत्यसामर्थ्यादत्र समासो न प्राप्नोति, अथासत्यपि सामर्थ्ये वचनात्समासः? इहापि तर्हि स्यात्—किं दध्ना, ओदनो भुज्यतामिति, तत्राह—**वृत्तौ क्रियाया अन्तर्भावादिति**। स्वभावादेव वृत्तावन्तर्भूता क्रियेति तद्द्वारकस्य सम्बन्धस्य सद्भावात् सामर्थ्यमित्यर्थः॥ ३४॥

**भक्ष्येण मिश्रीकरणम्॥ खरविशदमिति**। खरम्=कठिनम्, विभक्तावयवम्; खरं च तद्विशदं च खरविशदम्, हनुचलनेनादनीयमित्यर्थः। एवम्भूतं यदभ्यवहार्यं तद्भक्ष्यमित्युच्यते; तत्रैव यदन्तस्य एरजन्तस्य च भक्षयते रूढत्वात्। भक्षयतिस्त्वन्यत्रापि भवति—अब्भक्षः, वायुभक्ष इति। गौणोऽत्र भक्षयतिरित्यन्ये॥ ३५॥

**भावबोधिनी**

संस्कार करने वाला है = व्यञ्जन होता है। उदा०—दध्ना उपसिक्त ओदनः [इस विग्रह में समास करने पर] दध्योदनः [दही मिला हुआ भात]। क्षीरौदनः [क्षीरेण उपसिक्तः ओदनः—यह विग्रह है। दूध मिला हुआ भात] वृत्ति = समास में [उपसेक] क्रिया के अन्तर्भाव के कारण अन्न और व्यञ्जन का सामर्थ्य है।

विमर्श—दही या दूध आदि के द्वारा चावल आदि मिलाकर खाये जाते हैं। यहाँ दही संस्कारक होने से व्यञ्जन है और ओदन संस्कार्य होने से अन्न है।

यहाँ यह प्रश्न हो सकता है कि दो द्रव्यों का परस्पर सम्बन्ध नहीं होता है, उनमें क्रिया को माध्यम होना चाहिये। यहाँ कोई क्रिया नहीं सुनाई दे रही है, अतः सामर्थ्य के अभाव में समास नहीं होना चाहिये? समाधान यह है कि समास वृत्ति में स्वभावतः क्रिया अन्तर्भूत मान ली जाती है। अतः यहाँ उपसेक क्रिया के माध्यम से दोनों का सामर्थ्य समझना चाहिये। इस प्रकार समास सम्भव है। इसीलिये 'विग्रह में उपसिक्तः' का प्रयोग किया जाता है॥ ३४॥

मिश्रीकरणवाचक तृतीयान्त का भक्ष्यवाची सुबन्त के साथ समास होता है और वह तत्पुरुष समास होता है। मिश्री क्रियते खाद्यं द्रव्यमनेन—इति मिश्रीकरणम् = गुडादि] खर = कठिन और विशद = विभक्त अवयवों वाला, अभ्यवहार्य = भक्ष्य है [अर्थात् दाँत ओष्ठ आदि के द्वारा खाने योग्य पदार्थ 'भक्ष्य' होता है।] इसका संस्कार करने वाला = मिश्रीकरण होता है। उदा०—गुडेन मिश्राः धानाः—गुडधानाः [गुड़ मिले हुए धान = भुंजे हुए जौ] गुडेन

## ३८७. चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ ३६ ॥ (६९८)

'सुप्' 'सुपा' इति वर्तते, तस्य विशेषणमेतच्चतुर्थी। 'तत्' इति सर्वनाम्ना चतुर्थ्यन्तस्यार्थः परामृश्यते। तस्मै इदं तदर्थम्। तदर्थ, अर्थ, बलि, हित, सुख, रक्षित—इत्येतैः सह चतुर्थ्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। तदर्थेन प्रकृतिविकारभावे समासोऽयमिष्यते। यूपाय दारु यूपदारु। कुण्डलाय हिरण्यम्, कुण्डलहिरण्यम्।

### न्यासः

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ तदर्थेनेत्यादि।** यदि तादर्थ्यमात्रे समासः स्यात्, बलिरक्षितग्रहणमनर्थकं स्यात्। तथा हि—कुबेरबलिः, गोरक्षितमित्यत्रापि तादर्थ्यं गम्यत एव। तस्माद् बलिरक्षितग्रहणाल्लिङ्गात् 'तादर्थ्ये प्रकृतिविकारभावे समासो भवति' इति विज्ञायते। ननु च सम्प्रदाने चतुर्थ्यर्थं बलिरक्षितग्रहणं स्यात्, नैतदस्ति; ददातिकर्मणा हि अभिप्रेयमाणस्य क्रियया वा सम्प्रदानसंज्ञेष्यते, न चेह ददातिकर्मणा क्रियया वाऽभिप्रेयमाणतास्ति, तत् कुतः सम्प्रदाने चतुर्थी ? केन पुनस्तादर्थ्ये चतुर्थी भवतीत्याह—**अस्मादेवेत्यादि।** यदि तादर्थ्ये चतुर्थी न स्यात्, तदा तदर्थग्रहणमनर्थकं स्यात्। तस्माद् यदेतत् तदर्थेन चतुर्थ्यन्तस्य समास विधानं तदेव ज्ञापकम्—तादर्थ्ये चतुर्थी भवतीति।

### पदमञ्जरी

**चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ अर्थः परामृश्यते इति।** यद्यपि चतुर्थीति चतुर्थ्यन्तः शब्दः सन्निहितः, तथापि शब्दं प्रति तादर्थ्यासम्भवात्तदर्थ एव परामृश्यत इत्यर्थः। **इत्येतैः शब्दैः सहेति।** तत्र तदर्थेन सुबन्तेनेत्यर्थद्वारकं विशेषणम्, स्वरूपेण सुबन्तस्य तादर्थ्यासम्भवात्। द्वितीयस्त्वर्थशब्दः पृथगेव निमित्तम्। **प्रकृतिविकारभावे समास इष्यत इति।** ज्ञापकात्। यदयं बलिरक्षितग्रहणं करोति तज्ज्ञापयति—विकृतिश्चतुर्थ्यन्ता प्रकृत्या समस्यत इति; अन्यथा कुबेरबलिः, गोरक्षितमित्यत्रापि तादर्थ्यसम्भवादनर्थकं तत्स्यात्। हितसुखग्रहणं तु 'हितयोगे चतुर्थी वक्तव्या' (वा० १२३), 'चतुर्थी चाशिषि' इत्यतादर्थ्येऽपि चतुर्थीसम्भवान्न ज्ञापकम्। यदि 'विकृतिः प्रकृत्या' (कात्या० वा० १२७२) समस्यते—अश्वेभ्यो घासः, अश्वेभ्यः सुरा अश्वसुरम्, 'विभाषासेना' इति नपुंसकत्वम्, हस्तिभ्यो विधा हस्तिविधा, विधा = अन्नविशेषः; अत्र न प्राप्नोति ? अश्वघासादयः षष्ठीसमासा भविष्यन्ति। ननु स्वरे विशेषो भवति—चतुर्थीसमासे हि सति 'चतुर्थी तदर्थे' इति

### भावबोधिनी

मिश्राः पृथुकाः—गुडपृथुकाः [गुड मिले हुए चूड़ा = चावल कूटकर बनाया गया खाद्य पदार्थ विशेष।] समास वृत्ति में मिश्रण क्रिया के अन्तर्भाव से पूर्व और उत्तर पदों में सामर्थ्य है। [इस स्थल की शंका और समाधान पूर्व सूत्र के 'विमर्श' में देखें ॥ ३५ ॥

'सुप्' और 'सुपा' इन दोनों की अनुवृत्ति होती है। सुप् का विशेषण यह चतुर्थी है। 'तत्' इस सर्वनाम के द्वारा चतुर्थ्यन्त के अर्थ का परामर्श = बोध कराया जाता है। तस्मै इदम्—इस विग्रह में—तदर्थम् बनता है। तदर्थ, अर्थ, बलि, हित, सुख और रक्षित—इनके साथ चतुर्थ्यन्त का समास होता है और वह तत्पुरुष होता है। तदर्थ के साथ प्रकृति-विकृतिभाव में ही यह समास इष्ट है। उदा०— (१) यूपाय दारु इस विग्रह में—यूपदारु [यज्ञीय स्तम्भ के लिये काष्ठ। यहाँ काष्ठ प्रकृति है। स्तम्भ उसकी विकृति है।] कुण्डलाय हिरण्यम् [इस विग्रह में]—कुण्डलहिरण्यम् [कुण्डल के लिये सोना]। यहाँ हिरण्य प्रकृति है। कुण्डल विकृति है।]

[प्रकृतिविकृतिभाव न होने से] यहाँ समास नहीं होता है—रन्धनाय स्थाली [पकाने के लिये बटलोई] अवहननाय उलूखलम् [कूटने के लिये ओखली]। इसी समास विधानरूपी ज्ञापक के कारण ही तादर्थ्य में चतुर्थी होती है।

इह न भवति—रन्धनाय स्थाली, अवहननायोलूखलमिति। चतुर्थी चास्मादेव ज्ञापकात्तादर्थ्ये भवति ॥

* अर्थेन नित्यसमासवचनम्, सर्वलिङ्गता च वक्तव्या * (म० भा० २ १ ३६ वा० ४, ५)। ब्राह्मणार्थं पयः। ब्राह्मणार्था यवागूः (म० भा०)। बलि—कुबेराय बलिः कुबेरबलिः। महाराजबलिः। हित—गोहितम्। अश्वहितम्। सुख—गोसुखम्। अश्वसुखम्। रक्षित—गोरक्षितम्। अश्वरक्षितम् ॥

**न्यासः**

अर्थेनेत्यादि। कर्त्तव्यमिति शेषः। नित्यसमास उच्यते = कथ्यते, प्रत्याय्यते येन तन्नित्यसमासवचनं व्याख्यातव्यम्। एतदुक्तं भवति—येनार्थशब्देन नित्यसमासः प्रत्याय्यते तद्व्याख्यानं कर्त्तव्यमिति। तत्रेदं व्याख्यानम्—विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा विज्ञायते। तेनार्थशब्देन नित्यसमासो भविष्यति, सर्वलिङ्गता चेति। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इति परवल्लिङ्गतायां प्राप्तायां सर्वलिङ्गता विधीयते। एषा तु लोकाश्रयत्वाल्लिङ्गस्येति सिद्धा। अथ वा—बहुलग्रहणानुवृत्तेः सर्वमेतत् सिद्धम्। गोहितम्, गोसुखमिति 'चतुर्थी चाशिष्यायुष्य' इत्यादिना चतुर्थी। हितयोगे त्वनाशिष्यपि चतुर्थी भवति। तथा हि वक्ष्यति—हितयोगे चतुर्थी वक्तव्येति ॥ ३६ ॥

**पदमञ्जरी**

पूर्वपदप्रकृतिस्वरेण भाव्यम्, षष्ठीसमासे तु समासान्तोदात्तत्वेन ? नैषोऽस्ति विशेषः; चतुर्थीसमासेऽपि नैव पूर्वपदप्रकृतिस्वरेण भाव्यम्; ज्ञापकात्, यदयं 'क्ते च' इति चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवतीत्याह, तज्ज्ञापयति—प्रकृतिविकारभावाभाव एष स्वरो न भवतीति; अन्यथा गोरक्षितमित्यत्रापि 'चतुर्थी तदर्थ' इत्येव सिद्धेरनर्थकं तत्स्यात्। नैतदस्ति ज्ञापकम्; हितार्थमेतत्स्यात्—गोहितमित्यत्र हि तादर्थ्यं नास्ति। एवमपि 'हिते च' इति वक्तव्ये 'क्ते च' इति सामान्यवचनं ज्ञापकमेव, सर्वथा कुबेरबलिरित्यादौ मा भूदित्येवमर्थं प्रकृतिविकारभावे स्वर एषितव्यः।

अथ रन्धनाय स्थालीत्यत्र षष्ठीसमासः कस्मान्न भवति ? कश्चिदाह—भवत्येव, तद्यथा—गोग्रासः, लीलाम्बुजम्, क्रीडासरः, वासभवनम्, नाट्यशालेति। अपर आह—रन्धनस्थाल्यादयोऽनभिधानात् षष्ठी-

**भावबोधिनी**

[भाव यह है कि यदि तादर्थ्य में चतुर्थी नहीं की जायगी तब तो 'तदर्थ' का ग्रहण व्यर्थ हो जायगा। इस कारण तदर्थ के साथ चतुर्थ्यन्त का समास-विधान करना ही इस बात का ज्ञापक है कि तादर्थ्य में चतुर्थी होती है।]

* अर्थ—शब्द के साथ नित्य समास कहना चाहिये और सर्वलिङ्गता = सभी लिङ्ग होते हैं—यह भी कहना चाहिये * [नित्य समास होने के कारण यहाँ अस्वपद विग्रह होता है—ब्राह्मणाय इदम्—] (२) ब्राह्मणार्थं पयः [ब्राह्मण के लिये दूध] [ब्राह्मणाय इदम्—इस विग्रह में] ब्राह्मणार्था यवागूः [ब्राह्मण के लिये हलुआ] [द्विजाय अयम्—इस विग्रह में—द्विजार्थः सूपः। ब्राह्मण के लिये दाल। पुंल्लिङ्गता का उदाहरण काशिकाकार ने नहीं दिया है। द्विजाय—यह तदर्थ में चतुर्थी है।] (३) बलि—कुबेराय बलिः [इस विग्रह में]—कुबेरबलि [कुबेर देवता के लिये बलि]। महाराजबलि [महाराजाय बलिः]। (४) हित—[गोभ्यः हितम्—इस विग्रह में] गोहितम् [गायों के लिये हित = हितकारक] अश्वहितम् [अश्वेभ्यः हितम्]। (५) सुख—गोभ्यः सुखम्—गोसुखम् [गायों के लिये सुखकारक]। अश्वसुखम् [अश्वेभ्यः सुखम्]। (६) रक्षित—गोरक्षितम् [गोभ्यः रक्षितम्। गायों के लिये रक्षित = रखा हुआ] अश्वरक्षितम् [अश्वेभ्यः रक्षितम्। घोड़ों के लिये रक्षित = रखा गया] ॥ ३६ ॥

पदमञ्जरी

समासा न भवन्तीति। उभात्रपि प्रतिब्रूमः—येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु, येषु तु नेष्यते तेषु तु चतुर्थीसमास एवानभिधानान्नेष्यताम्, माकारिज्ञापनार्थं बलिरक्षितग्रहणम्, स्वरस्तु चतुर्थीसमासेऽपि पूर्वोक्तेन प्रकारेण प्रकृतिविकारभाव एव व्यवस्थास्यते। किं चैवं सति सूत्रमेवैतदनर्थकम्, यूपदार्वादावपि षष्ठीसमास एवास्तु, 'चतुर्थी तदर्थ' इत्येतत्तु 'षष्ठी तदर्थे' इति क्रियताम्, ज्ञापकाच्च स्वरस्य व्यवस्था क्रियताम्। नन्वर्थभेदो भवति—षष्ठीसमासे सम्बन्धमात्रं गम्यते, चतुर्थीसमासे तु तादर्थ्यं सम्बन्धविशेषः? नैषोऽस्ति विशेषः, आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासः, तत्रार्थप्रकरणादिना विशेषोऽवसेयः। यद्येवम्, केवलेऽपि षष्ठीसमासे तथा विशेषोऽवगंस्यते, किञ्च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्याऽवसायः सर्वत्रैव तथास्तु, नार्थोऽनेन? उच्यते—हितशब्देन तावत्षष्ठीसमासो न भवति; तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः। ततश्च 'क्ते च' इत्यत्रापि चतुर्थीग्रहणं कर्तव्यं गोहितमित्याद्यर्थम्। एवं च गोरक्षितमित्यत्र न स्यात्, चतुर्थ्या असम्भवात्। 'षष्ठी तदर्थे' इत्यस्य चाप्रसङ्गः, प्रकृतिविकाराभावादिति रक्षितेनापि चतुर्थीसमास एव विधेयः। अर्थशब्देनापि योगे तादर्थ्यसम्बन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या सम्भवितव्यमिति तेनापि चतुर्थीसमास एव कर्तव्यः। बलिसुखग्रहणमपि कर्त्तव्यम्, तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथा स्यादित्येवमर्थम्। तस्मादारब्धव्यमेव सूत्रम्। प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यम्।

**अर्थेन नित्यसमासवचनमिति।** अन्यथा महाविभाषाधिकाराद् ब्राह्मणायार्थ इति वाक्यमपि स्यात्। **सर्वलिङ्गता चेति।** परलिङ्गताया अपवादः, अभिधेयवशेन च सर्वलिङ्गता न सर्वत्रेति दर्शयति। **ब्राह्मणार्थं पय इत्यादि।** सर्थबिति चेत्, इत्संज्ञाभावः, इयङुवङ्प्रसङ्गश्च। स्यादेतत्—तदर्थं विकृतेः प्रकृतावित्यत्र तदर्थे सर्थबिति सूत्रं कर्तव्यम्, चतुर्थी वर्तते, चतुर्थीसमर्थात्तदर्थेऽभिधेये सर्थप्रत्ययो भवति, सकारः पदसंज्ञार्थः—राजार्थं, गवार्थः, पित्त्वादनुदात्तत्वम्; एवं चार्थ इति पूर्वपदप्रकृतिस्वरो न विधेयः, प्रत्ययत्वाच्च न तेन विग्रहः, तद्धितत्वाच्चाभिधेयवल्लिङ्गता सिद्ध्यतीति? तन्न; सकारस्येत्संज्ञाभावप्रसङ्गात्। अथ 'आदिर्ञिटुडवः' 'षः प्रत्ययस्य' इति द्विषकारकनिर्देशाश्रयणेनेत्संज्ञा स्याद्? एवमपि वुञ्छणादिषु तृणादिभ्यः से प्रसङ्गः, श्र्यर्थम् भ्र्वर्थमित्यत्र चेयङुवङौ स्याताम्, बहुव्रीहावात्वकपोः प्रसङ्गः। स्यादेतत्—यद्ब्राह्मणार्थं पयस्तस्य ब्राह्मणोऽर्थः प्रयोजक इति शक्यते वक्तुम्, अतो ब्राह्मणोऽर्थोऽस्येति विगृह्य बहुव्रीहिः करिष्यते, तेन चतुर्थ्यन्तेन विग्रहाभावः पूर्वपदप्रकृतिस्वरत्वमभिधेयवल्लिङ्गता च सिद्ध्यतीति? तन्न; महदर्थमित्यत्रात्वकपोः प्रसङ्गात्। तदर्थस्यार्थादेश उदभावप्रसङ्गः स्यादेतत्—'चतुर्थी तदर्थ' इत्यनेन समासं विधायार्थ इत्यनेनांशेन तदर्थवाचिन उत्तरपदस्यार्थशब्द आदेशो विधीयते, विभाषाधिकाराच्च यूपार्थं दारु यूपदार्वित्युभयं भविष्यति, ततो बलिरक्षितयोरपि विभाषार्थशब्द आदेशो भवति—कुबेरार्थो बलिः कुबेरबलिरित्यादि। किमर्थमिदम्, पूर्वेणैव सिद्धम्? ज्ञापकार्थम्, एतज् ज्ञापयति—प्रकृतिविकाराभावादन्यत्र नित्योऽर्थादेश इति। तेन रन्धनार्था स्थालीत्यादि भवति, न तु रन्धनस्थालीत्यादि। अश्वघासादयस्तु पूर्ववत्। अत्र समासे कृते उत्तरपदस्य विधीयमानेनार्थशब्देन विग्रहो न भविष्यति, यस्यावस्थानेऽर्थादेशस्तल्लिङ्गता स्थानिवद्भावेन भविष्यति, अर्थ इति पूर्वपदप्रकृतिस्वरस्तु विधेय एवेति, तन्न; उदकाय वीवध उदकार्थ इति वीवधशब्दस्यार्थादेशे कृते स्थानिवद्भावेन मन्थौदनादिसूत्रेणोदभावप्रसङ्गात्। अतश्चतुर्थीसमास एव विधेयः। तथा च 'अर्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या' (कात्या० वा० १२७३; ७४) न वक्तव्या, ब्राह्मणायेति चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहो न भविष्यति। 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' (चान्द्रपरि० ७३) इति सर्वलिङ्गता च सिद्धा।

तदेतत्प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा॥ ३६॥

**३८८. पञ्चमी भयेन ॥ ३७ ॥ (६९९)**

'सुप्' 'सुपा' इति वर्त्तते, तस्य विशेषणमेतत्पञ्चमी। पञ्चम्यन्तं सुबन्तं भयशब्देन सुबन्तेन सह समस्यते विभाषा, तत्पुरुषश्च समासो भवति। वृकेभ्यो भयम्—वृकभयम्। चौरभयम्। दस्युभयम्।

* भयभीतभीतिभीभिरिति वक्तव्यम् * (म० भा० २.१.३६ वा० १)। वृकेभ्यो भीतः वृकभीतः। वृकभीतिः। वृकभीः। पूर्वस्यैवायं बहुलग्रहणस्य प्रपञ्चः। तथा च—ग्रामनिर्गतः, अधर्मजुगुप्सुरित्येवमादि सिद्धं भवति॥

**३८९. अपेतापोढमुक्तपतितापत्रस्तैरल्पशः ॥ ३८ ॥ (७००)**

अपेत, अपोढ, मुक्त, पतित, अपत्रस्त—इत्येतैः सह पञ्चम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति।

न्यासः

**पञ्चमी भयेन॥** **भयभीतभीतिभीभिरिति वक्तव्यमिति।** एवं हि त्रिभिरपि भीतादिभिः समासो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। स्वयमेव व्याख्यातुमाह—**पूर्वस्येत्यादि।** यथैव हि 'कर्तृकरणे कृता बहुलम्' इति तृतीयान्तस्य समासो विधीयमानो बहुलग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वादन्यविभक्त्यन्तस्यापि समासो भवति—पादहारकः, गलेचोपक इति, तथा वृकभीत इत्यादावपि समासो भविष्यति। तस्मात् पूर्वकस्य बहुलग्रहणस्यैवोदाहरणप्रदर्शनार्थोऽयं योगः प्रपञ्चार्थो वेदितव्यः। **तथा चेत्यादि।** यस्मात् पूर्वकेणैव बहुलग्रहणेन सिद्धं तस्यैवायं प्रपञ्चः, तस्मात् तत एव बहुलग्रहणाद् **ग्रामनिर्गत** इत्याद्यपि सिद्धं भवति। आदिशब्देन वृकभीतादेर्ग्रहणम्॥ ३७॥

**अपेतापोढमुक्तपतितापत्रस्तैरल्पशः॥** **अल्पश इति।** 'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्' इति

पदमञ्जरी

**पञ्चमी भयेन॥** भयेनेति स्वरूपग्रहणादव्याप्तिरिति मत्वाऽऽह—**भयभीतभीतिभीभिरिति वक्तव्यमिति।** एवं सूत्रन्यासः कर्तव्य इत्यर्थः। व्याख्यानात्त्वर्थग्रहणे 'वृकेभ्यस्त्रासः' इत्यादावपि प्रसङ्गः इति भावः। स तर्हि तथा न्यासः कर्तव्यः? नेत्याह—**पूर्वस्यैव बहुलग्रहणस्येति।** यथा हि 'पादहारकः' इत्यादौ बहुलग्रहणात्सर्वोपाधिव्यभिचारार्थाद्भवति, एवमत्रापि भविष्यतीत्यर्थः। **अधर्मजुगुप्सुरिति।** 'जुगुप्साविराम' (वा० ५८) इत्यधर्मस्यापादानसंज्ञा॥ ३७॥

**अपेतापोढमुक्तपतितापत्रस्तैरल्पशः॥** अल्पशब्दाद् 'बह्वल्पार्थात्' इति शस्, 'शसि बह्वल्पार्थस्य'

भाववोधिनी

'सुप्' और 'सुपा' इनकी अनुवृत्ति होती है। इस सुप् का विशेषण यह 'पञ्चमी' है। पञ्चम्यन्त सुवन्त का सुबन्त भय शब्द के साथ विकल्प से समास होता है, वह तत्पुरुष समास होता है। उदा०—वृकेभ्य भयम् [इस विग्रह में] वृकभयम् [भेड़ियों से भय]। चौरभयम् [चौरेभ्यः भयम् - यह विग्रह है। चोरों से भय] दस्युभयम् [दस्युभ्यः भयम्—यह विग्रह है। डाकुओं से भय]* भय, भीत, भीति और भी - इनके साथ सुबन्त का समास होता है, ऐसा कहना चाहिये।* [भय का उदाहरण दिया जा चुका है।] वृकेभ्यः भीतः [भेड़िये से डरा हुआ]—वृकभीतः। [वृकेभ्यः भीतिः—इस विग्रह में] वृकभीतिः [भेड़ियों से भय] वृकभीः [वृकेभ्यः भीः—इस विग्रह में समास होता है। भेड़ियों से भय] ['कर्तृकरणे कृता बहुलम्' (पा० सू० २।१।३२) इस] पूर्व सूत्र के बहुल ग्रहण का ही यह प्रपञ्च है। [अर्थात् उसमें बहुल-ग्रहण से जैसे सभी उपाधियों का व्यभिचार हो जाता है, उसे ही मानकर यहाँ भी समास सम्भव है] और इस प्रकार—ग्रामनिर्गतः [ग्रामात् निर्गतः—गाँव से निकला हुआ]। अधर्मजुगुप्सुः [अधर्मात् जुगुप्सुः—अधर्म से घृणा करने वाला]—आदि के समान लक्ष्य सिद्ध हो जाते हैं॥ ३७॥

अपेत, अपोढ, मुक्त, पतित, अपत्रस्त—इनके साथ पञ्चम्यन्त का समास होता है। और वह तत्पुरुष होता है। उदा०—(१) अपेत—सुखापेतः [सुखाद् अपेतः यह विग्रह है। सुख से दूर अर्थात् सुखरहित] (२) अपोढ—कल्पना-

अपेत—सुखापेतः। अपोढ—कल्पनापोढः। मुक्त—चक्रमुक्तः। पतित—स्वर्गपतितः। अपत्रस्त—तरङ्गापत्रस्तः। 'अल्पशः' इति समासस्याल्पविषयतामाचष्टे। अल्पा पञ्चमी समस्यते, न सर्वा। प्रासादात्पतितः, भोजनादपत्रस्तः—इत्येवमादौ न भवति। 'कर्तृकरणे कृता बहुलम्' (२.१.३२) इत्यस्यैवायं प्रपञ्चः॥

## ३६०. स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन ॥ ३९ ॥ (७०१)

स्तोक, अन्तिक, दूर—इत्येवमर्थाः शब्दाः कृच्छ्रशब्दश्च पञ्चम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। स्तोक—स्तोकान्मुक्तः। अन्तिक—अन्तिकादागतः। अभ्याशादागतः। दूरादागतः। विप्रकृष्टादागतः। कृच्छ्रान्मुक्तः। कृच्छ्राल्लब्धः। 'पञ्चम्याः स्तोकादिभ्यः' इत्यलुक्॥

* शतसहस्रौ परेणेति वक्तव्यम् *। शतात्परे परश्शताः। सहस्रात्परे परस्सहस्राः। राजदन्तादित्वात् परनिपातः, निपातनात् सुडागमः॥

### न्यासः

शस्। अल्पा पञ्चमी समस्यत इति। अल्पेभ्यः प्रातिपदिकेभ्यः उत्पन्ना या पञ्चमी सा समस्यते, न तु सर्वेभ्यः प्रातिपदिकेभ्य इत्यर्थः॥ ३८॥

स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन॥ स्तोकान्मुक्तः। कृच्छ्रान्मुक्त इति। 'करणे स्तोकाल्पकृच्छ्र' इत्यादिना पञ्चमी। अन्तिकादागतः, दूरादागत इति। 'दूरान्तिकार्थेभ्यो द्वितीया च' इत्यनेन॥ ३९॥

### पदमञ्जरी

(वा० ७२९) इति पुंवद्भावः। कारकत्वं तु समसनक्रियायां कर्मत्वात्। अत एव पञ्चमी समस्यत इति कर्मणि लकारः। तत्र तु बह्वल्पार्थान्मङ्गले वचनमिति वक्ष्यति। तस्मादत एव निपातनादत्र शसिति युक्तम्। अल्पा पञ्चमीति। अल्पाभ्यः प्रकृतिभ्य उत्पन्नेत्यर्थः॥ ३८-३९॥

### भावबोधिनी

पोढः [कल्पनायाः अपोढः यह विग्रह है। कल्पना से बाधित] (३) मुक्त—चक्रमुक्तः [चक्रात् मुक्तः यह विग्रह है। चक्र से मुक्त।] (४) पतित—स्वर्गपतितः [स्वर्गात् पतितः यह विग्रह है। स्वर्ग से गिरा हुआ] [५] अपत्रस्त—तरङ्गापत्रस्तः [तरङ्गेभ्यः अपत्रस्तः यह विग्रह है। तरङ्गों से फेंका हुआ]।

'अल्पशः' यह समास की अल्पविषयता को कहता है। अल्प = कुछ, पञ्चमी = पञ्चम्यन्तों का समास होता है, सभी का नहीं। [इसलिये] प्रासादात् पतितः, भोजनात् अपत्रस्तः—इस प्रकार के प्रयोगों में समास नहीं होता है। यह भी 'कर्तृकरणे कृता बहुलम्' (पा० सू० २।१।३२) का ही प्रपञ्च है।

विमर्श—'बह्वल्पार्थाच्छस् कारकाद् अन्यतरस्याम्' (पा० सू० ५।४।४२) से स्वार्थ में अल्प शब्द से पञ्चमी होती है। और 'शसि बह्वल्पार्थस्य' इससे पुम्वद्भाव करने पर 'अल्पशः' यह बनता है। अतः 'अल्पा एव अल्पशः' यह अर्थ है। इस कारण कुछ ही पञ्चम्यन्तों का अपेतादि के साथ समास होता है, सभी का नहीं—यह फलित होता है। इसका कार्य भी बहुलग्रहण से सम्भव है॥ ३८॥

स्तोक, अन्तिक और दूर इस प्रकार के अर्थों वाले शब्द और कृच्छ्र शब्द जो पञ्चम्यन्त हैं, उनका क्त प्रत्ययान्त के साथ समास होता है और वह तत्पुरुष समास होता है। (१) स्तोक - स्तोकान्मुक्तः [थोड़े से ही छूट गया]। (२) अन्तिक—अन्तिकादागतः [समीप से आया हुआ] अभ्याशादागतः [पास ही से ही आया हुआ] (३) दूर—दूरादागतः [दूर से आया] विप्रकृष्टादागतः [दूर से आया] कृच्छ्रान्मुक्तः [कष्ट से मुक्त] कृच्छ्राल्लब्धः [कष्ट से प्राप्त] [इन सभी में विग्रह वाक्य की पञ्चमी का 'पञ्चम्याः स्तोकादिभ्यः' (पा० सू० ६।३।२) इस सूत्र से अलुक् होता है। [अतः पञ्चमी रहती है।]

* शत और सहस्र का 'पर' शब्द के साथ समास होता है।* उदा०—शतात् परे—परश्शताः सहस्रात् परे—परस्सहस्राः। [एक सौ से अधिक, एक हजार से अधिक अर्थात् कई सौ, कई हजार] राजदन्तादि गण में होने के

## ३९१. सप्तमी शौण्डैः ॥ ४० ॥ (७१७)

सप्तम्यन्तं शौण्डादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। अक्षेषु शौण्डः अक्षशौण्डः। अक्षधूर्त्तः। अक्षकितवः।

शौण्ड। धूर्त्त। कितव। व्याड। प्रवीण। संवीत। अन्तर्। अन्तःशब्दस्त्वत्राधिकरणप्रधान एव पठ्यते। अधिपटु। पण्डित। कुशल। चपल। निपुण[1]। वृत्तौ प्रसक्तिक्रियाया अन्तर्भावादक्षादिषु अधिकरणे सप्तमी॥

### न्यासः

**सप्तमी शौण्डैः॥** शौण्डैरिति बहुवचननिर्देशाद्यर्थो गम्यत इत्याह—**शौण्डादिभिरिति**। केन पुनर्विहितायां सप्तम्यां तदन्तस्य शौण्डादिभिः समासो विधीयते? 'सप्तम्यधिकरणे च' इत्यनेनेति चेद्, वार्तमेतत्। तथा ह्यधिकरणं कारकम्, तच्च क्रियापेक्षम्। न चाक्षशौण्ड इत्यादौ वृत्तौ काचन क्रिया श्रूयते। तत् कुतोऽधिकरणस्येह सम्भवः? न च शक्यते वक्तुम्—अस्मादेव वचनाच्छौण्डादिभिर्योगे सप्तमी भविष्यतीति, देवदत्तः शौण्ड इत्यत्रापि प्रसङ्गः स्यादित्यत आह—**वृत्तावित्यादि**। अस्त्येवात्र प्रसक्तिक्रिया। सा तु समासार्थ एवान्त-

### पदमञ्जरी

**सप्तमी शौण्डैः॥** अत्र साहचर्याद् धूर्तादिष्वजहत्स्वार्थ एव शौण्डशब्दः प्रयुज्यते, यथा—छत्रिणो गच्छन्तीति। अत्र च प्रमाणं बहुवचननिर्देशः, अतोऽन्तरेणाप्यादिशब्दं तदर्थो गम्यते इत्याह—**शौण्डादिभिरिति**। गणपाठसामर्थ्यात्तु बहुवचननिर्देशोऽर्थनिर्देशार्थः, बहुवचनान्तस्य वा समासार्थं इति न भवति। ननु चाक्षशौण्ड इत्यादौ क्रियाया अश्रवणादधिकरणत्वं नोपपद्यते, न चान्यत्सप्तम्या निमित्तमस्ति। न चैतदेव ज्ञापकं शक्यमाश्रयितुम्; शौण्डो देवदत्त इत्यादावपि प्रसङ्गाद्, अत आह—**वृत्ताविति**। अन्तशब्दोऽत्र पठ्यते, तद्योगेऽन्तर्यावन आधारत्वविवक्षायां सप्तमी, यथा वृक्षे शाखेति, वनेऽन्तर्वनान्तः। अस्य विकल्पितत्वादव्ययीभावोऽपि भवति, अन्तर्वणम्, 'प्रनिरन्तः' इति णत्वम्। अधिशब्दः पठ्यते, तस्याधिकरणप्राधान्येऽव्ययीभावः—अधिस्त्रोतिः। आधेयप्राधान्ये ह्ययं तत्पुरुषः—ब्राह्मणाधानमिति। 'अध्युत्तरपदात्खः' इति खः। ब्राह्मणेष्वधीति वाक्यम्॥ ४०॥

### भावबोधिनी

कारण ['राजदन्तादिषु परम्' (पा० सू० २।२।३१) से 'शत' एवं 'सहस्र' का] पर निपात हो जाता है। और निपातनात् इनमें सुट् का आगम होता है। [परस्+शताः में श्चुत्व के कारण परश्शताः रूप होता है।]॥ ३९॥

सप्तम्यन्त का शौण्ड आदि के साथ समास होता है और वह तत्पुरुष समास होता है। उदा०—अक्षेषु शौण्डः [इस विग्रह में समास और विभक्ति लोप होने पर—अक्षशौण्डः [पांसा खेलने में चालाक] अक्षधूर्तः [पांसा क्रीडा में धूर्त] 'अक्षकितवः [पांसों का जुआरी]। [यहाँ बहुवचन के निर्देश से अर्थपरकता मान ली जाती है। अतः निम्न पर्याय शब्दों के साथ भी सप्तम्यन्त का समास होता है—] शौण्ड। धूर्त। कितव। व्याड। प्रवीण। संगीत। अन्तर्। यहाँ अन्तः शब्द अधिकरण शक्ति प्रधान ही पठित है। अधि पटु। पण्डित। कुशल। चपल। निपुण।

समासवृत्ति में प्रसक्ति क्रिया के अन्तर्भाव से अक्ष आदि में अधिकरण सप्तमी होती है।

**विमर्श**—क्रिया के रहने पर ही अधिकरण कारक मानकर सप्तमी का उपपादन हो सकता है और यहाँ किसी क्रिया का श्रवण नहीं हो रहा है। अतः 'प्रसक्ति' क्रिया का अन्तर्भाव मानना चाहिये-'अक्षेषु प्रसक्तः शौण्डः' यह तात्पर्य है। अक्ष विषयकक्रीडाकुशलः—यह अर्थ है। 'अन्तः' शब्द के साथ समास होने पर—वनेऽन्तः = वनान्तः। अव्यय के साथ भी समास होता है—अन्तर्वणम्—यह अव्ययीभाव होता है॥ ४०॥

---

१. संव्याड, मन्व, समीर—एते शब्दा अन्यत्र पुस्तकान्तरे दृश्यन्ते।

## ३९२. सिद्धशुष्कपक्वबन्धैश्च ॥ ४१ ॥ (७१८)

'सप्तमी' इति वर्तते। सिद्ध, शुष्क, पक्व, बन्ध—इत्येतैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति। सांकाश्यसिद्धः। काम्पिल्यसिद्धः। शुष्क—आतपशुष्कः। छायाशुष्कः। पक्व—स्थालीपक्वः। कुम्भीपक्वः। बन्ध—चक्रबन्धः। बहुलग्रहणस्यैवायमुदाहरणप्रपञ्चः॥

## ३९३. ध्वाङ्क्षेण क्षेपे ॥ ४२ ॥ (७१९)

'ध्वाङ्क्षेण' इत्यर्थग्रहणम्। ध्वाङ्क्षवाचिना सह सप्तम्यन्तं सुबन्तं समस्यते, तत्पुरुषश्च समासो

**न्यासः**

भूतेति गम्यमानत्वाद् वृत्तौ क्रियापदं न प्रयुज्यते। तस्या यत् साधनमधिकरणं तत्र सप्तमीत्यदोषः। अन्तः-शब्दस्त्वत्राधिकरणप्रधान एव पठ्यते। तस्य प्रयोगे तत्सामानाधिकरण्यमेव सप्तम्याः कारणम्। वनेऽन्तर्व-नान्तर्वसतीति पूर्वपदार्थप्राधान्ये तु 'विभक्त्यर्थे यदव्ययम्' इत्यव्ययीभाव एव भवति—अन्तर्वणमिति। अधि-शब्दोऽत्र पठ्यते, तस्याधिकरणप्राधान्ये सत्यव्ययीभावः—अधिस्त्रि। आधेयप्राधान्ये तु तत्पुरुषः—ब्राह्मणेष्वधि ब्राह्मणाधीन इति। ब्राह्मणाधिशब्दः केवलो न प्रयुज्यते। 'अषडक्षाशित' इत्यादिनाऽध्युत्तरपदात् स्वार्थिकस्य नित्यस्य खस्य विधानात्॥ ४०॥ **सिद्धशुष्कपक्वबन्धैश्च** ॥ ४१ ॥

**ध्वाङ्क्षेण क्षेपे** ॥ **ध्वाङ्क्षेणेत्यर्थग्रहणमिति**। अर्थप्रधानत्वान्निर्देशस्य। यत्र हि शब्दप्रधानो निर्देश-स्तत्र स्वरूपग्रहणं भवति, अन्यत्र त्वर्थग्रहणमेवेति प्रतिपादितमेतत् प्राक्। अर्थप्रधानत्वन्तु निर्देशस्याविच्छि-

**पदमञ्जरी**

**सिद्धशुष्कपक्वबन्धैश्च** ॥ **साङ्काश्यसिद्धः काम्पिल्यसिद्ध इति**। सङ्काशेन निर्वृत्तं वनं साङ्काश्यम्। कम्पिलेन निर्वृत्तं काम्पिल्यम्। चातुरर्थिकः सङ्काशादिभ्यो ण्यः। तत्र तपसा सिद्ध इत्यर्थः॥ ४१ ॥

**ध्वाङ्क्षेण क्षेपे** ॥ 'स्वं रूपं शब्दस्य' इति वचनात् पर्यायाणां न प्राप्नोतीत्यत आह—**ध्वाङ्क्षेणेत्यर्थ-ग्रहणमिति**। व्याख्यानाच्चैतदवसीयते। **तीर्थे ध्वाङ्क्ष इवेति**। उपमानोपमेयभावे सति क्षेपो गम्यते, नान्यथे-

**भावबोधिनी**

'सप्तमी' इसकी अनुवृत्ति होती है। सिद्ध, शुष्क, पक्व और बन्ध—इन शब्दों के साथ सप्तम्यन्त का समास होता है, और वह तत्पुरुष होता है। उदा०—(१) सांकाश्यसिद्धः [सांकाश्य वन में सिद्ध] काम्पिल्यसिद्धः [काम्पिल्य वन में सिद्ध] संकाश द्वारा बनाया गया वन 'सांकाश्यं वनम्'। कम्पिल द्वारा बनाया गया वन—काम्पिल्यं वनम्।'] (२) शुष्क—आतपशुष्कः [आतपे शुष्कः। धूप में सूखा हुआ] छायाशुष्कः [छायायां शुष्कः। छाया में सूखा हुआ। (३) पक्व—स्थालीपक्वः [स्थाल्यां पक्वः बटलोई में पकाया हुआ] कुम्भीपक्व [कुम्भ्यां पक्वः। कुम्भी में पकाया हुआ।] (४) बन्ध—चक्रबन्धः [चक्रे बन्धः। पहिये में बंधा हुआ] ['कर्तृकरणे कृता बहुलम्' (पा० सू० २।१।३२) इसके] बहुलग्रहण के ही यह उदाहरणों का प्रपञ्च = विस्तार है॥ ४१॥

'ध्वाङ्क्षेण' इसके अर्थ का ग्रहण है। [अर्थ ग्रहण में विद्वानों के व्याख्यान ही मूल हैं।] सप्तम्यन्त सुबन्त का ध्वाङ्क्षवाची के साथ समास होता है और वह तत्पुरुष होता है; यह क्षेप = निन्दा प्रतीत रहने पर ही होता है। उदा०—तीर्थे ध्वाङ्क्ष इव [इस विग्रह में समास होने पर] तीर्थध्वाङ्क्षः बनता है [तीर्थ = गुरुकुल आदि में नियमितरूप से रहकर अध्ययन न करने वाला, इधर-उधर घूमने वाला छात्र। इस प्रकार निन्दा प्रतीत होती है।] अनवस्थित—यह अर्थ है। तीर्थकाकः [तीर्थे काक इव]। तीर्थवायस [तीर्थे वायस इव]।

भवति, क्षेपे गम्यमाने । तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः । अनवस्थित इत्यर्थः । तीर्थकाकः । तीर्थवायसः ।
क्षेप इति किम् ? तीर्थे ध्वाङ्क्षस्तिष्ठति ॥

**३६४. कृत्यैर्ऋणे ॥ ४३ ॥ (७२०)**

'सप्तमी' इति वर्तते । कृत्यप्रत्ययान्तैः सह सप्तम्यन्तं समस्यते, तत्पुरुषश्च समासो भवति, ऋणे गम्यमाने । यत्प्रत्ययेनैवेष्यते । मासे देयमृणं मासदेयम् । संवत्सरदेयम् । त्र्यहदेयम् ।

**न्यासः**

त्वाचार्यपारम्पर्योपदेशाद् विज्ञायते । बहुलग्रहणानुवृत्तेरर्थस्येदं ग्रहणं वा । अपि च 'क्षेपे' इत्युच्यते, क्षेपश्चार्थकारित एवेत्यर्थग्रहणमेव युक्तम् । अर्थग्रहणे च सति ध्वाङ्क्षपर्यायैरपि समासो भवति, अत आह—**ध्वाङ्क्षवाचिनेत्यादि । तीर्थे ध्वाङ्क्ष इवेति ।** उपमानभावे सति ध्वाङ्क्षस्य क्षेपो गम्यते, नान्यथेति दर्शयितुमिवशब्दः प्रयुक्तः । समासे तु समास एवोपमानार्थस्यान्तर्भूतत्वादिवशब्दो गतार्थो न प्रयुज्यते । यथैव हि तीर्थध्वाङ्क्षाश्चिरं स्थातारो न भवन्ति, तद्वदन्योऽपि यः कार्यं प्रत्यनवस्थितः स 'तीर्थध्वाङ्क्षः' इत्युच्यते, यदाह—**अनवस्थित इत्यर्थः ।** कार्यं प्रत्यनवस्थितत्वमेव क्षेपः ॥ ४२ ॥

**कृत्यैर्ऋणे ॥ यत्प्रत्ययान्तेनैव समास इष्यत इति ।** कथं पुनर्यत्प्रत्ययेनैव लभ्यते ? अल्पशः इत्यनुवृत्तेः । **मासदेयमिति ।** पूर्ववद् यत्, ईत्वञ्च । सप्तमी ह्यत्रौपश्लेषिकेऽधिकरणे वेदितव्या । मासे ह्यतीते योऽन्तरो दिवसः स मासं प्रत्युपश्लिष्टो भवति, 'यस्य च भावेन भावलक्षणम्' इत्यनेन वा । मासातिक्रमणभावेन हि ऋणदानभावो लक्ष्यते ।

**पदमञ्जरी**

तीवशब्दः प्रयुक्तः यथा तीर्थे ध्वाङ्क्षा न चिरं स्थातारो भवन्ति, एवं कार्येष्वनवस्थितस्तीर्थध्वाङ्क्ष इत्यर्थः, तदाह—**अनवस्थित इत्यर्थ इति ।** वृत्तौ त्विवार्थस्यान्तर्भावादिवशब्दस्याप्रयोगः ॥ ४२ ॥

**कृत्यैर्ऋणे । यत्प्रत्ययान्तेनैवेष्यते इति ।** 'अल्पशः' इत्यनुवृत्तेरेतल्लभ्यते । कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम् ।

**भावबोधिनी**

क्षेप = निन्दा गम्यमान रहने पर—इसका क्या फल है ? तीर्थे ध्वाङ्क्षः तिष्ठति [तीर्थ में कौआ बैठता है । यह सामान्य अर्थ होने के कारण निन्दा नहीं प्रतीत है । अतः समास नहीं होता है ।]

**विमर्श**—प्रस्तुत सूत्र में 'ध्वाङ्क्ष' का केवल ग्रहण न करके इसके अर्थवाचक सभी शब्दों के साथ समास होता है । इसमें प्राचीन व्याख्याकारों की व्याख्यायें ही प्रमाण हैं । यहाँ उपमानोपमेयभाव के द्वारा ही निन्दा की प्रतीति सम्भव है । अतः विग्रह में 'इव' शब्द का प्रयोग किया जाता है । जिस प्रकार तीर्थ स्थलों पर कौआ अधिक समय तक स्थिर नहीं रहते हैं इधर-उधर उड़ा करते हैं, उसी प्रकार जो छात्र एक गुरुकुल में समुचित ढंग से न रहकर अध्ययन सम्पादित नहीं करता है, उसे तीर्थध्वाङ्क्ष कहा जाता है । इसका फलितार्थ है—अनवस्थित चित्तवाला ॥ ४२ ॥

'सप्तमी' इसकी अनुवृत्ति होती है । कृत्यप्रत्ययान्तों के साथ सप्तम्यन्त का समास होता है और वह तत्पुरुष होता है, यदि ऋण अर्थ प्रतीयमान रहता हो तो । ['अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' (पा० सू० २।१।३८) सूत्र से 'अल्पशः' की अनुवृत्ति करके 'कृत्यैः' के साथ उसका सम्बन्ध किया जाता है अतः] केवल यत् प्रत्यय = कृत्यप्रत्यय के साथ ही समास इष्ट है । उदा०—मासे देयम् ऋणम्—[इस विग्रह में समास करने पर] मासदेयम् [एक महीना के

**ऋणग्रहणं नियोगोपलक्षणार्थम्, तेनेहापि समासो भवति—पूर्वाह्णेगेयं साम। प्रातरध्येयोऽनुवाकः। ऋण इति किम्? मासे देया भिक्षा॥**

**३६५. संज्ञायाम्॥ ४४॥ (७२१)**

**संज्ञायां विषये सप्तम्यन्तं सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। संज्ञा = समुदायोपाधिः। तेन नित्यसमास एवायम्, न हि वाक्येन संज्ञा गम्यते। अरण्येतिलकाः। अरण्येमाषाः। वनेकिंशुकाः। वनेबिल्वकाः। कूपेपिशाचकाः। 'हलदन्तात्सप्तम्याः संज्ञायाम्' इत्यलुक्॥**

**न्यासः**

अथ ऋण इत्युच्यते, तत्रेदं न सिध्यति—पूर्वाह्णेगेयं साम, प्रातरध्येयोऽनुवाकः, इत्यत आह—**ऋणमित्यादि**। ऋणं हि नियोगतो निर्यातयितव्यमिति नियोगसहचरितम्। अतः साहचर्यात् तेन नियोगोऽवश्यम्भाव उपलक्ष्यते। एतच्च 'कृत्यैः' इति बहुवचननिर्देशाल्लिङ्गाद् गम्यते। कथम्? 'कृत्यैः' इति बहुवचनमत्र विवक्षितम्, तच्च ऋणग्रहणस्य नियोगोपलक्षणार्थत्वे प्रकृतिभेदेन भिद्यमाने कृत्ये सति प्रसज्यते, न त्वन्यथा। यत्प्रत्ययस्यैकत्वात् तेनैव समासस्येष्टत्वात्॥ ४३॥

**संज्ञायाम्॥ समुदायोपाधिरिति**। 'संज्ञायाम्' इति नेदं पूर्वपदस्योत्तरपदस्य वा विशेषणम्, किं तर्हि? समुदायस्य—समुदायेन चेत् संज्ञा गम्यत इति। किमेवं सति सिध्यतीत्यत आह—**तेनेत्यादि**। अत्रैवोपपत्तिमाह—**न हीत्यादि**॥ ४४॥

**पदमञ्जरी**

**ऋणग्रहणं च नियोगोपलक्षणार्थमिति**। नियोगः=अवश्यम्भावः। ऋणमवश्यदेयमिति नियोगसाहचर्यान्नियोगमात्रमुपलक्षयति। तेन किं सिद्धं भवतीत्याह—**इहापीति**। **पूर्वाह्णेगेयमिति**। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। यथा ऋणमवश्यं देयम्, एवमिदमपि पूर्वाह्णेऽवश्यं गेयमिति नियोगोऽस्ति॥ ४३-४४॥

**भावबोधिनी**

भीतर ही दिया जाने वाला ऋण], संवत्सरदेयम् [संवत्सरे देयम्], त्र्यहदेयम् [त्र्यहे देयम्। तीन दिनों में दिया जाने वाला ऋण]।

ऋणग्रहण नियोग के उपलक्षणार्थ है। [नियोग = अवश्य होना। जिस प्रकार ऋण वापस करना आवश्यक होता है, उसी प्रकार जो भी आवश्यक होता है उसे ऋणतुल्य मानकर समास होता है।] इस कारण यहाँ भी समास होता है—पूर्वाह्णेगेयम [पूर्वाह्णे गेयम्—यह विग्रह है। समास होने पर 'तत्पुरुषे कृति बहुलम्' (पा० सू० ६.३.१४) से सप्तमी का अलुक् होने से समास में भी सप्तमी का श्रवण होता है। पूर्वाह्ण में गाया जाने योग्य सामवेद] प्रातरध्येयः अनुवाकः [प्रातःकाल पढ़ने योग्य अनुवाक। यहाँ समास करने पर एक पद और एक स्वर होता है।]

ऋण की प्रतीति रहने पर—यह किस लिये है? मासे देया भिक्षा। [भीख ऋण के समान देना अनिवार्य नहीं होती है। अतः समास नहीं होता।

**विमर्श**—कृत्य प्रत्ययों में केवल 'यत्' प्रत्यय ही लिया जाता है। ऋण का तात्पर्य ऋण के समान जो भी आवश्यक होता है, उसको मानकर समास होता है। अतः अन्य स्थलों पर भी समास होता है॥ ४३॥

संज्ञा की प्रतीति में सप्तम्यन्त का सुबन्त के साथ समास होता है, और वह तत्पुरुष समास होता है। संज्ञा—यह समुदाय की उपाधि है, [अतः समास करके समुदाय से संज्ञा अर्थ की प्रतीति होनी चाहिये।] इसलिये यह

### ३९६. क्तेनाहोरात्रावयवाः ॥ ४५ ॥ (७२२)

अहरवयवाः, रात्र्यवयवाश्च सप्तम्यन्ताः क्तान्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति। पूर्वाह्णकृतम्। अपराह्णकृतम्। पूर्वरात्रकृतम्। अपररात्रकृतम्।

अवयवग्रहणं किम्? एतत्तु ते दिवा वृत्तं रात्रौ वृत्तं च द्रक्ष्यसि[1]। अहनि भुक्तम्। रात्रौ वृत्तम्। बहुलग्रहणाद् रात्रिवृत्तम्, संध्यागर्जितमित्यादयः ॥

#### न्यासः

क्तेनाहोरात्रावयवाः ॥ एतत् तु ते दिवावृत्तं रात्रौ वृत्तञ्च द्रक्ष्यसीत्यादि। नात्राहरवयवाः रात्र्यवयवाश्च सन्ति, किं तर्हि? कृत्स्नमेवाहः, कृत्स्ना च रात्रिरिति, तेनेह समासो न भवति ॥ ४५ ॥

#### पदमञ्जरी

क्तेनाहोरात्रावयवाः ॥ दिवा वृत्तमिति। ऐकपद्यमैकस्वर्यं च न भवति। ननु च दिवाशब्दोऽधिकरणशक्तिप्रधानः, तत्राभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति प्रथमैवास्माद्भवति, अतः सप्तम्यभावादेवात्राप्रसङ्गः। नैषोऽस्ति नियमः—अधिकरणशक्तिप्रधान इति; दिवामन्या रात्रिरित्यपि दर्शनात्। कथं 'रात्रिवृत्तमनुयोक्तुमुद्यत्' (कुमार० ८.१०) इति? 'कर्तृकरणे कृता बहुलम्' इति मन्यते। एवं चान्यजन्मकृतमित्याद्यपि भवति ॥ ४५ ॥

#### भावबोधिनी

नित्य समास ही है, क्योंकि वाक्य से संज्ञा की प्रतीति नहीं होती है। उदा०—अरण्येतिलकाः, अरण्ये तिलकाः—यह विग्रह है। जंगली तिल] अरण्ये माषा [जंगली उड़द]। वनेकिंशुकाः ] जंगली टेसू के फूल]। वनेविल्वका [जंगली बेल]। कूपेपिशाचका. [कुआँ पर के भूत]। सभी उदाहरणों में 'हलदन्तात् संज्ञायाम्' (पा० सू० ६।३।९) से सप्तमी का अलुक् होता है। [अतः समास करने पर भी विभक्ति का श्रवण होता है] ॥ ४४ ॥

दिन के अवयववाची और रात के अवयववाची सप्तम्यन्त शब्दों का क्त प्रत्ययान्त के साथ समास होता है और वह तत्पुरुष होता है। उदा०—पूर्वाह्णकृतम् [पूर्वाह्णे कृतम्—यह विग्रह है। दिन के पूर्वभाग में किया गया] अपराह्णकृतम् [अपराह्णे कृतम्। दिन के उत्तरार्ध में किया गया] पूर्वरात्रकृतम् [पूर्वरात्रेकृतम्—यह विग्रह है। 'पूर्वरात्रि' में समास करने पर अच् प्रत्यय हो जाने से इ लोप करने पर 'पूर्वरात्र' बनता है। रात्रि के पूर्वभाग में किया गया।] अपररात्रकृता रात्रि के उत्तरार्ध में किया गया।]

अवयवग्रहण का क्या फल है—'यह तो तुम्हारा दिन में किया हुआ है और रात्रि में किए हुए को देखोगे।'

[यहाँ दिन और रात्रि के अवयवों की प्रतीति नहीं होती है अपितु सम्पूर्ण दिन और रात्रि की प्रतीति होती है। अतः समास नहीं होता है।]

अहनिभुक्तम्। [दिन में खाया।] रात्रौ वृत्तम् रात में किया हुआ [यहाँ भी समास नहीं होता है]

['कर्तृकरणे कृता बहुलम्' (पा० सू० २।१।३२) से 'बहुल' की अनुवृत्ति के कारण [यहाँ समास होता है—] रात्रिवृत्तम्, सन्ध्यागर्जितम् [रात में हुआ। सन्ध्या में गर्जन] आदि ॥ ४५ ॥

---

१. 'उलूखलैराभरणैः पिशाची यदभाषत' इत्यस्य पद्यस्य पूर्वांशः।

### ३६७. तत्र ॥ ४६ ॥ (७२३)

'तत्र' इत्येतत् सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । तत्रभुक्तम् । तत्रकृतम् । तत्रपीतम् । ऐकपद्यमैकस्वर्यं च समासत्वाद् भवति ॥

### ३६८. क्षेपे ॥ ४७ ॥ (७२४)

क्षेपः = निन्दा । क्षेपे गम्यमाने सप्तम्यन्तं क्तान्तेन सह समस्यते, तत्पुरुषश्च समासो भवति । अवतप्ते-नकुलस्थितं तवैतत् । चापलमेतत् । अनवस्थितत्वं तवैतदित्यर्थः । उदकेविशीर्णम् । प्रवाहेमूत्रितम् । भस्मनि-हुतम् । निष्फलं यत्क्रियते तदेवमुच्यते । 'तत्पुरुषे कृति बहुलम्' (६.३.१४) इत्यलुक् ॥

न्यासः

तत्र ॥ तत्रेत्येतत् सप्तम्यन्तमिति । सप्तमीसाधर्म्यात् त्रल्प्रत्यय एवात्र सप्तमीशब्देनोक्तः । भवति हि ताद्धर्म्यात् ताच्छब्द्यम्, यथा—गौर्वाहीक इति । सप्तमीसाधर्म्यं पुनस्त्रलोऽधिकरणार्थत्वात् । यथैव ह्यधि-करणप्रत्यायनाय सप्तमी प्रयुज्यते, तथा त्रल्पि । अथ मुख्यैव सप्तमी विभक्तिः कस्मान्न विज्ञायते ? तस्यास्तत्र शब्देऽसम्भवात् । असम्भवस्तु त्रलैव तदर्थस्य द्योतितत्वात् । अन्यस्त्वाह—यदा विभक्त्यादेशास्त्रलादयस्तदा स्थानिवद्भावेनैवैतत् सप्तम्यन्तं भवति । आदेशपक्षस्तु तत्र वृत्तिकृता नाश्रित इत्यसम्यगेतत् । अन्तशब्दश्चात्रा-वयववचनः । सप्तमीत्रल्प्रत्ययोऽन्तोऽवयवो यस्य तत् तथोक्तम् ॥ ४६ ॥

क्षेपे ॥ अवतप्तेनकुलस्थितमिति । 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुक् । कः पुनरत्र क्षेपः ? कार्येष्वनवस्थितता । यदाह—एतच्चापलमित्यादि । यथा अवतप्ते देशे नकुला न चिरं स्थातारो भवन्ति, तद्वदन्योऽपि योऽर्थानारभ्य न चिरं तेष्ववतिष्ठते तं प्रतीदमुच्यते—अवतप्तेनकुलस्थितमिति । उदकेविशीर्ण-मित्यादावप्यारम्भस्य निष्फलता क्षेपः । अत एवाह—निष्फलं यत् क्रियते तदेवमुच्यत इति । प्रवाहेमूत्रित-मिति । 'मूत्र प्रस्रवणे' चुरादिः ॥ ४७ ॥

पदमञ्जरी

तत्र ॥ तत्रेत्येतत्सप्तम्यन्तमिति । तत्रभवानित्यादौ विभक्त्यन्तरेऽपि दर्शनादधिकरणप्रतिपादने तत्रशब्दादपि सप्तम्येवापेक्ष्येति मन्यते ॥ ४६ ॥

क्षेपे ॥ अवतप्तेनकुलस्थितं तवैतदिति चिरन्तनप्रयोगः, तस्यार्थमाह—चापलमेतत्तवेत्यर्थ इति । यथा अवतप्ते प्रदेशे नकुला न चिरं स्थातारो भवन्ति, एवं कार्याण्यारभ्य यश्चापलेन न चिरं तिष्ठति स एव-मुच्यत इत्यर्थः । 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' (व्या० परि० १२६) इति नकुलस्थितशब्देन समासः, पूर्ववदलुक् ॥ ४७॥

भावबोधिनी

'तत्र' इस सप्तम्यन्त [अव्यय] का 'क्त'-प्रत्ययान्त के साथ समास होता है और वह तत्पुरुष होता है । उदा० - तत्रभुक्तम् [वहाँ खाया] । तत्रकृतम् [वहाँ किया] । तत्रपीतम् [वहाँ पिया] । इसमें समास होने के कारण एक पद होता है और [समुदाय का] एक स्वर होता है ।

विमर्श—तत्रभवान् आदि प्रयोगों में अन्य अर्थों में भी 'तत्र' शब्द का प्रयोग देखा जाता है । अतः नियमित करने के लिये 'सप्तमी' का सम्बन्ध है—सप्तम्यन्त जो तत्र ॥ ४६ ॥

क्षेप = निन्दा । क्षेप = निन्दा प्रतीयमान रहने पर सप्तम्यन्त का क्त-प्रत्ययान्त के साथ समास होता है और वह तत्पुरुष समास होता है । उदा० – अवतप्तेनकुलस्थितं तव एतत् [गरम स्थान पर जैसे नकुल = नेवला नहीं बैठता है, इधर-उधर भागता रहता है उसी प्रकार तुम्हारा भी आचरण चंचल है] तुम्हारी यह चपलता है, अवस्थित न होना है, यह अर्थ है । उदकेविशीर्णम् [पानी में सड़े हुए के समान] । प्रवाहेमूत्रितम् [जलधारा में मूत्र करने के

**३९९. पात्रेसमितादयश्च ॥ ४८ ॥ (७२५)**

**समुदाया एव निपात्यन्ते। पात्रेसमितादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति, क्षेपे गम्यमाने। ये चात्र क्तान्तेन सह समासास्तेषां पूर्वेणैव सिद्धे पुनः पाठो युक्तारोह्यादिपरिग्रहार्थः—पूर्वपदाद्युदात्तत्वं यथा स्यादिति। युक्तारोह्यादिषु हि पात्रेसमितादयश्चेति पठ्यन्ते। पात्रेसमिताः। पात्रेबहुलाः। अवधारणेन क्षेपो गम्यते—पात्र एव समिता न पुनः क्वचित्कार्य इति। उदुम्बरमशकादिषु उपमया क्षेपः। मातरिपुरुष इति प्रतिषिद्धसेवनेन। पिण्डीशूरादिषु निरीहतया। अव्यक्तत्वाच्चाकृतिगणोऽयम्।**

न्यासः

**पात्रेसमितादयश्च ॥ युक्तारोह्यादिपरिग्रहार्थ इति।** युक्तारोह्यादिषु युक्तारोह्यादिभिर्वा परिग्रहोऽर्थः प्रयोजनं यस्य पाठस्य स तथोक्तः। किमर्थं पुनर्युक्तारोह्यादिषु परिग्रहस्तेषामिष्यत इत्याह—**पूर्वपदाद्युदात्तत्वं यथा स्यादिति।** युक्तारोह्यादीनां हि 'युक्तारोह्यादयश्च' इत्यनेन पूर्वपदाद्युदात्तत्वं विधीयते। तत्र यदि ये क्तान्तास्ते न पठ्येरन्, तदा तेषामाद्युदात्तत्वं न स्यात्। कथं पुनः पात्रेसमितादयो युक्तारोह्यादिग्रहणेन गृह्यन्ते; यतस्तेषां विधीयमानमाद्युदात्तत्वं पात्रेसमितादीनामपि भवतीत्याह—**युक्तारोह्यादिषु हीत्यादि। उदुम्बरम-**

पदमञ्जरी

**पात्रेसमितादयश्च ॥ युक्तारोह्यादिपरिग्रहार्थमिति।** युक्तारोह्यादयश्चेत्यत्रैषामपि परिग्रहो यथा स्यादित्यर्थः। **पात्र एव समिता इति।** भोजनसमय एव सङ्गता इत्यर्थः। **पात्रेबहुला इति।** भोजनसमय एव सङ्घीभवन्ति, नान्यकार्य इत्यर्थः। **उदुम्बरमशकादिष्विति।** यस्तत्रैव तृप्तो नास्मात्परमस्तीति मन्यते, सोऽयमदृष्टविस्तारः पुरुष उदुम्बरमशकादिरुच्यत इत्यर्थः। **प्रतिषिद्धसेवनेनेति।** शत्रुषु भार्यायां वा पुरुषायितव्यम्, मातरि पुरुषायितं प्रतिषिद्धम्। **निरीहतयेति।** पिण्डी=ओदनपिण्डः, तत्रैव शूरो नान्यत्रेति

भावबोधिनी

समान]। भस्मनिहुतम् [राख में हवन करने के समान]। जो निष्फल कार्य किया जाता है उसके लिये ऐसा कहा जाता है। [इसके उदाहरणों में] 'तत्पुरुषे कृति बहुलम्' (पा० सू० ६।३।१४) से सप्तमी का अलुक् होता है। [अतः समास में भी विभक्ति सुनाई देती है।]

**विमर्श**—जहाँ किसी पद से निन्दा की प्रसिद्धि रहती है, वहाँ यदि क्तान्त और सप्तम्यन्त पद हों तो समास करके प्रयोग होता है।

यद्यपि केवल 'स्थित' शब्द ही क्तान्त है, 'नकुलस्थित' नहीं, तथापि 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इस परिभाषा के बल से कारकविशिष्ट को भी कृद् मान लिया जाता है। अतः 'नकुलस्थित' के साथ भी समास में कोई बाधा नहीं है ॥ ४७ ॥

समुदायों का ही निपातन किया जाता है। क्षेप - निन्दा प्रतीत होने पर 'पात्रेसमित' आदि शब्दों की तत्पुरुष संज्ञा होती है। जिन शब्दों का यहाँ क्तप्रत्ययान्त के साथ समास है, उनका तो पूर्वसूत्र ['क्षेपे'] से ही सिद्ध है इस स्थिति में पुनः पाठ 'युक्तारोही' आदि में परिग्रहण के लिये है—जिससे पूर्वपद का आदि उदात्त हो सके। क्योंकि 'युक्तारोही' आदि में 'पात्रेसमित' आदि शब्द पठित हैं। [अतः युक्तारोही के समान इनका भी स्वर हो जायगा।] उदा०—पात्रेसमिताः [भोजन के समय ही एकत्रित होने वाले।] पात्रेबहुलाः [भोजन के अवसर पर ही आने वाले, काम के समय नहीं] (१) अवधारण के द्वारा क्षेप = निन्दा की प्रतीति होती है—पात्र = भोजन काल में ही एकत्रित होने वाले, किन्तु किसी काम के समय न आने वाले।' (२) उदुम्बरमशकादि में उपमा से क्षेप की प्रतीति होती है। (३) मातरिपुरुषः—यहाँ प्रतिषिद्ध के सेवन से [निन्दा की प्रतीति होती है]। (४) पिण्डीशूर आदि में निरीहता [किसी प्रकार की इच्छा न होना] से [निन्दा की प्रतीति]। अव्यक्त होने से यह आकृतिगण है।

पात्रेसमिताः । पात्रेबहुलाः । उदुम्बरमशकाः । उदरक्रिमिः । कूपकच्छपः । कूपचूर्णकः । अवटकच्छपः । कूपमण्डूकः । कुम्भमण्डूकः । उदपानमण्डूकः । नगरकाकः । नगरवायसः । मातरिपुरुषः । पिण्डीशूरः । गेहेशूरः । गेहेनर्दी । गेहेक्ष्वेडी । गेहेविजिती । गेहेव्याडः । गेहेदृप्तः । गेहेधृष्टः । गर्भेतृप्तः । आखनिकबकः । गोष्ठेशूरः । गोष्ठेविजिती । गोष्ठेक्ष्वेडी । गेहेमेही । गोष्ठेपटुः । गोष्ठेपण्डितः । गोष्ठेप्रगल्भः । कर्णेटिट्टिभः । कर्णेचुरचुरा । चकारोऽवधारणार्थः, तेन समासान्तरं न भवति—परमपात्रेसमिता इति ।

**न्यासः**

शकादिषूपमया क्षेप इति । यस्तत्रैवावरुद्धो न क्वचिद् गच्छति तमेव विशिष्टं मन्यते—नास्मात् परमस्तीति, सोऽदृष्टविस्तार उच्यत उदुम्बरमशक इति । एवमन्यत्राप्युपमानात् क्षेपः । प्रतिषिद्धसेवनेनेति । यः कश्चित् प्रतिषिद्धमाचरति स मातरिपुरुष इत्युच्यते । निरीहतयेति । यो न किञ्चित् कर्तुं समर्थः स पिण्डीशूर इत्येवमादिभिः पदैरभिधीयते । चकारोऽवधारणार्थ इति । पात्रेसमितादय एव यथा स्युः, यदन्यत् समासान्तरं तेषां प्राप्नोति तन्मा भूदिति । तेन परमपात्रेसमिता इति 'सन्महत्' इत्यादिना समासान्तरं न भवति ॥ ४८ ॥

**पदमञ्जरी**

निरीहता । परमपात्रेसमिता इति । एवंरूपं वृत्त्यन्तरं न भवति, परमाः पात्रेसमिता इति वाक्यमेव भवतीत्यर्थः ॥ ४८ ॥

**भावबोधिनी**

[इस गण में पठित शब्द]—पात्रेसमिताः । [कहीं-कहीं सम्मिताः यह पाठ है । इसका औचित्य चिन्तनीय है ।] पात्रेबहुलाः । उदुम्बरमशकाः [गूलर के मच्छर] । उदरक्रिमिः । [पेट का कीड़ा] । कूपकच्छपः [कुआँ का कछुआ] । कूपचूर्णकः [कुआँ का चूर्णक] । अवटकच्छपः [गड्ढे का कछुआ] । कूपमण्डूकः [कूआँ का मेढक] । कुम्भमण्डूकः [घड़े का मेढक] । उदपानमण्डूकः [ पानी पीने वाला मेढक] । नगरकाकः [शहर का कौआ] । नगरवायसः [शहर का कौआ] । मातरिपुरुषः [माता में पुरुष के समान दुराचार करने वाला] । पिण्डीशूरः [खाने में बहादुर, कुछ भी न करने वाला] । गेहेशूरः [घर में बहादुर] । गेहेनर्दी [घर में गरजने वाला] । गेहेक्ष्वेडी [घर में दहाड़ने वाला] । गेहेविजिती [घर में जीतने वाला] । गेहेव्याडः [घर में चतुर] । गेहेदृप्तः [घर में दृप्त] । गेहेधृष्टः [घर में ढीठ] । गर्भेतृप्तः [गर्भ में सन्तुष्ट] । आखनिकबकः [आखनिक में बकुला] । गोष्ठेशूरः [गोष्ठ में शूर] । गोष्ठेविजिती [गोष्ठ में जीतने वाला] । गोष्ठेक्ष्वेडी [गोष्ठ में दहाड़ने वाल] । गेहेमेही [घर में बरने वाला] । गोष्ठेपटुः [गोष्ठ में पटु] । गोष्ठेपण्डितः [गोष्ठ में पण्डित] । गोष्ठे प्रगल्भः [गोष्ठ में प्रगल्भ] । कर्णेटिट्टिभः [कान में टिटहरी = जन्तुविशेष] । कर्णेचुरचुरा [कान में कहने वाला] ।

चकार अवधारण के लिये है अर्थात् 'पात्रेसमिता' आदि ही होते हैं इसके लिये सूत्र में 'च' है । इस कारण और दूसरा समास नहीं होता है परमपात्रे समिताः ।

**विमर्श**—इस गणपाठ में कुछ क्तान्त शब्द भी हैं । उनका समास पहले वाले 'क्षेपे' इस सूत्र से सम्भव था परन्तु यहाँ स्वर की दृष्टि से पाठ है । 'युक्तारोह्यादयश्च' (पा० सू० ६।२।८१) में पात्रेसमित आदि को भी युक्तारोह्यादि के अन्तर्गत मान लिया गया है । अतः पूर्वपद का आद्युदात्त करने के लिये इसमें क्तान्त और इससे भिन्न शब्दों वाले पदों का समास किया गया है । इस गण में जिनका पाठ है उनमें कहीं (१) अवधारण से, कहीं (२) उपमा = सादृश्य से, कहीं (३) प्रतिषिद्ध के सेवन से और कहीं (४) निरीहता=किसी कार्य करने की शक्ति के अभाव से निन्दा की प्रतीति हो जाती है । निन्दा की प्रतीति में ही समासविधान है । सूत्र में प्रयुक्त चकार को अवधारण के लिये माना गया है । इस कारण इनका जैसा रूप पठित है वैसा ही समास होता है अन्य किसी शब्द के साथ घटकतया इनका समास नहीं होता है जैसे—परमाः पात्रेसमिताः—यह वाक्य ही होता है, 'परमपात्रेसमिताः' यह समास नहीं होता है । आकृतिगण मान लेने के कारण अपठित क्षेपवाची शब्दों का भी समास सम्भव है ॥ ४८ ॥

## ४००. पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ ४९ ॥ (७२६)

'सुप्' 'सुपा' इति वर्त्तते, तस्य विशेषणमेतत्। पूर्वकाल, एक, सर्व, जरत्, पुराण, नव, केवल— इत्येते सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते, तत्पुरुषश्च समासो भवति। भिन्नप्रवृत्तिनिमित्तस्य शब्दस्यैकस्मिन्नर्थे वृत्तिः=सामानाधिकरण्यम्। 'पूर्वकाल' इत्यर्थनिर्देशः, परिशिष्टानां स्वरूपग्रहणम्। पूर्वकालोऽपरकालेन समस्यते। स्नातानुलिप्तः। कृष्टसमीकृतम्। दग्धप्ररूढम्। एकशाटी। एकभिक्षा। सर्वदेवाः। सर्वमनुष्याः। जरद्धस्ती। जरद्गृष्टिः। जरद्वृत्तिः। पुराणान्नम्। पुराणावसथम्। नवान्नम्। नवावसथम्। केवलान्नम्।

### न्यासः

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ भिन्नप्रवृत्तिनिमित्तप्रयुक्तस्येत्यादि।** भिन्नप्रवृत्तिनिमित्तग्रहणं पर्यायनिवृत्त्यर्थम्। एकग्रहणं गौरश्व इत्यादिनिवृत्त्यर्थम्। **पूर्वकाल इत्यर्थनिर्देश** इति। अर्थप्रधानत्वान्निर्देशस्य। तेन स्वरूपग्रहणं न भवतीति भावः। **परिशिष्टानां स्वरूपग्रहणमिति।** शब्दप्रधानत्वान्निर्देशस्य। **पूर्वकालोऽपरकालेनेति।** कुतः पुनरनुक्तोऽप्येषोऽर्थविशेषो लभ्यते; सम्बन्धिशब्दत्वात् पूर्वकालस्य? न ह्यनपेक्ष्यापरकालं पूर्वकालः सम्भवति, अतः पूर्वकालपरिग्रहे कृते सत्यपरकालस्यापि परिग्रहः कृत एव। **स्नातानुलिप्त इति।** पूर्वं स्नातः पश्चादनुलिप्त इत्यत्र स्नातशब्दः स्नानेन निमित्तेन प्रयुक्तः, अनुलिप्त-

### पदमञ्जरी

**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन ॥ भिन्नप्रवृत्तिनिमित्तस्येत्यादि।** भिन्नग्रहणं पर्यायनिवृत्त्यर्थम्। एकग्रहणं गौरश्व इत्यादिनिवृत्त्यर्थम्। क्वचिद् **भिन्ननिमित्तप्रयुक्तस्येति** पाठः, भिन्नेन निमित्तेन प्रवृत्तिनिमित्तेन प्रवर्त्तितस्येत्यर्थः। 'विशेषणं विशेष्येण' इति सिद्धे पूर्वकालादीनां पूर्वनिपातार्थं वचनम्, एकशब्दस्य तु 'दिक्संख्ये संज्ञायाम्' इति नियमात् प्राप्त्यर्थमेव। **पूर्वकाल इत्यर्थग्रहणमिति।** पूर्वः कालोऽस्य पूर्वकालः, पूर्वमनुष्ठित इत्यर्थः। स च चरमानुष्ठितमपेक्ष्य भवतीत्यर्थात्तेनैव समासो विज्ञायत इत्याह— **परकालेनेति। स्नातानुलिप्त** इति। पूर्वं स्नातः पश्चादनुलिप्त इत्यर्थः। अत्र क्रियाशब्दत्वात् पाचकपाठकादिवत्पूर्वनिपातः पर्यायात्स्यात्। **एकशाटीति।** शाटशब्दाज्जातिलक्षणो ङीष्, 'एकतद्धिते च' इति ह्रस्वः।

### भावबोधिनी

'सुप्' और 'सुपा' इनकी अनुवृत्ति होती है। [इनमें सूत्रघटक प्रथमान्त शब्द 'सुप्' का और तृतीयान्त 'सुपा' का विशेषण बनता है।] उनका यह विशेषण है। पूर्वकाल, एक, सर्व, जरत्, पुराण, नव, केवल इतने सुबन्त शब्दों का समानाधिकरण [समानार्थवाचक] सुबन्त के साथ समास होता है, और वह तत्पुरुष होता है। भिन्न-भिन्न प्रवृत्ति-निमित्त वाले शब्दों की एक अर्थ में वृत्ति = सामानाधिकरण्य होता है। 'पूर्वकाल' यह अर्थ का निर्देश है अर्थात् अर्थपरक है शेष का स्वरूपग्रहण किया जाता है। पूर्वकालवाची का अपरकालवाची के साथ समास होता है। उदा०—स्नातानुलिप्तः। [पूर्वं स्नातः पश्चाद् अनुलिप्तः। पहले नहाया, बाद में धूलि आदि लपेट ली।] कृष्टसमीकृतम् [पूर्वं कृष्टं पश्चात् च समीकृतम्। पहले जोता बाद में बराबर किया।] दग्धप्ररूढम् [पूर्वं दग्धं पश्चात् च प्ररूढम्। पहले जल गया, बाद में उग आया। इन सभी में पूर्वकाल और उत्तरकाल वाचकों का समास है।] एकशाटी [एक ही साड़ी] एकभिक्षा [एक ही भिक्षा]। सर्वदेवाः [सभी देवता]। सर्वमनुष्याः [सभी मनुष्य]। जरद्धस्ती [जरत् चासौ हस्ती च। बूढ़ा हाथी]। जरद्गृष्टिः [बूढ़ी एक बार ब्यायी गाय] जरद्वृत्तिः। [पुरानी वृत्ति] पुराणान्नम् [पुराना अनाज]। पुराणावसथम् [पुरानी वस्ती] नवान्नम् [नया अन्न]। नवावसथम् [नयी बस्ती]। केवलान्नम् [केवल अन्न]।

समानाधिकरण के साथ—इसका क्या प्रयोजन है? एकस्याः शाटी। [एक स्त्री की साड़ी] [वास्तव में षष्ठी-समास होता है। अतः 'एकस्याः शौक्ल्यम्' आदि प्रत्युदाहरण देने चाहिये जहाँ षष्ठी समास भी नहीं होता है।]

समानाधिकरणेनेति किम् ? एकस्याः शाटी ।

**४०१. दिक्संख्ये संज्ञायाम् ॥ ५० ॥ (७२७)**

'समानाधिकरणेन' इत्यापादसमाप्तेरनुवर्त्तते । दिग्वाचिनः शब्दाः संख्या च समानाधिकरणेन सुबन्तेन सह समस्यन्ते, तत्पुरुषश्च समासो भवति, संज्ञायां विषये । पूर्वेषुकामशमी । अपरेषुकामशमी । संख्या—पञ्चाम्राः । सप्तर्षयः ।

संज्ञायामिति किम् ? उत्तरा वृक्षाः । पञ्च ब्राह्मणाः ॥

### न्यासः

शब्दोऽनुलेपनेन; तयोश्चैकत्रार्थे वृत्तिरित्यस्ति सामानाधिकरण्यम् । **एकशाटीति** । एका चासौ शाटी चेति 'पुंवत्कर्मधारय' इत्यादिना पुंवद्भावः ॥ ४९ ॥

**दिक्संख्ये संज्ञायाम् ॥ पूर्वेषुकामशमीत्यादिर्ग्रामाणां** संज्ञा । पूर्वा चासाविषुकामशमी चेति पूर्वेषुकामशमी । मन्दधियां पूर्वोत्तरपदविभागमात्रप्रदर्शनार्थं वाक्यं कृतम् । न ह्यत्र वाक्येन भवितव्यम्; न हि वाक्येन संज्ञा गम्यते ॥ ५० ॥

### पदमञ्जरी

**सर्वमनुष्या इति ।** अत्र विशेषणमित्यपि समासे न दोषः, तस्मात्क्रियावाचिनां गुणवाचिनां वा समासो दर्शनीयः । एवं जरदादिष्वपि । **एकस्याः शाटीति** । अत्र भवितव्यमेव षष्ठीसमासेन, तस्मादेकस्याः शौक्ल्यमिति प्रत्युदाहर्त्तव्यम् । अत्र हि गुणेन नेति प्रतिषेधः ॥ ४९ ॥

**दिक्संख्ये संज्ञायाम् ॥** 'विशेषणं विशेष्येण' इति सिद्धे नियमार्थमेतत्—संज्ञायामेव, नान्यत्रेति । पूर्वसूत्रमित्यादौ त्वदिग्वाचित्वात् समासः ॥ ५० ॥

### भावबोधिनी

**विमर्श**—'विशेषणं विशेष्येण बहुलम्' (पा० सू० २।१।५७) इससे समास होना सम्भव है । अतः सूत्रोक्त शब्दों का पूर्वनिपात करने के लिये ही यहाँ पाठ है । 'दिक्संख्ये संज्ञायाम्' (पा० सू० २।१।५०) इससे सिद्ध नियम का बाध करने के लिये 'एक' का पाठ है ॥ ४९ ॥

'समानाधिकरणेन' इसकी अनुवृत्ति इस पाद की समाप्ति तक होती है । दिशावाची शब्दों और संख्यावाची शब्दों का समानाधिकरण सुबन्त के साथ समास होता है और वह तत्पुरुष होता है, यह संज्ञाविषय में ही होता है । उदा०—पूर्वेषुकामशमी [पूर्वा चासौ इषुकामशमी च—यह विग्रह है । पुम्वद्भाव करने से पूर्वा का 'पूर्व' होकर गुण करने पर रूप बनता है । इषुकामशमी यह किसी नगरी का नाम है । उसका पूर्वी भाग पूर्वेषुकामशमी कहा जाता है ।] अपरेषुकामशमी [अपरा चासौ इषुकामशमी च—इस विग्रह में यहाँ समास होता है । यह भी पूर्ववत् किसी नगर के दूसरे भाग की संज्ञा है ।] संख्या-पञ्चाम्राः [पञ्च च ते आम्राः यह विग्रह है । आम के पाँच वृक्ष] सप्तर्षयः [सप्त च ते ऋषयः । मरीचि, अत्रि आदि सात ऋषि जो आकाश में नक्षत्ररूप से एक निश्चित स्थान पर रहते हैं ।]

'संज्ञा में'—यह किसलिये है ? उत्तरा वृक्षाः [उत्तरी पेड़] पञ्च ब्राह्मणाः [पाँच ब्राह्मण । इनमें किसी संज्ञाविशेष की प्रतीति नहीं होती है ।]

**विमर्श**—विग्रह वाक्य से किसी संज्ञा = नाम की प्रतीत नहीं होती है, समस्त पद से ही होती है । अतः यहाँ समास का विधान है । यह सूत्र नियमार्थ है—'तत्पुरुषे दिक्संख्ये संज्ञायामेव समस्येते' ॥ ५० ॥

## ४०२. तद्धितार्थोत्तरपदसमाहारे च ॥ ५१ ॥ (७२८)

**'दिक्संख्ये' इत्यनुवर्त्तते। तद्धितार्थे विषये उत्तरपदे च परतः समाहारे चाभिधेये दिक्संख्ये समानाधिकरणेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति।**

**तद्धितार्थे तावत्—पूर्वस्यां शालायां भवः। 'दिक्पूर्वपदादसंज्ञायां ञः' [४।२।१०७], पौर्वशालः,**

### न्यासः

**तद्धितार्थोत्तरपदसमाहारे च॥** एकस्या अपि सप्तम्या विषयभेदेन भेदं दर्शयितुमाह—**तद्धितार्थे विषय इत्यादि।** यदि तद्धितार्थेऽभिधेय इत्येवं विज्ञायेत, तदा पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्। तदर्थस्य समासेनैवोक्तत्वादित्येतन् मनसि कृत्वा तद्धितार्थापेक्षया विषयसप्तमीयमिति दर्शयितुं 'तद्धितार्थे विषये' इत्युक्तम्। तद्धिताः=अणादयः, तेषामर्थोऽपत्यादिः, तस्मिन् विषये। अनन्यत्रभावो विषयशब्दस्यार्थः, यथा—मत्स्यानां जलं विषय इति। **पौर्वशाल इति।** पूर्वस्यां शालायां भव इति तद्धितार्थे विषयभूते प्राक् समासः। ततः सुब्लुक्। ततस्तद्धितः।

**पूर्वशालाप्रिय इति** पूर्वा शाला प्रियाऽस्येति पूर्वं पदानां त्रयाणां बहुव्रीहिः। पश्चात् प्रियशब्दे उत्तरपदे परतः पूर्वयोः पदयोस्तत्पुरुषः। तस्मिन् सति समासान्तोदात्तत्वं भवति शालेत्यत्र।

### पदमञ्जरी

**तद्धितार्थोत्तरपदसमाहारे च॥** 'विशेषणं विशेष्येण' इति सिद्धस्य पूर्वेणानियमात्प्राप्तविधिरयम्। अगृह्यमाणविषयत्वाद्वायमपि नियमः शक्यते वक्तुम्—अयं नियमः पूर्वो विधिरिति। एकापि सप्तमी विषयभेदाद्भिद्यत इत्याह—**तद्धितार्थे विषयभूत इत्यादिना।** तद्धितार्थेऽभिधेय इत्येवं तु विज्ञायमाने पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्; तदर्थस्य समासेनैवोक्तत्वादिति भावः। अस्मिन् पक्षेऽर्थग्रहणं चिन्त्यप्रयोजनम्। तद्धिते विषय इत्येवास्तु, तद्धिते परत इति तु विज्ञायमाने इतरेतराश्रयं प्राप्नोति—समासात्तद्धितो विधेयः, तद्धिते च समास इति। किञ्च—'तद्धितार्थेऽभिधेये' इत्यस्मिन् पक्षे न दोषः, 'द्विगोर्लुगनपत्ये' इति लुग्वचनं ज्ञापकमुत्पद्यते—द्विगोस्तद्धित इति सर्वतद्धितसाधारणो द्विगुः, तत्रावश्यं विशेषाभिधानाय तद्धित उत्पद्यत इत्यपि शक्यं विज्ञातुम्। अथैवं कस्मान्न विज्ञायते—तद्धितार्थे द्विगुर्भवति, तद्धितो यथा स्यादिति द्विगुर्भवतीति, यथा—

### भावबोधिनी

'दिक्संख्ये' इसकी अनुवृत्ति होती है। [समानाधिकरणे—इसकी भी अनुवृत्ति होती है।] (१) तद्धितार्थ-विषय में, (२) उत्तरपद परे रहते और (३) समाहार अर्थ प्रतीत रहने पर—दिशावाची और संख्यावाची शब्दों का समानाधिकरण सुबन्त के साथ समास होता है और वह तत्पुरुष समास होता है।

(क) दिग्वाचक—(१) तद्धितार्थ-विषय में [समास का उदाहरण]—पूर्वस्यां शालायां भवः [यहाँ तद्धितार्थ = 'भव' विषय में प्रस्तुत सूत्र से समास, प्रातिपदिक संज्ञा और विभक्तिलुक् करने के बाद] 'दिक्पूर्वपदादसंज्ञायां ञः' (पा० सू० ४।२।१०७) सूत्र से ञ = अ प्रत्यय [करने पर 'पूर्वाशाला + अ' इसमें पूर्वपद का 'पुंवद्भाव' भसंज्ञा, आलोप, आदिवृद्धि करने पर]—पौर्वशालः [पूर्वी मकान में पैदा होने वाला]। आपरशालः [दूसरी शाला में पैदा होने वाला। अपरस्यां शालायां भवः—यह विग्रह है। समास, विभक्तिलोप, ञ प्रत्यय आदि सभी प्रक्रिया 'पौर्वशालः' के समान ही समझनी चाहिये।]

(२) उत्तरपद परे रहते [समास का उदा०]—पूर्वशालाप्रियः [पूर्वा शाला प्रिया यस्य सः—इस त्रिपद बहुव्रीहि करने पर प्रिय शब्द उत्तरपद परे रहते पूर्व के दोनों पदों का तत्पुरुष समास होता है। यहाँ पूर्व के दोनों पदों का तत्पुरुष समास करने से समास का अन्तोदात्त होने से 'शाला' का अन्तिम 'आ' उदात्त होता है। यदि यह

**आपरशालः। उत्तरपदे-पूर्वंशालाप्रियः, अपरशालाप्रियः। समाहारे दिक्शब्दो न संभवति। संख्या, तद्धितार्थे-पाञ्चनापितिः। पञ्चकपालः। उत्तरपदे—पञ्चगवधनः, दशगवधनः।**

**न्यासः**

**समाहारे दिङ् न सम्भवतीति।** समाहारो हि समूहः। स च भिन्नार्थानामेवैककालानां भवति। बुद्धया युगपदर्थानां परिग्रहादेककालत्वम्, न त्वभिन्नवस्तुनः। संख्यैव च भेदमाचष्टे; तस्या भिन्नार्थाभिधायित्वात्, न तु दिक्शब्दः; तस्य प्रतिनियतविषयत्वात्। तस्मात् समाहारे दिक्शब्दो न सम्भवतीति स न तत्र समस्यते।

**पाञ्चनापितिरिति।** पञ्चानां नापितानामपत्यमिति तद्धितार्थे विषयभूते प्राक् समासः। पश्चाद् 'अत इञ्'। **पञ्चकपाल इति।** पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे विषयभूते पूर्वं समासः, पश्चादण्। तस्य 'द्विगोर्लुगनपत्ये' इति लुक्। **पञ्चगवधनमिति।** पञ्च गावो धनमस्येति प्राक् त्रयाणां पदानां बहुव्रीहिः। उत्तरकालं

**पदमञ्जरी**

दारार्थं घटामहे, दारा यथा स्युरिति घटामह इति? नैवं शक्यं विज्ञातुम्; एवं हि विज्ञायमाने तद्धितोत्पत्तये विधीयमाना समाससंज्ञा विषयान्तरे न स्यात्। एवं तस्यैव समासस्य विधीयमाना द्विगुसंज्ञापि, ततश्च पञ्चारत्निरित्यत्र इगन्ते द्विगाविति स्वरो न स्यात्, तस्य तु समाहारद्विगुरवकाशः, यथा—स्वरे विधीयमानः पराङ्गवद्भावः षत्वणत्वयोर्न भवति, तथात्रापि। **पौर्वशाल इति।** पूर्वस्यां शालायां भव इति तद्धितार्थे विवक्षिते समासः, ततस्तद्धितः।

**पूर्वशालाप्रिय इति।** पूर्वा शाला प्रियास्येति त्रिपदे बहुव्रीहौ प्रियशब्दे उत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति समासान्तोदात्तत्वं शालाशब्दस्य भवति, असति त्ववान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वमवतिष्ठेत।

**समाहारे दिक्शब्दो न सम्भवतीति।** स हि समूहरूपत्वाद्भेदनिबन्धनः, संख्यैव च भेदमाचष्टे, दिक्शब्दस्तु प्रत्यर्थनियतः। विभक्तिरपि समासे निवर्त्तते। ननु यथा 'काकसमूहः' इत्यत्र विभक्त्यभावेऽपि भेदावगतिस्तथात्रापि भविष्यति, तस्मात्प्रयोगाभावादित्येवात्र हेतुर्वक्तव्यः।

**भावबोधिनी**

समास न करते तो बहुव्रीहि में पूर्वपद का प्रकृतिस्वर होने से 'पूर्व' का आदि उदात्त ही होता। अतः यह समास आवश्यक है। पूर्वा का पुम्वद्भाव करने पर 'पूर्व' रूप बनता है।] अपरशालाप्रियः [अपरा शाला प्रिया यस्य सः—इस विग्रह में त्रिपद बहुव्रीहि करने के बाद पूर्व के दोनों पदों का तत्पुरुष होता है। यहाँ भी शाला = पूर्वपद का अन्तोदात्त स्वर करना ही समास का प्रयोजन है।]

समाहार में दिक् शब्द सम्भव नहीं है। [क्योंकि अनभिधान है]।

(ख) संख्यावाचक—(१) तद्धितार्थविषय में—[पञ्चानां नापितानाम् अपत्यम्—इस विग्रह में अपत्यार्थक तद्धित प्रत्यय की विवक्षा में प्रस्तुत सूत्र से समास विभक्तिलोप करके 'अत इञ्' (पा० सू० ४।१।९५) से इञ् प्रत्यय, आदिवृद्धि, भसंज्ञा, अलोप होने पर यह रूप बनता है—] पाञ्चनापितिः [पाँच नाइयों की सन्तान]। पञ्चकपालः [पञ्चसु कपालेषु संस्कृतः—इस अर्थ में तद्धित प्रत्यय की विवक्षा में समास और विभक्तिलोप के बाद 'संस्कृतं भक्षाः' (पा० सू० ४।२।१६) से अण् प्रत्यय और इसका लुक् 'द्विगोर्लुगनपत्ये' (पा० सू० ४।२।८८) से हो जाता है। पाँच कपालों = मिट्टी के पात्रविशेषों में संस्कार किया गया पुरोडाश आदि।]

**समाहारे—पञ्चपूली, दशपूली ।**

**न्यासः**

धनशब्द उत्तरपदे परतः पूर्वयोः पदयोस्तत्पुरुषः । तस्मिन् सति 'गोरतद्धितलुकि' इति टच् समासान्तः । तत्र हि 'तत्पुरुषस्याङ्गुले' इत्यतस्तत्पुरुषग्रहणमनुवर्त्तते ।

**पञ्चपूलीति** । पञ्चानां पूलानां समाहार इति विग्रहः । 'द्विगुरेकवचनम्' इत्येकवद्भावः । 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते' इति स्त्रीलिङ्गता, 'द्विगोः' इति ङीप् । ननु समाहारः=समूहः, समूहश्च तद्धितार्थो भवतीत्यपार्थकं समाहारग्रहणम्; तद्धितार्थ इत्येव सिद्धत्वात् ? नैतदस्ति; पञ्चकुमारीत्यत्र हि समूहप्रत्ययस्य 'द्विगोर्लुगनपत्ये' इति लुकि कृते 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्यापि लुक् स्यात् । समाहारे तु पृथग् गृहीते तद्धितानुत्पत्तिरेवात्र विषये समाख्यायते । ततो न भवत्येष दोषः ।

**पदमञ्जरी**

**पाञ्चनापितिरिति** । पञ्चानां नापितानामपत्यमिति समासे, अत इञ् । **पञ्चकपाल इति** । पञ्चसु कपालेषु संस्कृत इति समासे 'संस्कृतं भक्षाः' इत्यणः 'द्विगोर्लुगनपत्ये' इति लुक् । **पञ्चगवधन इति** । पञ्च गावो धनमस्येति त्रिपदे बहुव्रीहौ कृते धनशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे 'गोरतद्धितलुकि' इति टच् । अयमुत्तरपदे तत्पुरुषो महाविभाषाधिकाराद्विकल्पेन प्राप्नोति, नित्यो वक्तव्यः; अन्यथा पञ्चगोधन इत्यपि स्यात् । उक्तं च 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति, वाक्च दृषच्च प्रिये अस्य वाग्दृषदप्रिय इति त्रिपदबहुव्रीहौ पूर्वयोर्द्वन्द्वः, स च नित्य इष्यते—नित्यं समासान्तो यथा स्यादिति ।

**पञ्चपूलीति** । पञ्चानां पूलानां समाहार इति विग्रहः, न तु पञ्चपूलाः समाहृता इति । भावसाधनो हि समाहारशब्दः—समाहरणं समाहारः=विप्रकीर्णानामेकत्र राशीकरणम् । पञ्चग्रामः, षण्णगरी, त्रिपुरीत्यत्रैकस्मिन् क्षणे क्रियायां समन्वयाद्भिन्नदेशानामपि बुद्ध्या राशीकरणं भवति ।

अथ कर्मसाधने को दोषः ? इह पञ्चकुमारीति, कुमार्यर्थप्राधान्यात् समासशास्त्रे चाप्रथमानिर्दिष्टत्वादेकविभक्तित्वाभावाच्चोपसर्जनत्वाभावाद् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वो न स्यात्, काममत्र नपुंसकह्रस्वत्वं सिद्धम् । इह पञ्च खट्वाः समाहृताः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे ह्रस्वाभावाद् 'द्विगोः' इति ङीब् न स्यात् ।

भावसाधने तु समासार्थे समाहारे नानाविभक्तिभिर्युज्यमानेऽपि कुमारीशब्दस्य नित्यं षष्ठ्यैव योग इत्येकविभक्तिकत्वात् सिद्धमुपसर्जनत्वम् । तस्माद्भावसाधनः ।

**भावबोधिनी**

(२) उत्तरपद परे रहते पञ्चगवधनः [पञ्च गावः धनम् अस्य सः इस विग्रह में पहले तीनों पदों का बहुव्रीहि करने के बाद 'धन' पद परे रहते पूर्व के दोनों पदों का तत्पुरुष होता है । तब 'गोरतद्धितलुकि' (पा० सू० ५।४।९२) इससे टच् = अ प्रत्यय, पञ्चगो + अ + धन, ओ का अव् आदेश—पञ्चगवधनः । [पाँच गायें हैं धन जिसकी] दशगवधनः [दश गावः धनं यस्य सः - इस विग्रह में यह बनता है । दश गायें हैं धन जिसकी—यह अर्थ है । सभी प्रक्रिया पूर्ववत् होती है] ।

[महाविभाषा का अधिकार होने से यहाँ भी वैकल्पिक समास प्राप्त होता है, वह न हो, नित्य ही समास हो—इसके लिये यह विधान है । यदि यह न होता तो—पञ्चगोधनः यह भी होने लगता ।]

पञ्चकुमारि, दशकुमारि। 'स नपुंसकम्' [२।४।१७] इति नपुंसकत्वम्, ह्रस्वो 'नपुंसके प्रातिपदिकस्य' [१।३।४७] इति ह्रस्वत्वम्॥

### न्यासः

० पञ्चानां कुमारीणां समाहारः पञ्चकुमारि। 'एकविभक्ति चापूर्वनिपाते' इत्युपसर्जनसंज्ञायाम् 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वत्वम्। कथं पुनरत्रैकविभक्तित्वम्? षष्ठ्यैवैकया योगात्। तथा हि समाहारः=समूहः, तेन च तत्सम्बन्धे षष्ठ्यैव भवितव्यम्। अतः समाहारः कुमारीणाम्, समाहारं कुमारीणां पश्य, समाहारेण कुमारीणामित्येवमादिभिरनेकाभिर्विभक्तिभिर्युज्यमानेऽपि समाहारशब्दे कुमारीशब्दः षष्ठ्यैवैकया युज्यत इत्येकविभक्तिकत्वम्॥ ५१॥

### पदमञ्जरी

द्विगुरेकवचनमित्येतत्तु 'स नपुंसकम्' इति वक्ष्यामीत्यारभ्यते, कथं पञ्चपूलीमानयेत्युक्ते पूलानामानयनम्, नान्तरेण द्रव्यानयनं भावानयनं सम्भवति, यथा नान्तरेण पात्रानयनमग्नेरानयनं सम्भवति? एवमपि समाहारग्रहणमनर्थकम्, भावसाधनो हि समाहारशब्दः समूहपर्यायः, समूहश्च तद्धितार्थस्तत्र 'तद्धितार्थं' इत्येव सिद्धम्। यद्येवम्, तद्धितोत्पत्तिः प्राप्नोति? उत्पद्यतां तद्धितः, 'द्विगोः' इति लुग्भविष्यति। लुक्कृतानि प्राप्नुवन्ति, पञ्चपूली—'अपरिमाणबिस्ताचित' इति ङीप्प्रतिषेधः प्राप्नोति, 'पञ्चगवम्' 'गोरतद्धितलुकि' इति टच् न प्राप्नोति? नैष दोषः; अपरिमाणेत्यत्र 'न तद्धितलुकी'त्यपास्य 'समाहार' इति वक्तव्यम्, तन्नियमार्थम्—अविशेषेण द्विगोर्ङीब्भवति, अपरिमाणान्ताद् बिस्ताचितकम्बल्यान्ताच्च समाहार एवेति, पञ्चानामश्वानां समाहारः पञ्चाश्वी। क्व मा भूत्? पञ्चभिरश्वैः क्रीता पञ्चाश्वा। 'गोरतद्धितलुकि' इत्यत्राप्यतद्धितलुकीत्यपास्य 'द्विगोः समाहार' इति वक्तव्यम्, तन्नियमार्थम्—गोशब्दान्तस्य तत्पुरुषस्याविशेषेण टज् भवति, द्विगोस्तु समाहार एवेति, पञ्चानां गवां समाहारः पञ्चगवम्। क्व मा भूत्? पञ्चभिर्गोभिः क्रीतः पञ्चगुः पटः। एवमपि पञ्चकुमारीत्यत्र 'लुक् तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् प्राप्नोति। तस्मात्तद्धितनिवृत्त्यर्थम्। समाहारग्रहणात्तु समासस्यैव समाहारो वाच्यः, न तद्धितस्येति व्याख्यानात्तद्धितो नोत्पद्यत इति सिद्धमिष्टम्। इह पञ्च गावोऽस्य सन्ति पञ्चगुः पुरुष इति मत्वर्थस्य तद्धितार्थत्वादयं समासः प्राप्नोति, न बहुव्रीहिः; अशेषत्वात्। तस्य तु चित्रग्वादिरवकाशः, यत्र दिक्संख्ये न स्तः। सति चास्मिन्समासे मतुपः श्रवणं स्यात्। अप्राग्दीव्यतीयत्वाद् द्विगोर्लुगपि नास्ति। तस्मान्मत्वर्थे प्रतिषेधो वक्तव्यः॥ ५१॥

### भावबोधिनी

(३ समाहार में—पञ्चपूली [पञ्चानां पूलानां समाहारः यह विग्रह है। यहाँ समास होता है। 'संख्यापूर्वो द्विगुः' (पा० सू० २।१।५२) के अनुसार यहाँ संख्यापूर्व में होने से द्विगु हो जाता है। 'द्विगुरेकवचनम्' (पा० सू० २।४।१) इससे एकवचन होता है और 'स नपुंसकम्' (पा० सू० २।४।१७) इससे नपुंसकलिङ्ग प्राप्त होता है। परन्तु 'अकारान्तोत्तरपदो द्विगुः स्त्रियाँ भाष्यते' इस वचन से स्त्रीलिङ्ग हो जाने से 'द्विगोः' (पा० सू० ४।१।२१) सूत्र से ङीप् = ई प्रत्यय होने पर रूप सिद्ध होता है। पूल = समुदाय, इधर-उधर बिखरे फैले हुए पदार्थों का एक समूह 'पूल' कहा जाता है]। दशपूली [दशानां पूलानां समाहारः। यहाँ भी सब पूर्ववत् है।]

पञ्चकुमारि [पञ्चानां कुमारीणां समाहारः—इस विग्रह में समास, द्विगु, एकवचन] 'स नपुंसकम्' (पा० सू० २।४।१७) इससे नपुंसकलिङ्ग और 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (पा० सू० १।३।४७) इससे ह्रस्व होता है॥ ५१॥

## ४१२. सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ ६१ ॥ (७४०)

सत्, महत्, परम, उत्तम, उत्कृष्ट—इत्येते पूज्यमानैः सह समस्यन्ते, तत्पुरुषश्च समासो भवति। 'पूज्यमानैः' इति वचनात् पूजावचनाः सदादयो विज्ञायन्ते। सत्पुरुषः। महापुरुषः। परमपुरुषः। उत्तमपुरुषः। उत्कृष्टपुरुषः।

पूज्यमानैरिति किम्? उत्कृष्टा गौः कर्दमात् ॥

### न्यासः

फलिका चेति फलाफलिका। मानञ्च तदुन्मानिका चेति मानोन्मानिका। समानाधिकरणाधिकार इत्यादि। अत्राप्युपसंख्यानशब्दस्य प्रतिपादनमर्थः। प्रतिपादनन्तु पूर्ववदेव ॥ ६० ॥

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ पूज्यमानवचनैरिति वचनादित्यादि। पूज्यमानत्वं ह्येवमुत्तरपदस्य भवति यदि सदादयः पूजावचना भवन्ति, नान्यथा; तस्मात् पूज्यमानग्रहणात् सदादयः पूजावचना विज्ञायन्ते। अत एव सच्छब्देन शतृशानचोर्ग्रहणं न भवति, न हि तौ पूजामाहतुः। उत्कृष्टा गौः कर्दमादिति। उद्धृतेत्यर्थः। अथ कथं महाद्रुमः, महोदधिरिति समासः, न ह्यत्र पूजा गम्यते, किं तर्हि? प्रमाणातिरेक उत्तरपदार्थस्य? यद्यप्येवम्, तथापि बहुलग्रहणानुवृत्तेर्भविष्यति ॥ ६१ ॥

### पदमञ्जरी

ईश्वरः पार्थिवः, 'तस्येश्वरः' इत्यत्र, तस्याभ्यवहार्येषु शाकं प्रियत्वात्प्रधानम्। तत्र साहचर्यादेव तद्व्यपदेशत्वलाभादुत्तरपदलोपो न वक्तव्यः। समासस्तु वक्तव्यः, गौणत्वात्सामानाधिकरण्यस्य ॥ ६० ॥

सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः ॥ पूज्यमानैरिति वचनादिति। पूज्यमानस्य पूजापेक्षत्वादिति भावः। अत एव सदिति स्वरूपग्रहणं न शतृशानचोः, न हि तौ पूजामाहतुः। उत्कृष्टो गौरिति। उद्धृत इत्यर्थः। महाजनः, महोदधिरित्यादौ पूजाभावेऽपि विशेषणं विशेष्येणेति समासः। वचनं तु गुणक्रियाशब्दैरपि समासे सदादीनामेव पूर्वनिपातनियमार्थम् ॥ ६१ ॥

### भावबोधिनी

और अल्प क्रय। पुटापुटिका = [छोटी दोनिया बड़ी दोनिया] फलाफलिका = फल और छोटा फल। मानोन्मानिका = सम्मान और असम्मान, अथवा तौल और छोटी तौल।

भाष्य में शाकपार्थिवादि से सम्बद्ध वार्तिक 'वर्णो वर्णेन' (पा० सू० २।१।६८) सूत्र पर है परन्तु काशिकाकार ने प्रस्तुत सूत्र पर ही लिख दिया। इसका कोई स्पष्ट कारण नहीं दिखाई देता है। सिद्धान्तकौमुदी में भी यही स्थिति है। इस परिवर्तन के विषय में टीकाकार मौन हैं ॥ ६० ॥

सत, महत, परम, उत्तम, उत्कृष्ट—इन शब्दों का पूज्यमान = पूजा के योग्य अर्थवाचक शब्दों के साथ समास होता और वह तत्पुरुष होता है। 'पूज्यमानैः' ऐसा कहा जाने के कारण पूजावाचक सद् आदि का ज्ञान होता है। उदा०—सत्पुरुषः [सन् चासौ पुरुषश्च। सज्जन पुरुष] महापुरुषः [महान् चासौ पुरुषः।] परमपुरुषः। उत्तमपुरुषः। उत्कृष्टपुरुषः [इनमें पूज्यमान = पुरुष के साथ सद् आदि का समास होता है।]

पूज्यमान = पूजा के योग्यवाची शब्दों के साथ—इसका क्या प्रयोजन है? उत्कृष्टा गौः कर्दमात् [कीचड़ से से निकाली गयी गाय। यहाँ 'गो' पूज्यमान नहीं है, और 'उत्कृष्ट' भी पूजावाचक नहीं है। अतः समास नहीं होता है]

विमर्श—इस सूत्र का कार्य 'विशेषणं विशेष्येण बहुलम्' से सम्भव था। अतः पूर्वनिपात का नियम करने के लिये यह सूत्र बनाया गया है ॥ ६१ ॥

**४१३. वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥ ६२ ॥ (७४१)**

वृन्दारक, नाग, कुञ्जर—इत्येतैः सह पूज्यमानवाचि सुबन्तं समस्यते, तत्पुरुषश्च समासो भवति। 'पूज्यमानम्' इति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्ते। गोवृन्दारकः, अश्ववृन्दारकः। गोनागः, अश्वनागः। गोकुञ्जरः, अश्वकुञ्जरः।

पूज्यमानमिति किम् ? सुषीमो नागः ॥

**४१४. कतरकतमौ जातिपरिप्रश्ने ॥ ६३ ॥ (७४२)**

कतरकतमौ जातिपरिप्रश्ने वर्त्तमानौ समर्थेन सुपा सह समस्येते, तत्पुरुषश्च समासो भवति। कतरकठः। कतरकालापः। कतमकठः। कतमकालापः।

**न्यासः**

**वृन्दारकनागकुञ्जरैः पूज्यमानम्।** वृन्दारकादयो जातिशब्दाः। ते चोपमानत्वे सति पूजावचना भवन्ति। तत्र व्याघ्रादेराकृतिगणत्वाद् 'उपमितं व्याघ्रादिभिः' इत्येवं सिद्धे सामान्यप्रयोगेऽपि यथा स्यादित्येवमर्थोऽयमारम्भः। **'पूज्यमानम्' इति वचनाद् वृन्दारकादयः पूजावचना गृह्यन्त इति।** न ह्यन्यथा पूज्यमानत्वमुपपद्यत इति भावः।

**सुषीमो नाग इति।** ननु च विशेषणं विशेष्येणेति वर्त्तते। न च नागादन्यः सुषीमोऽस्ति, संज्ञा ह्येषा नागस्यैव ? एवं तर्हि प्रत्युदाहरणदिगियं वृत्तिकृता दर्शिता। इदन्त्वत्र प्रत्युदाहरणम्—देवदत्तो नागो यस्मान् मूर्ख इति ॥ ६२ ॥

**कतरकतमौ जातिपरिप्रश्ने ॥ जातिपरिप्रश्न एव व्युत्पाद्येते इति।** 'कियत्तदोर्निर्धारणे' इत्यनुवर्तमाने 'वा बहूनाम्' इत्यादिना। स्यादेतत्—कतरशब्दविशेषणार्थं जातिपरिप्रश्नग्रहणमित्याह—**कतर-**

**पदमञ्जरी**

**वृन्दारकनागकुञ्जरैः पूज्यमानम् ॥** वृन्दारकशब्दो देवजातिवचनः, इतरौ हस्तिजातिवचनौ, तत्रोपमानत्वे सति पूजावचनता सम्भवति। तत्र व्याघ्रादेराकृतिगणत्वात्सिद्धे समासे पूजायामेव यथा स्यान्निन्दायां मा भूदित्येवमर्थं वचनम्। इह मा भूत्—माणवकोऽयं नागो यस्मान्मूर्ख इति। सामान्यप्रयोगेऽपि यथा स्यादित्यन्ये। **सुषीम इति।** संज्ञेयं नागविशेषस्य। यद्येवम्, विशेषणं विशेष्येणेत्यधिकारादेवात्र न भविष्यति, न ह्यनागः सुषीमोऽस्ति ? सत्यम्; प्रत्युदाहरणदिगियं दर्शिता, माणवकोऽयं नाग इति प्रत्युदाहरणम् ॥ ६२ ॥

**कतरकतमौ जातिपरिप्रश्ने ॥ कतरकठ इति।** 'गोत्रं च चरणैः सह' (म० भा० ४.१.६३) इति

**भावबोधिनी**

वृन्दारक, नाग और कुञ्जर—इन शब्दों के साथ पूज्यमानवाचक सुबन्त का समास होता है, वह तत्पुरुष समास होता है। 'पूज्यमान' [= पूजा के योग] इस वचन के कारण वृन्दारक आदि पूजावाची शब्दों का ही ग्रहण होता है। उदा०—गोवृन्दारकः [गौश्चासौ वृन्दारकश्च] सुन्दर गाय। अश्ववृन्दारकः [अश्वश्चासौ वृन्दारकश्च। सुन्दर अश्व।] गोनागः [गौश्चासौ नागश्च। सुन्दर गाय।] अश्वनागः [अश्वश्चासौ नागश्च। सुन्दर घोड़ा] गोकुञ्जरः [गौश्चासौ कुञ्जरश्च। अच्छी गाय ] अश्वकुञ्जरः [अश्वश्चासौ कुञ्जरश्च। अच्छा घोड़ा]

पूज्यमान—इसका क्या प्रयोजन है ? सुषीमो नागः। सुषीम नाग। सुषीम यह नागविशेष की संज्ञा है। अतः पूज्यमानवाची नहीं हैं।

**विमर्श**—प्रस्तुत सूत्र विशेष्य = पूज्यमानवाचक के पूर्वनिपात के लिये है। प्रत्युदाहरण के विषय में न्यास एवं पदमञ्जरी में असन्तोष व्यक्त करते हुए 'माणवकोऽयं नागः' यह प्रत्युदाहरण प्रस्तुत किया गया है ॥ ६२ ॥

जातिपरिप्रश्न = जातिविषयक विविध प्रश्न अर्थ में वर्तमान = प्रयुक्त कतर और कतम शब्दों का समर्थ सुबन्त के साथ समास होता है और वह तत्पुरुष समास होता है। उदा०—कतरकठः। [कतरः कठः—इस विग्रह में

ननु कतमशब्दस्तावज्जातिपरिप्रश्न एव व्युत्पादितः, कतरशब्दोऽपि साहचर्यात्तदर्थवृत्तिरेव ग्रहीष्यते, किं जातिपरिप्रश्नग्रहणेन ? एवं तर्ह्येतज्ज्ञापयति—कतमशब्दोऽन्यत्रापि वर्त्तत इति। तथा च प्रत्युदाहरणम्—कतरो भवतोर्देवदत्तः। कतमो भवतां देवदत्तः॥

**४१५. किं क्षेपे ॥ ६४ ॥ (७४३)**

'किम्' इत्येतत् क्षेपे गम्यमाने सुपा सह समस्यते, तत्पुरुषश्च समासो भवति। किंराजा, यो न

**न्यासः**

शब्दोऽपीत्यादि। तदेव ज्ञापयतीति। यदि तर्हि कतमशब्दो जातिपरिप्रश्न एव वर्तमानो गृह्यते, जातिपरिप्रश्नग्रहणमनर्थकं स्यात्, विनापि तेन यथोक्तया नीत्या कतरकतमशब्दौ जातिपरिप्रश्न एव वर्तमानौ ग्रहीष्येते। तथा चेत्यादि। यत एव कतमशब्दस्य जातिपरिप्रश्नादन्यत्रापि वृत्तिः, एवञ्च कृत्वा भवतां देवदत्तः कतम इति प्रत्युदाहरणमुपपद्यते। अन्यथा तन्नोपपद्येत; तस्य जातिपरिप्रश्नादन्यत्राप्रवृत्तेः ॥ ६३ ॥

किं क्षेपे॥ किंसखेति। 'अनङ् सौ' इत्यनङादेशः। अथ किंराजेत्यादौ 'राजाहः सखिभ्यष्टच्'

**पदमञ्जरी**

जातिः। तथा च प्रत्युदाहरणं भवतीतिपूर्ववृत्तिषूपन्यस्त मिति[1] शेषः ॥६३-६४॥

**भावबोधिनी**

समास होता है। इन दोनों में कौन कठ है ?] कतरकालापः [कतरः कालापः—इस विग्रह में समास होता है। इन दोनों में कौन कालाप है ?] कतमकठः [कतमः कठः—इस विग्रह में समास होता है। एषु कतमः कठः—यह विग्रह है। इन सबमें कौन कठ है ?] कतमकालापः [एषु कतमः कालापः —यह विग्रह है। इन सबमें कौन कालाप है ?]

[शंका]—कतम शब्द तो जातिविषयक प्रश्न के विषय में ही व्युत्पादित है, साहचर्यवश कतर शब्द भी इसी प्रकार जातिविषयक अर्थ में ही लिया जायगा, अतः जातिपरिप्रश्न-जातिविषयक प्रश्न—इसके ग्रहण का क्या लाभ ? [समाधान]—यदि ऐसी बात है तो यह ज्ञापित करता है—कतम शब्द अन्य अर्थ में भी प्रयुक्त होता है। जैसा कि प्रत्युदाहरण है—कतरो भवतोः देवदत्तः –[आप दोनों में कौन-सा देवदत्त है ?] भवतां कतमः देवद : [आप लोगों में कौन-सा देवदत्त है ?]

**विमर्श**—'कियत्तदो निर्धारणे द्वयोरेकस्य डतरच्' (पा० सू० ५।३।९२) से दो के मध्य में एक के निर्धारण में किम्, यत् और तत्—इन प्रातिपदिकों से डतरच् प्रत्यय होता है। 'वा बहूनां जातिपरिप्रश्ने डतमच्' (पा० सू० ५।३।९३) बहुतों के बीच में एक के निर्धारण में जातिपरिप्रश्न-विषयक किम्, यत्, तत्—इन शब्दों से डतमच् प्रत्यय होता है। प्रथम सूत्र से 'कतरः' बनता है और दूसरे सूत्र से कतमः। जातिविषयक विविध प्रश्नों के सम्बन्ध से कतम शब्द बना है। यहाँ सूत्र में कतम के साथ प्रयुक्त 'कतर' शब्द का भी यही अर्थ समझना चाहिये। इस स्थिति में यह शंका होती है कि जब ये शब्द जातिपरिप्रश्न अर्थ में ही व्युत्पन्न किये गये हैं, तब यहाँ सूत्र में 'जातिपरिप्रश्न' के ग्रहण का क्या प्रयोजन ? जातिविषयक विविध प्रश्न से भिन्न अर्थ में भी इन शब्दों का प्रयोग होता है इसके लिये जातिपरिप्रश्न का ग्रहण है। जैसे—भवतोः कतरः देवदत्तः, भवतां कतमः देवदत्तः।

इस सूत्र में पारिभाषिक जाति का ग्रहण है। (१) आकृतिग्रहणा जातिः, (२) लिङ्गानां न च सर्वभाक्। सकृदाख्यातनिग्राह्या, (३) गोत्रं च चरणैः सह ॥ (म० भा०)।

इस श्लोक में जाति के तृतीय लक्षण के अनुसार गोत्र = अपत्य और चरण=वेदशाखाध्याताओं को भी जाति माना गया है। इसलिये कठ और कलाप शाखाओं को पढ़ने वाले भी जाति के अन्तर्गत हैं। इसी आधार पर यहाँ जातिपरिप्रश्न लिया गया है ॥ ६३ ॥

क्षेप = निन्दा गम्यमान रहने पर 'किम्' इसका सुबन्त शब्द के साथ समास होता है। और वह तत्पुरुष होता है। उदा०—[कुत्सितः राजा इस विग्रह में यह बनता है] किं राजा, यो न रक्षति [जो रक्षा नहीं करता है, वह कुत्सित

१. प्रकृतसूत्रे तत्त्वबोधिनी —'तथा च प्रत्युदाहृतं प्राचीनवृत्तिषु कतरो भवतोर्देवदत्तः। कतमो भवतां देवदत्त इति'।

रक्षति। किंसखा, योऽभिद्रुह्यति। किंगौः, यो न वहति। 'किमः क्षेपे' [४।५।७०] इति समासान्तो न भवति। क्षेप इति किम्? को राजा पाटलिपुत्रे॥

### ४१६. पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः॥ ६५॥ (७४४)

उभयव्यञ्जना 'पोटा' इत्यभिधीयते[1]। गृष्टिः=एकवारप्रसूता। धेनुः=प्रत्यग्रप्रसूता। वशा=वन्ध्या। वेहद्=गर्भपातिनी। बष्कयणी=तरुणवत्सा। पोटादिभिः सह जातिवाचि सुबन्तं समस्यते,

**न्यासः**

'गोरतद्धितलुकि' इति टच् समासान्तः कस्मान्न भवतीत्याह—किमः क्षेप इत्यादि। अत्र 'न पूजनात्' इत्यतः 'न' इत्यनुवर्तते॥ ६४॥

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः॥ विशेषणमित्यादिना समासे प्राप्ते वचनमिदं परनिपातार्थम्। गुणशब्दा ह्येते। तत्र यदि तेन समासः स्यात् तदैषां पूर्वनिपातः

**पदमञ्जरी**

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः॥ उभयव्यञ्जनेति। व्यज्यतेऽनेन स्त्रीत्वादिकमिति व्यञ्जनम्=स्तनादि, उभयोः स्त्रीपुंसयोर्व्यञ्जनं यस्याः सा तथोक्ता नपुंसके पोटेत्यर्थः।

पोटाशब्दस्तु तत्रापि स्त्रीत्वयुक्तः प्रवर्तते।
शब्दानां चित्रशक्तित्वात् षण्डशब्दो यथा पुमान्॥

**भावबोधिनी**

राजा है।] किंसखा, योऽभिद्रुह्यति [वह कैसा मित्र है जो द्रोह करता है।] किंगौः, यो न वहति। [वह कैसा बैल है, जो बोझा नहीं ढोता है।] [इनमें समास करने का फल है—] 'किमः क्षेपे' (पा० सू० ४।५।७०) इस सूत्र से समासान्त (टच्) प्रत्यय नहीं होता है।

क्षेप = निन्दा की प्रतीति में—इसका क्या फल है? को राजा पाटलिपुत्रे? [पटना में कौन राजा है? यह सामान्य प्रश्न है। निन्दा अर्थ की प्रतीति नहीं है। अतः समास नहीं होता है।] ॥ ६४॥

स्त्री और पुरुष इन दोनों के अभिव्यञ्जक चिह्न जिसमें हों अर्थात् हिजड़ा 'पोटा' ऐसा कहा जाता है। गृष्टि = एक बार ही प्रसव करने वाली, बच्चा पैदा करने वाली। धेनु = शीघ्र बच्चा पैदा कर चुकने वाली, ब्याने वाली। वशा = बन्ध्या। वेहद् = गर्भ गिरा देने वाली। बष्कयणी = जवान बच्चे वाली। पोटा—आदि के साथ जातिवाचक सुबन्त शब्द का समास होता है, वह तत्पुरुष समास होता है। उदा०—इभपोटा [इभा चासौ पोटा च हिजड़ी हथिनी] इभयुवतिः [जवान हथिनी] अग्निस्तोकः [थोड़ी आग] उदश्वित्कतिपयम् [कुछ मट्ठा=तक्र] गोगृष्टिः [एक बार ब्यायी=प्रसूता गाय]। गोधेनुः [तत्काल ब्याई=बच्चा पैदा कर चुकने वाली गाय]। गोवशा [बन्ध्या गाय]। गोवेहत् [गर्भ गिरानेवाली गाय] गोबष्कयणी [जिसका बछड़ा जवान हो चुका है ऐसी गाय] कठप्रवक्ता [कठ जो प्रवक्ता=व्याख्याता है] कठश्रोत्रियः [कठ जो श्रोत्रिय है।] कठाध्यापक [कठ जो अध्यापक है]। कठधूर्तः [कठ जो धूर्त है] [कठ शब्द कठ शाखाध्यायी का वाचक है।]

जातिवाचक—यह किस लिये है? देवदत्तः प्रवक्ता। [देवदत्त जो प्रवचन करने वाला। यहाँ देवदत्त जातिवाची नहीं, व्यक्तिवाची है।] धूर्त शब्द का ग्रहण अकुत्सा अर्थ के लिये है।

---

१. युवतिर्नवयोवना स्त्री। स्तोकमल्पपर्यायः। कतिपयं च—इत्यधिकं क्वचित्

तत्पुरुषश्च समासो भवति। इभपोटा। इभयुवतिः। अग्निस्तोकः। उदश्वित्कतिपयम्। गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। कठधूर्त्तः।

जातिरिति किम्? देवदत्तः प्रवक्ता। धूर्त्तग्रहणमकुत्सार्थम्॥

**४१७. प्रशंसावचनैश्च॥ ६६॥ (७४७)**

'जातिः' इति वर्त्तते। जातिवाचि सुबन्तं प्रशंसावचनैः सह समस्यते, तत्पुरुषश्च समासो भवति। रूढिशब्दाः प्रशंसावचना गृह्यन्ते मतल्लिकादयः, ते चाविष्टलिङ्गत्वादन्यलिङ्गेऽपि जातिशब्दे स्वलिङ्गोपादाना एव समानाधिकरणा भवन्ति। गोप्रकाण्डम्। अश्वप्रकाण्डम्। गोमतल्लिका। अश्वमतल्लिका। गोमर्चिच्चका। अश्वमर्चिका।

**न्यासः**

प्रसज्येत। अथ धूर्तग्रहणं किमर्थम्, यावता कुत्सनशब्दोऽयम्, 'कुत्सितानि कुत्सनैः' इत्येवं समासः सिद्धः? इत्याह—धूर्त्तग्रहणमकुत्सार्थमिति। शब्दप्रवृत्तिनिमित्तकुत्सायां 'कुत्सितानि कुत्सनैः' इति समासो विहितः। अयं तु जातेः स्वयमकुत्सिताया धूर्तसम्बन्धे विवक्षिते समासो विज्ञायते, न कुत्सायाम्॥ ६५॥

**प्रशंसावचनैश्च॥ रूढिशब्दाः प्रशंसावचना गृह्यन्त इति।** त्रिप्रकारा हि प्रशंसाशब्दाः—केचिज्जातिशब्दाः परार्थे प्रयुज्यमानाः प्रशंसामाचक्षते, यथा—सिंहो देवदत्त इति; केचिद् गुणशब्दा गुणगुणिसम्बन्धेन प्रशंसावचना भवन्ति, यथा—रमणीयो ग्रामः, शोभनः पाचक इति; केचिद्रूढिशब्दा मतल्लिकादयः; तेषां प्रशंसैव शब्दार्थः। तदिह वचनग्रहणात् प्रशंसायामेव ये वर्त्तन्ते ते गृह्यन्ते रूढिशब्दाः। **गोप्रकाण्डमिति।**

**पदमञ्जरी**

**धूर्त्तग्रहणमकुत्सार्थमिति।** कुत्सायां तु 'कुत्सितानि कुत्सनैः' इति सिद्धमिति भावः। **तत्र कठधूर्त्त इति।** यः कठः स धूर्त्त इत्यर्थः, न तु कठत्वं कुत्स्यते॥ ६५॥

**प्रशंसावचनैश्च॥ रूढिशब्दाः प्रशंसावचना गृह्यन्त इति।**

प्रशंसयेति वक्तव्ये वचनग्रहणादिह।
ग्रहणं रूढिशब्दानां प्रशंसामात्रवाचिनाम्॥

तेन ये यौगिकाः प्रशस्तशोभनरमणीयादयः, ये च विशेषवचनाः शुचिमृद्वादयः, ये च जातिशब्दाः सन्तः परत्र प्रयोगात्प्रशंसां गमयन्ति—सिंहो माणवक इति, ते सर्वे व्युदस्ता भवन्ति। **मतल्लिकादय इति।**

**भावबोधिनी**

**विमर्श**—इस सूत्र में पठित शब्दों का परनिपात करने के लिये यह सूत्र है। अन्यथा 'विशेषणं विशेष्येण' (पा० सू० २।१।५७) से समास करने पर इनका पूर्वनिपात हो जाता। वेदशाखाध्यायी होने से कठ शब्द भी जातिवाची है। धूर्त शब्द कुत्सा से भिन्न अर्थात् प्रवृत्तिनिमित्त की कुत्सा में नहीं समास के लिये 'धूर्त' है। पोटा शब्द यद्यपि स्त्री और पुरुष दोनों के चिह्नों से युक्त अर्थ का वाचक है। किन्तु शब्द-शक्ति-स्वभाववश यह स्त्रीलिङ्ग में ही प्रयुक्त होता है। प्रमाणार्थ पदमंजरी देखनी चाहिये॥ ६५॥

'जातिः' इसकी अनुवृत्ति होती है। जातिवाचक सुबन्त शब्द का प्रशंसावाचक शब्दों के साथ समास होता है और वह तत्पुरुष होता है। मतल्लिका आदि प्रशंसावाचक रूढ़ शब्दों का ही ग्रहण होता है, ये आविष्टलिङ्ग वाले = नियतलिङ्ग वाले होने के कारण, भिन्नलिङ्ग वाले भी जाति शब्द के रहने पर, अपने लिङ्ग को लिये हुए ही समानाधिकरण = समानार्थवाचक होते हैं। उदा० = गोप्रकाण्डम् [गौश्चासौ प्रकाण्डं च। प्रशस्त गाय]। अश्वप्रकाण्डम् [अश्वश्चासौ प्रकाण्डं च, प्रशस्त घोड़ा] गोमतल्लिका [गौश्चासौ मतल्लिका च। सुन्दर गाय]। अश्वमतल्लिका [अच्छा घोड़ा] गोमर्चिका [गौश्चासौ मर्चिका। सुन्दर गाय] अश्वमर्चिका [सुन्दर घोड़ा।]

जातिवाचक—इसका क्या प्रयोजन है? कुमारी मतल्लिका [कुमारी जातिवाचक नहीं अवस्थावाचक है।]

जातिरिति किम् ? कुमारी मतल्लिका ॥

## ४१८. युवा खलतिपलितवलिनजरतीभिः ॥ ६७ ॥ (४८७)

खलत्यादिभिः समानाधिकरणैः सह युवशब्दः समस्यते, तत्पुरुषश्च समासो भवति । 'जरतीभिः' इति स्त्रीलिङ्गेन निर्देशः 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति ज्ञापनार्थः । युवा खलतिः युव-

न्यासः

शोभनः प्रशस्तो गौरित्यर्थः । योगविभागोऽसन्देहार्थः । यदि पूर्वयोग एव प्रशंसावचना गृह्येरन्, तदा सन्देहः स्यात्—किं पोटादिभिः प्रत्येकं वचनमभिसम्बध्यते ? अथ प्रशंसयेति ? पोटादिभिः सम्बन्धे तत्पर्यायैरपि समासः स्यात् ॥ ६६ ॥

**युवाखलतिपलितवलिनजरतीभिः** ॥ **खलत्यादिभिः समानाधिकरणैरित्यादि** । यद्येवम्, किमर्थं जरतीभिरिति स्त्रीलिङ्गेन निर्देशः, जरद्भिरित्येवं नाम निर्देशः कर्त्तव्यः स्यात्, न हि जरतीशब्देन स्त्रीलिङ्गेन युवशब्दस्य पुंलिङ्गस्य सामानाधिकरण्यमुपपद्यत इत्याह—**जरतीभिरिति स्त्रीलिङ्गेन निर्देश इत्यादि** । कथं पुनरनेन निर्देशेनैषा परिभाषा शक्यते ज्ञापयितुम् ? यद्येषा परिभाषा न स्यात् तदा जरतीभिरित्येवं निर्देशोऽनर्थकः स्यात् । तथा च समानाधिकरणाधिकारात् समानाधिकरणेन जरतीशब्देनायं समासो विज्ञायते । न च तेन स्त्रीलिङ्गेन पुंसि वर्त्तमानस्य युवशब्दस्य सामानाधिकरण्यं भवति, तदेष निर्देशः कथमर्थवान् भवति ?

पदमञ्जरी

'मतल्लिका मचर्चिका प्रकाण्डमुद्धतल्लजौ । प्रशस्तवाचकान्यमूनि' इत्यमरः (१.३.३६) । **आविष्टलिङ्गत्वादिति** । नियतलिङ्गत्वादित्यर्थः । **स्वालिङ्गोपादाना इति** । स्वस्यैव लिङ्गस्योपादानं येषु ते तथोक्ताः । 'प्रशंसावचनपोटायुवति' इत्येकयोगे कर्त्तव्ये योगविभागश्चिन्त्यप्रयोजनः ॥ ६६ ॥

**युवा खलतिपलितवलिनजरतीभिः** ॥ संज्ञायूनो ग्रहणे गार्ग्यायणः खलतिरित्यादावेव तु स्यान्न च तस्य जरतीशब्देन सामानाधिकरण्यम् । न च गार्ग्यायणी युवतिरस्ति; स्त्रियां युवसंज्ञाप्रतिषेधात्, अतो युवेति स्वरूपग्रहणमित्याह—**युवशब्द इति** । **खलत्यादिभिः समानाधिकरणैरिति** । कथं पुनर्युवशब्दस्य जरतीशब्देन सामानाधिकरण्यं पुंलिङ्गस्य स्त्रीलिङ्गेनेति, तत्राह—**स्त्रीलिङ्गनिर्देश इति** । अस्यां हि परिभाषायां सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्यापि ग्रहणादुपपद्यते युवतिजरतीशब्दयोः सामानाधिकरण्यम्, असत्यां तु नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञायते । **युवखलतीति** । 'क्रुदिकारादक्तिनः' (ग० सू० ५०), सर्वतोऽक्तिन्नर्था-

भावबोधिनी

**विमर्श**—प्रशंसावाची शब्द तीन प्रकार के होते हैं—(१) जातिवाची जैसे—सिंहो देवदत्तः । (२) गुण शब्द—जैसे रमणीयः ग्रामः । (३) रूढ़ शब्द, जैसे—मतल्लिका आदि । यहाँ 'प्रशंसावचनैः' में वचन का ग्रहण करने के कारण रूढ शब्दों का ही ग्रहण होता है । कोशों में इन रूढ शब्दों का उल्लेख है ॥ ६६ ॥

खलति आदि समानाधिकरण शब्दों के साथ 'युवन्' शब्द का समास होता है । 'जरतीभिः' ऐसा स्त्रीलिङ्ग से निर्देश 'प्रातिपदिक के ग्रहण में लिङ्गविशिष्ट का भी ग्रहण होता है' इस [परिभाषा] को ज्ञापित करने के लिये है । उदा०—युवा खलतिः—इस विग्रह में—युवखलतिः । [नौजवान गंजा पुरुष] युवतिः खलती—युवखलती ]नवयुवती गंजी] । युवा पलितः—[इस विग्रह में] युवपलितः [नौजवान सफेद बालों वाला पुरुष] युवतिः पलिता—युवपलिता [नौजवान सफेद बालों वाली स्त्री] युवावलिनः—युववलिनः [नौजवान झुर्रियों वाला पुरुष] युवतिः वलिना—युववलिना [नौजवान झुर्रियों वाली स्त्री] । युवा जरन्—युवजरन् [जवानी में ही बूढ़ा पुरुष] । युवतिः जरती—युवजरती [जवानी में ही बूढ़ी स्त्री] ।

**विमर्श**—इस सूत्र में 'जरती' इस स्त्रीप्रत्ययविशिष्टनिर्देश करने का विशेष प्रयोजन है 'जहाँ प्रातिपदिक

**खलतिः। युवतिः खलती युवखलती। युवा पलितः युवपलितः। युवतिः पलिता युवपलिता। युवा वलिनः युववलिनः। युवतिर्वलिना युववलिना। युवा जरन् युवजरन्। युवतिर्जरती युवजरती॥**

### ४१६. कृत्यतुल्याख्या अजात्या॥ ६८॥ (७४६)

**कृत्यप्रत्ययान्तास्तुल्यपर्यायाश्च सुबन्ता अजातिवचनेन समस्यन्ते, तत्पुरुषश्च समासो भवति। भोज्योष्णम्। भोज्यलवणम्। पानीयशीतम्। तुल्याख्याः—तुल्यश्वेतः। तुल्यमहान्। सदृशश्वेतः। सदृशमहान्।**

न्यासः

यद्येषा परिभाषाऽवतिष्ठते, तस्यां हि सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्य ग्रहणं भवतीत्युपपद्यते। युवति-जरतीशब्दयोः सामानाधिकरण्यम्, तस्मिंश्च सति तयोः समासः। तदेवं जरतीभिरिति निर्देशो ज्ञापयति—एषा परिभाषास्तीति। नन्वेवमपि जरत्या समास उच्यमाने जरता न प्राप्नोति—युवजरन्निति ? नैष दोषः; वृत्त्यन्तरे हि जरद्भिरिति पठ्यते। उभयथाप्याचार्येण शिष्याः प्रतिपादिता इत्युभयं सिध्यति॥ ६७॥

**कृत्यतुल्याख्या अजात्या॥ तुल्यपर्यायाश्चेति।** अथ स्वरूपग्रहणं कस्मान्न विज्ञायते ? एवं मन्यते—कृत्य इत्यर्थग्रहणम्; अतस्तत्साहचर्यात् तुल्य इत्यर्थस्यैव ग्रहणं युक्तम्, तत्रार्थे कार्यासम्भवात् तद्वाचिनां समासो विज्ञायत इत्याख्याग्रहणं तुल्यनामधेयपरिग्रहार्थम्, अन्यथा गौर्वाहीक इत्यत्रापि स्यात्; गोशब्दस्येह सादृश्यार्थत्वात्। सर्वे एव हि शब्दा परपदार्थे प्रयुज्यमानाः सादृश्यं गमयन्ति। आख्याग्रहणे तु क्रियमाणे गोशब्दोऽत्र तुल्यनामधेयं न भवतीति समासाभावः। भोज्योष्णमित्यादावुष्णादयः शब्दा गुणवचनाः; तत्रासत्यस्मिन् योगे विशेषणसमासे सति तेषां पूर्वनिपातः स्यात्। अतः परनिपातार्थ आरम्भः। **तुल्यमहानिति।** यद्यप्यत्र 'सन्महत्'

पदमञ्जरी

दित्येके' (ग० सू० ५१। इति ङीष्। वलिशब्दः पामादिः। **युवजरन्निति। जरद्भिरित्यपि** पाठः केनचिदाचार्येण बोधित इति पुंल्लिङ्गेनापि समासो भवतीति भावः। **युवतिर्जरतीति।** कथं विरुद्धवाचिनोः सामानाधिकरण्यम्, अन्योऽन्यधर्मोपलम्भात्तद्रूपत्वारोपाद्भविष्यति। यद्येवम्, विभिन्नलिङ्गयोरप्येवमेव सामानाधिकरण्यसम्भवात् कथं परिभाषा ज्ञाप्यत इति चिन्त्यम्; युवशब्दस्य पूर्वनिपातनियमार्थं वचनम्, अनियमो हि गुणशब्दत्वात्स्यात्॥ ६७॥

**कृत्यतुल्याख्या अजात्या॥ तुल्यपर्यायाश्चेति।** आख्याग्रहणं स्वरूपनिराकरणार्थमिति भावः।

भावबोधिनी

शब्दों का ग्रहण होता है वहाँ लिङ्गविशिष्ट का भी ग्रहण होता है।' अतः 'युवा' से स्त्रीलिङ्ग 'युवति' का भी ग्रहण होता है। इसीलिये इसके उदाहरणों में पुंल्लिङ्ग और स्त्रीलिङ्ग दोनों का समावेश किया गया है।

यद्यपि यौवन और वार्धक्य एक साथ नहीं रह सकते परन्तु कभी-कभी परिस्थितिविशेष से स्वास्थ्यविकृत हो जाने पर एक ही व्यक्ति में इन दोनों का दर्शन होता है। अतः उदाहरण संभव है।

'युवा' शब्द का पूर्वनिपात करने के लिये इस सूत्र की उपयोगिता है॥ ६७॥

कृत्यप्रत्ययान्त और तुल्यार्थवाचक सुबन्त शब्दों का जातिभिन्नवाचक सुबन्त शब्द के साथ समास होता है, और वह तत्पुरुष होता है। उदा०—भोज्योष्णम् [खाने योग्य गरम पदार्थ। भोज्यं च तद् उष्णञ्च] भोज्यलवणम् [खाने योग्य नमकीन पदार्थ। भोज्यं च तद् लवणञ्च।] पानीयशीतम् [पीने योग्य शीतल पदार्थ। पानीयं च तद् शीतम्] [यहाँ भुज्+ण्यत्=भोज्य, पा+अनीयर्=पानीय शब्द कृत्य प्रत्ययान्त हैं। उष्ण और शीत ये गुणवाची हैं। अतः समास होता है।]

तुल्य के पर्यायवाचक—तुल्यश्वेतः [तुल्यश्चासौ श्वेतः। बराबर सफेद] तुल्यमहान् [तुल्यश्चासौ महान् च। बराबर महान्] सदृशश्वेतः [सदृशश्चासौ श्वेतश्च। बराबर सफेद।] सदृशमहान् [सदृशश्चासौ महान् च। बरबार

अजात्येति किम् ? भोज्य ओदनः ॥

**४२०. वर्णो वर्णेन ॥ ६९ ॥ (७५०)**

**वर्णविशेषवाचि सुबन्तं वर्णविशेषवाचिना सुबन्तेन समानाधिकरणेन सह समस्यते, तत्पुरुषश्च**

**न्यासः**

इत्यादिना समासः प्राप्नोति, तथापि परत्वादनेनैव भवति। तुल्याख्यायामस्यावकाशः—तुल्यश्वेत इति, तस्य चातुल्याख्यायामवकाशः—महापुरुष इति। **भोज्य ओदन इति**। ओदनशब्दोऽत्र जातिवचनः ॥ ६८ ॥

**वर्णो वर्णेन ॥** 'विशेषणं विशेष्येण' इति वर्त्तते। तत्र यदि द्वयोरपि वर्णशब्दयोः स्वरूपग्रहणमिह स्याद्, विशेषणविशेष्यभावो नोपपद्येत; अभिन्नार्थत्वात्। न हि तदेव देवदत्तस्य विशेषणत्वं विशेष्यत्वं चोपपद्यते। अथाप्येकस्य स्वरूपग्रहणं स्यात्, अपरस्यार्थग्रहणम् ? एवमप्येकः सामान्यवाची स्याद् वर्णशब्दः, द्वितीयस्तु विशेषवाची कृष्णादिशब्दः; ततश्च प्रत्येकं विशेषणत्वं विशेष्यत्वञ्च न स्यात्। यत्र च तदुभयमस्ति तत्र समास इति प्रागुभयग्रहणस्य प्रयोजनमुक्तम्। तस्मादुभयत्राप्यर्थग्रहणं विज्ञायत इत्याह—**वर्णविशेषवाचीत्यादि। कृष्णसारङ्गः, लोहितसारङ्ग इति**। ननु च कृष्णशब्दो लोहितशब्दश्चावयवे वर्त्तते, सारङ्गशब्दस्तु समुदाये, यथा—शवलशब्दः, तत् कथमवयववृत्तेः कृष्णादिशब्दस्य समुदायवृत्तिना सारङ्गादिशब्देन सामाना-

**पदमञ्जरी**

भोज्योष्णादावनियमे प्राप्ते पूर्वनिपातनियमार्थं वचनम्। **तुल्यमहानिति**। 'सन्महत्' इत्यस्याकृत्यतुल्याख्येषु सावकाशत्वात्कृत्यतुल्याख्येषु परत्वादयमेव समासो युक्त इति भावः। **भोज्य ओदन इति**। प्रतिषेधसामर्थ्याद् विशेषणमित्यपि न भवति ॥ ६८ ॥

**वर्णो वर्णेन ॥** 'विशेषणं विशेष्येण' इति वर्त्तते, तत्र—

द्वयोः स्वरूपग्रहणे न विशेषणता भवेत्।
वर्णश्चासौ वर्ण इति किं व्यावृत्तम् ? किमन्वितम् ?
अथैकत्र विशेषाणां रूपस्यान्यत्र च ग्रहः ?
शुक्लश्चासौ वर्ण इति न स्यात्, वर्णो विशेषणम् ॥

शुक्लस्य वर्णत्वाव्यभिचारात्, तस्मादुभयत्र विशेषग्रहणमित्याह—**वर्णविशेषवाचीत्यादि। कृष्णसारङ्ग इत्यादि**। नानावर्णसमाहारः सारङ्गः, तथा शवलः, तस्य वर्णान्तरसमाहारेऽपि भावात्कार्ष्ण्यान्वयो नियतो न स्यादिति कृष्णो विशेषणम्। एवं लोहितशब्देऽपि द्रष्टव्यम्। ननु च कृष्णशब्दोऽत्रावयवे वर्त्तते, न

**भावबोधिनी**

महान्] 'जातिवाचक के साथ नहीं'—इसका क्या फल है ? भोज्य ओदनः [खाने योग्य चावल। यहाँ ओदन यह जाति-वाचक है। अतः समास नहीं होता है]।

**विमर्श**—भोज्य आदि शब्दों के पूर्वनिपात का नियम करने के लिये यह सूत्र बनाया गया है। आख्या शब्द के कारण केवल 'तुल्य' का नहीं अपितु इसके पर्याय शब्दों का भी ग्रहण होता है ॥ ६८ ॥

वर्ण = रंग विशेष के वाचक सुबन्त शब्द का वर्ण = रंगविशेष के वाचक, समानाधिकरण सुबन्त के साथ समास होता है, और वह तत्पुरुष समास होता है। उदा०—कृष्णसारङ्गः [कृष्णश्चासौ सारङ्गश्च। काला और चितकबरा]. लोहितसारङ्गः [लोहितश्चासौ सारङ्गश्च। लाल और चितकबरा।] कृष्णशवलः [कृष्णश्चासौ शवलश्च।

**समासो भवति। कृष्णसारङ्गः। लोहितसारङ्गः। कृष्णशबलः। लोहितशबलः। अवयवद्वारेण कृष्णशब्दः समुदाये वर्त्तमानः समानाधिकरणो भवति॥**

### न्यासः

धिकरण्यमित्याह—**अवयवद्वारेणेत्यादि**। कृष्णशब्दः उपलक्षणम्। लोहितशब्दोऽप्येवमेव समानाधिकरणो भवति। कृष्णावयवसम्बन्धात् समुदाय एव कृष्ण इत्युच्यते, लोहितावयवसम्बन्धाल्लोहित इति। अत एव गौणत्वादत्र सामानाधिकरण्यस्य 'विशेषणं विशेष्येण' इत्यादिना समासो न प्राप्नोतीतीदमारभ्यते। अथ सारङ्गशब्दस्यापि पक्षे पूर्वनिपातः कस्मान्न भवति? अनुपसर्जनत्वात्। उक्तं ह्येतद्—उपसर्जनमिति महत्याः संज्ञायाः करणमन्वर्थसंज्ञा यथा विज्ञायेतेति। तेनाप्रधानमुपसर्जनमिति। न चात्र समुदायोऽप्रधानम्, किं तर्हि? प्रधानमेव। अवयवानान्तु तदर्थत्वादप्राधान्यम्। अतोऽवयववचनस्यैव कृष्णशब्दादेरुपसर्जनत्वम्, न समुदायवचनस्य सारङ्गादिशब्दस्य॥ ६९॥

### पदमञ्जरी

समुदाये; तस्य सारङ्गत्वात्, तत्कथमवयववृत्तेः कृष्णशब्दस्य समुदायवृत्तिना सारङ्गशब्देन समानाधिकरण्यमत आह—**अवयवद्वारेणेत्यादि**। कृष्णावयवसम्बन्धात् समुदाय एव कृष्ण उच्यत इत्यर्थः। अत एवात्र गौणं सामानाधिकरण्यमिति सूत्रारम्भः। ननु 'तृतीया तत्कृतेन' इत्येवात्र सिद्धः समासः, कथम्? सारङ्गशब्दो गुणवचनः सारङ्गत्वं कृष्णावयवकृतमित्यस्त्येव सिद्धिः; यत्रायमप्यर्थः—'वर्णो वर्णेष्वनेते' इति पूर्वपदप्रकृतिस्वरो न वक्तव्यो भवति, तत्पुरुषे तुल्यार्थतृतीयेत्येव सिद्धत्वात्, तदवश्यं वक्तव्यमेतत्प्रतिषेधार्थम्, इह मा भूत्—कृष्णैतो लोहितैत इति। इदं तु न वक्तव्यम्? इदमपि वक्तव्यम्, इहापि यथा स्यात्—शुक्लबभ्रुः कृष्णशुक्लः हरितशुक्लः बभ्रुकपिलः, यस्य कश्चिदवयवः शुक्लः कश्चिद् बभ्रुः स समुदायोऽवयवशब्दाभ्यां तथोच्यत इति नात्र तत्कृतत्वसंभवः। अत्र कृष्णसारङ्गः इत्यादौ यत्रैकोऽवयवशब्दः, अपरः समुदायशब्दः, तत्रावयवस्याप्रधानत्वादुपसर्जनत्वात् पूर्वनिपातः। द्वयोस्त्ववयवशब्दयोः पर्याय इति द्रष्टव्यम्। इह यस्मिन् प्रयोगे वीरैः पुरुषैस्तद्वान् ग्रामः प्रतिपादयितुमिष्टस्तत्र प्रथममेवान्यपदार्थविवक्षा कार्या—वीराः पुरुषा अस्मिन्सन्तीति वीरपुरुषो ग्राम इति बहुव्रीहिरेव नित्यं यथा स्यात्; अन्यथा पूर्वमनपेक्षितेऽन्यपदार्थे वीराः वीरपुरुषा इति कर्मधारये कृते पश्चादन्यपदार्थविवक्षायां मत्वर्थीये सति वीरपुरुषवान् ग्राम इत्याद्यनिष्टमपि कदाचिदनुषज्येत। सर्वशब्दस्य त्वकारान्तैः कर्मधारयोऽपीष्यते। तस्माच्च मत्वर्थविवक्षायाम् 'अत इनिठनौ' इति ठनं बाधित्वा इनिरेव भवतीति वक्तव्यम्—सर्वं धनं सर्वधनं तदस्यास्तीति सर्वधनी सर्वबीजी, सर्वकेशी। यत्र कर्मधारयो जातिविशेषवचनः, तत्र कर्मधारयान्मत्वर्थीयो भवति—कृष्णसर्पवान्वल्मीकः, लोहितशालिमान् ग्रामः, गौरखरवदरण्यम्, गौरमृगवदिति। न हि बहुव्रीहिणा तज्जात्या तद्वत्त्वं शक्यं प्रतिपादयितुम्॥ ६९॥

### भावबोधिनी

काला और चितकबरा] लोहितशबलः [लोहितश्चासौ शबलश्च। लाल और चितकबरा।] अवयव के माध्यम से कृष्ण शब्द समुदाय अर्थ में वर्तमान होता हुआ समानाधिकरण होता है।

**विमर्श**—अनेक वर्ण एक साथ रहने पर समुदाय को 'सारङ्ग' और 'शबल' कहा जाता है। इनमें कृष्ण और लोहित तो अवयव होते हैं। इस प्रकार अवयववाचक कृष्ण और लोहित का समुदायवाचक सारंग और शबल के साथ किस प्रकार सामानाधिकरण्य होता है—इस शंका का समाधान यह है कि अवयव के माध्यम से इनको भी समुदायवाचक मान लिया जाता है इस प्रकार गौण सामानाधिकरण्य मानकर सूत्र की प्रवृत्ति होती है॥ ६९॥

## ४२१. कुमारः श्रमणादिभिः ॥ ७० ॥ (७५२)

कुमारशब्दः श्रमणादिभिः सह समस्यते, तत्पुरुषश्च समासो भवति। येऽत्र स्त्रीलिङ्गाः पठ्यन्ते—श्रमणा प्रव्रजिता कुलटेत्येवमादयस्तैः सह स्त्रीलिंगः एव कुमारशब्दः समस्यते। ये तु पुंल्लिङ्गा अध्यापकोऽभिरूपकः पण्डित इति, तैरुभयथा; 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (व्या० परि० २५) इति। कुमारी श्रमणा कुमारश्रमणा।

श्रमणा। प्रव्रजिता। कुलटा। गर्भिणी। तापसी। दासी। बन्धकी। अध्यापक। अभिरूपक। पण्डित। पटु। मृदु। कुशल। चपल। निपुण॥

## ४२२. चतुष्पादो गर्भिण्या ॥ ७१ ॥ (७५३)

चतुष्पाद्वाचिनः सुबन्ता गर्भिणीशब्देन समस्यन्ते, तत्पुरुषश्च समासो भवति। गोगर्भिणी। अजागर्भिणी॥

### न्यासः

**कुमारः श्रमणादिभिः॥ तैः सह स्त्रीलिङ्ग एव कुमारीशब्दः समस्यत इति।** न तु पुंल्लिङ्ग इत्यवधारणेन दर्शयति। न हि पुल्लिङ्गस्य स्त्रीलिङ्गेन सामानाधिकरण्यमुपपद्यत इति भावः। **तैरुभयथेति।** स्त्रीलिङ्गः, पुंल्लिङ्गश्च। कथं पुनः पुंल्लिङ्गैः समास उच्यमानः स्त्रीलिङ्गैः स्यादित्यत आह—**प्रातिपदिकग्रहण इति।** गतार्थम्॥ ७०॥

**चतुष्पादो गर्भिण्या॥ चतुष्पाद इति।** चत्वारः पादा यासां ताश्चतुष्पादः। 'पादस्य लोपोऽहस्त्या-

### पदमञ्जरी

**कुमारः श्रमणादिभिः॥** कुमारशब्दस्य पूर्वनिपातनियमार्थं वचनम्॥ ७०॥

**चतुष्पादो गर्भिण्या॥ चतुष्पाज्जातिरिति।** केचिदाहुः—पोटादिसूत्राज्जातिग्रहणमनुवर्त्यमिति।

### भावबोधिनी

कुमार शब्द का श्रमणा आदि के साथ समास होता है और वह तत्पुरुष समास होता है। इस श्रमणादि गण में जो स्त्रीलिङ्ग शब्द पढ़े गये हैं—श्रमणा, प्रव्रजिता, कुलटा आदि, इनके साथ स्त्रीलिङ्ग ही कुमार अर्थात् कुमारी शब्द का समास होता है। और जो पुंल्लिग पठित हैं—अध्यापक, अभिरूपक, पण्डित आदि, इनके साथ दोनों लिङ्गों वाला अर्थात् कुमार और कुमारी का समास होता है, क्योंकि 'प्रातिपादक के ग्रहण में लिङ्गविशिष्ट का भी ग्रहण होता है' [ऐसा नियम है]। उदा०—कुमारी चासौ श्रमणा च—इस विग्रह में कुमारश्रमणा [कुमारी बौद्ध सन्यासिनी]।

[इस गण में पठित शब्द—] श्रमणा। प्रव्रजिता। कुलटा। गर्भिणी। तापसी। दासी। बन्धकी [ये स्त्रीलिङ्ग हैं। अतः इनके साथ 'कुमारी' का समास होता है।] अध्यापक। अभिरूपक। पण्डित। पटु। मृदु। कुशल। चपल। निपुण। [इनके साथ कुमार और कुमारी दोनों का समास होता है।]

**विमर्श**—'इस गण में पठित शब्द विशेषणवाचक हैं। अतः 'विशेषणं विशेष्येण' (पा० सू० २।१।५०) से ही समास सम्भव है परन्तु 'कुमार' शब्द का पूर्वनिपात करने के लिए यह सूत्र बनाया गया है।

ऐतिहासिक दृष्टि से यह सूत्र विशेष महत्त्व का है। इसमें 'श्रमणा' शब्द है। जो बौद्ध संन्यासिनियों के लिए प्रयुक्त होता है। अतः इसके प्रणेता पाणिनि गौतमबुद्ध के बाद अर्थात् ई० पू० ५०० में हुए यह निष्कर्ष निकाला जाता है। इस विषय का विशेष विवेचन 'पाणिनिकालीन भारतवर्ष' नामक ग्रन्थ में देखना चाहिए॥ ७०॥

चतुष्पाद = चार पैरों वाले पशु के वाचक सुबन्त शब्दों का गर्भिणी शब्द के साथ समास होता है, और वह तत्पुरुष समास होता है। उदा० [गौश्चासौ गर्भिणी इस विग्रह में] गोगर्भिणी [गर्भिणी = गाभिन गाय] अजागर्भिणी। [अजा चासौ गर्भिणी। गाभिन बकरी]

* चतुष्पाज्जातिरिति वक्तव्यम् (म० भा० २.१.७० वा० १)। इह मा भूत्—कालाक्षी गर्भिणी। स्वस्तिमती गर्भिणी। चतुष्पाद इति किम्? ब्राह्मणी गर्भिणी॥

### ४२३. मयूरव्यंसकादयश्च॥ ७२॥ (७५४)

समुदाया एव निपात्यन्ते। मयूरव्यंसकादयः शब्दास्तत्पुरुषसंज्ञा भवन्ति। चकारोऽवधारणार्थः परममयूरव्यंसक इति समासान्तरं न भवति। मयूरव्यंसकः। छात्रव्यंसकः। काम्बोजमुण्डः। यवनमुण्डः। छन्दसि—हस्तेगृह्य। पादेगृह्य। लाङ्गलेगृह्य। पुनर्दाय॥

**न्यासः**

दिभ्यः' इत्यन्तस्य लोपः। चतुष्पाज्जातिरिति वक्तव्यमिति। चतुष्पाज्जातिवचना एव गर्भिण्या समस्यन्त इत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—पोटादिसूत्रादिह जातिग्रहणमनुवर्त्तते, तेन चतुष्पाज्जातिवाच्येव गर्भिण्या समस्यते, नान्यदिति॥ ७१॥

मयूरव्यंसकादयश्च॥ मयूरव्यंसक इति। मयूरश्चासौ व्यंसकश्चेति मयूरव्यंसकः। व्यंसकशब्दस्य पूर्वनिपाते प्राप्ते परनिपातार्थः पाठः। एवं चात्र मयूरव्यंसकादीनां यवनमुण्डपर्यन्तानाम्। छन्दसि हस्तेगृह्ये-

**पदमञ्जरी**

अन्ये त्वाहुः—ये शब्दान्तरनिरपेक्षाश्चतुष्पाज्जातिवचनाः,[१] त एवान्तरङ्गत्वाद् गृह्यन्ते, न तु कालाक्ष्यादयो यौगिकाः शब्दान्तरसंनिधानाच्चतुष्पाद्विषया इति। गर्भिणीशब्दस्य परनिपातार्थं वचनम्॥ ७१॥

मयूरव्यंसकादयश्च॥ मयूरव्यंसक इति। व्यंसकः = धूर्त्तः, मयूरश्चासौ व्यंसकश्चेति व्यंसकशब्दस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते वचनम्। एवं छात्रव्यंसकादीनां कम्बोजमुण्डपर्यन्तानाम्। अन्ये त्वाहुः—

**भावबोधिनी**

* चतुष्पाद जो जातिवाची है, उनका ही समास होता है—ऐसा कहना चाहिये।* जिससे यहाँ पर न हो—कालाक्षी गर्भिणी। [यहाँ कालाक्षी जातिवाचक नहीं है। अतः समास नहीं होता है।] चतुष्पाद्—इसका क्या फल है? ब्राह्मणी गर्भिणी। [यहाँ ब्राह्मणी चतुष्पाद्वाची नहीं है अतः समास नहीं होता है।]॥ ७१॥

समुदाय ही निपातित होते हैं। मयूरव्यंसक आदि शब्दों की तत्पुरुष संज्ञा होती है। चकार का प्रयोग अवधारण के लिये है—परममयूरव्यंसकः—ऐसा दूसरा समास नहीं होता है। [अर्थात् गण में पठित जैसे हैं उन्हीं का समास होता है, अन्य किसी प्रकार का नहीं।]

[इस गण में पठित शब्द—] मयूरव्यंसकः [मयूरश्चासौ व्यंसकश्च। बहुत चालाक मोर] छात्रव्यंसकः [छात्रश्चासौ व्यंसकश्च। चालाक विद्यार्थी] काम्बोजमुण्डः [काम्बोजश्चासौ मुण्डश्च। कम्बोज देश का मुण्डित व्यक्ति] यवनमुण्डः [यवनश्चासौ मुण्डश्च। मुण्डित यवन] वेद में—हस्तेगृह्य [हाथ में लेकर]। पादेगृह्य [पैर में लेकर] लांगलेगृह्य [लाङ्गल में लेकर]। पुनर्दाय [पुनः देकर]।

विमर्श—प्रारम्भ के चार शब्दों में गुणवाची होने से व्यंसक और मुण्ड का विशेषण समास करने पर पूर्वनिपात प्राप्त होता है, उसके स्थान पर परनिपात करने के लिये यह सूत्र है।

कुछ अन्य विद्वान् यह मानते हैं कि इनमें उपमान समास है—मयूर इव व्यंसकः, छात्र इव व्यंसकः, कम्बोज इव मुण्डः, यवन इव मुण्डः, अतः 'उपमानानि सामान्यवचनैः' (पा० सू० २।१।५५) से प्राप्त समास का वारण करके तत्पुरुष सामान्य किया गया है। इस कारण 'समासस्य' (पा० सू० ६।१।२२३) इससे अन्तोदात्त होता है 'तत्पुरुषे तुल्यार्थ०' (पा० सू० ६।२।१४) से पूर्वपद का प्रकृतिस्वर नहीं होता है।

[अनु०]* एहीड आदि शब्द अन्यपदार्थ में समास प्राप्त करते हैं।* एहीडम् [एहि ईडे यस्मिन् कर्मणि तत्। जाओ, स्तुति करता हूँ—ऐसा जिस क्रिया में है वह। यहाँ 'ईडे' का 'ईड' यह आदेश भी होता है।] एहियवम् [एहि यौमि यस्मिन् कर्मणि तत्—जाओ, मिलाता हूँ—ऐसा जिस क्रिया में है वह। यहाँ 'यौमि' का 'यव' यह आदेश भी

**एहीडादयोऽन्यपदार्थे।** एहीडम्, एहियवं वर्त्तते। एहिवाणिजा क्रिया। अपेहिवाणिजा, प्रेहिवाणिजा। एहिस्वागता, अपेहिस्वागता, प्रेहिस्वागता। एहिद्वितीया, अपेहिद्वितीया। इहवितर्का। प्रोहकटा, अपोहकटा। प्रोहकर्दमा, अपोहकर्दमा। उद्धरचूडा। आहरचेला। आहरवसना। आहरवनिता। क्रन्त-

**न्यासः**

त्यादि। 'समासेऽनञ्पूर्वे क्त्वो ल्यप्'। भाषायां तु—हस्तेगृहीत्वा, पुनर्दत्त्वेत्येवं भवति। **एहीडादयोऽन्यपदार्थ इति।** एहि ईड इति यत्र कर्मणि वर्त्तते तदुच्यते—**एहीडमिति**। एवम्—**एहियवमिति**। एहि वाणिजेति यस्यां क्रियायां सा **एहिवाणिजा**। एवम्—**अपेहिवाणिजा, प्रेहिवाणिजा**। एहि स्वागतमिति यस्यां क्रियायां सा **एहिस्वागता**। एवम्—**अपेहिस्वागता**। प्रोह कटमिति यस्यां सा **प्रोहकटा**। एवं **प्रोहकर्दमादय आहरवसनान्ताः**। क्रन्धि विचक्षणेति यस्यां क्रियायां सा **क्रन्धिविचक्षणा। उद्धरोत्सृजेति**। तिङन्तयोः समासः।

**पदमञ्जरी**

मयूर इव व्यंसकः, छात्र इव व्यंसकः कम्बोज इव मुण्डः, यवन इव मुंडः, उपमानसमासोऽयम् 'उपमानानि सामान्यवचनैः' इत्येव सिद्धे पुनर्विधानं तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो मा भूदिति, स ह्युपमानसंशब्दनेन विहिते समासे विधीयत इति। **पुनर्दायेति**। 'पुनश्चनसौ छन्दसि' (कात्या० वा० ११३३) इति गतिसंज्ञा वार्त्तिककारीयेति।

गणकारेणेदं पठितम्, एहि इडेति यस्मिन्कर्मणि तद् एहीडम्, एवम्—एहियवम्। एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा। एवम्—अपेहिवाणिजा, प्रेहिवाणिजा। एहि स्वागतमिति यस्यां क्रियायां सा एहिस्वागता। इहवितर्का, लोणमध्यमैकवचनम्। प्रोह करटमिति यस्यां सा प्रोहकरटा; एवं प्रोहकर्दमादय आहरवसनान्ताः। 'कृती छेदने' (धा० पा० १४३५) तदेव वचनम्, मुचादित्वान्नुम्। क्रन्त विचक्षणेति

**भावबोधिनी**

निपातित होता है।] एहिवाणिजा [एहि वाणिजेति यस्यां क्रियायां सा। जाओ व्यापारी जिस क्रिया में वह] अपेहिवाणिजा [अपेहि वाणिजेति यस्यां क्रियायां सा। दूर हटो व्यापारी जिस क्रिया में वह]। प्रेहिवाणिजा [प्रेहि वाणिजेति यस्यां क्रियायां सा। जाओ व्यापारी जिस क्रिया में वह।] एहिस्वागता [एहि स्वागतं यस्यां क्रियायां सा। जाओ, स्वागत है जिस क्रिया में वह] अपेहिस्वागता [अपेहि स्वागतं यस्यां क्रियायां सा]। प्रेहिस्वागता [प्रेहि स्वागतं यस्यां क्रियायां सा]। एहिद्वितीया [एहि द्वितियेति यस्यां क्रियायां सा]। अपेहिद्वितीया [अपेहि द्वितीयेति यस्यां क्रियायां सा [कहीं-कहीं 'प्रेहिद्वितीया' यह अधिक पाठ है।] इहवितर्का [इह वितर्कं यस्यां क्रियायां सा]। प्रोहकटा [प्रोह कटं यस्यां क्रियायां सा]। अपोहकटा [अपोहकटं यस्यां क्रियायां सा]। [कहीं-कहीं 'प्रेहिकटा' और 'अपेहिकटा' ऐसा पाठ मिलता है जो अधिक उचित प्रतीत होता है। पदमंजरीकार ने 'प्रोहकरटा' 'अपोहकरटा' यह पाठ मानते हुए 'प्रोह करटं यस्यां क्रियायां सा, अपोह करटं यस्यां क्रियायां सा'—ऐसा अर्थ किया है।] प्रोहकर्दमा [प्रोह कर्दमं यस्यां क्रियायां सा।] अपोहकर्दमा [अपोह कर्दमं यस्यां क्रियायां सा। कहीं-कहीं 'प्रेहिकर्दमा' यह भी पाठ है।] उद्धरचूडा [उद्धर चूडं यस्यां क्रियायां सा]। आहरचेला [आहर चेलं यस्यां क्रियायां सा]। आहरवसना [आहर वसनं यस्यां क्रियायां सा]। आहरवनिता [आहर वनितां यस्यां क्रियायां सा]। क्रन्तविचक्षणा [क्रन्त विचक्षणेति यस्यां क्रियायां सा]। न्यासकार ने 'क्रन्धिविचक्षणा' पाठ मानकर 'क्रन्धि विचक्षेणि यस्यां क्रियायां सा—यह विग्रह किया है।] उद्धरोत्सृजा [उद्धर उत्सृजेति यस्यां क्रियायां सा।] उद्धमविधमा [उद्धम विधम यस्यां क्रियायां सा]। उत्पचविपचा [उत्पच विपचेति यस्यां क्रियायां सा]। उत्पतनिपता [उत्पत निपतेति यस्यां क्रियायां सा]। [आगे एक नियम दिखाया गया है 'आख्यातमाख्यातेन क्रियासातत्ये' (गणसूत्र अर्थात् एक आख्यात पद का दूसरे आख्यात पद के साथ समास होता है यदि सातत्य = निरन्तरता अर्थ की प्रतीत हो रही हो तो।' इस वक्ष्यमाणवचन से यहाँ के पदों में सातत्य अर्थ की प्रतीति नहीं होती है।]

**विचक्षणा। उद्धरोत्सृजा। उद्धमविधमा। उत्पचविपचा। उत्पतनिपता। उच्चावचम्। उच्चनीचम्। अचितोपचितम्। अवचितपराचितम्। निश्चप्रचम्। अकिञ्चनम्। स्नात्वाकालकः। पीत्वास्थिरक। भुक्त्वासुहितः। प्रोष्यपापीयान्। उत्पत्यपाकला। निपत्यरोहिणी। निषण्णश्यामा। अपेहिप्रसवा। इहपञ्चमी। इहद्वितीया।**

**न्यास**

'आख्यातमाख्यातेन क्रियासातत्ये' इत्येवं सिद्धेऽसातत्यार्थं वचनम्। उद्धरोत्सृजेति यस्यां क्रियायां सा उद्धरोत्सृजा। क्रियाप्रधानश्चायं समासः उत्पतनिपता। उद्धमविधमा। एवमुद्धरोत्सृजेत्यादिकमसातत्यविषयमेव। **उच्चावचमिति**। निपात्यते। उदक् चावाक् चेति विगृह्य। उच्चैश्च नीचैश्चेति विगृह्योच्चनीचमिति निपात्यते। आचितश्चोपचितञ्चेति विगृह्य **आचोपचम्**। आचितश्च पराचितञ्चेति **आचपराचम्**। निश्चितश्च प्रचितञ्चेति **निश्चप्रचम्**। न किञ्चन **अकिञ्चनम्**। **स्नात्वाकालकः**। **पीत्वास्थिरकः**। **भुक्त्वासुहित** इत्येतेषामन्तोदात्तार्थः पाठः। ल्यब्भावश्च निपात्यते। **प्रोष्यपापीयानीति**। ऐकपद्यमैकस्वर्यञ्च समासाद् भवति। एवम्—उत्पत्य-

**पदमञ्जरी**

यस्यां क्रियायां सा क्रन्तविचक्षणा। उद्धर उत्सृजेति यस्यां सोद्धरोत्सृजा। 'आख्यातमाख्यातेन' (ग० सू० २०) इति सिद्धेऽसातत्यर्थं वचनम्। एवम् उद्धमविधमा, उत्पचविपचा, उत्पतनिपता। उदक्च अवाक्च उच्चावचम्,

**भावबोधिनी**

उच्चावाचम् [उदक् च अवाक् च विग्रह है। उदक् का उच्च निपातन है।] उच्चनीचम् [उच्चैश्च नीचैश्च इस विग्रह में उच्चनीच यह निपातित होता है।] आचोपचम् [आचितं च उपचितं च—यह विग्रह है। आच उपच निपातित होते हैं।] आचपराचम् [आचितं च पराचितं च—यह विग्रह है। आच पराच आदेश होते हैं।] निश्चप्रचम् [निश्चितं च प्रचितं च—यह विग्रह है। निश्च प्रच निपातित होता है।] अकिञ्चनम् [नास्ति किञ्चन यस्य सः यह विग्रह है। इसका पुंल्लिङ्ग रूप अकिञ्चनः अधिक प्रामाणिक है।] स्नात्वाकालकः यहाँ ल्यप् का अभाव और समास का अन्तोदात्त निपातित होता है।] पीत्वास्थिरकः [इसमें भी उक्त दो कार्य निपातित होते हैं।] भुक्त्वासुहितः [यहाँ भी उक्त दो कार्य निपातित होते हैं।] प्रोष्यपापीयान् [यहाँ समास के कारण एकपद और एकस्वर होता है।] उत्पत्यपाकला [यहाँ भी समास के कारण एकपद और एकस्वर होता है।] निपत्यरोहिणी [यहाँ भी उक्त दो कार्य होते हैं।] निषण्णश्यामा [यहाँ भी उक्त दो कार्य निपातित होते हैं।] अपेहिप्रसवा। इहपञ्चमी। इहद्वितीया [इन सभी में एक पद और स्वर निपातित होता है।]

'जहि' [हन् धातु लोट् लकार मध्यम पुरुष एकवचन का रूप]—यह कर्मवाचक के साथ बहुल रूप से समासत्व प्राप्त करता है आभीक्ष्ण्य = पुनः पुनः होना अर्थ के प्रतीत होने पर। समास के द्वारा कर्ता अर्थ की प्रतीति होनी चाहिये।* जहिजोडः [जहि जोडम्—इति आभीक्ष्ण्येन य आह सः—यह विग्रह है।] उज्जहिजोडः [उज्जहि जोडम् इति आभीक्ष्ण्येन य आह सः—यह विग्रह है।] जहिस्तम्बः [जहि स्तम्बम् इति आभीक्ष्ण्येन य आह स—यह विग्रह है।] उज्जहिस्तम्बः [उज्जहि स्तम्बम् इति आभीक्ष्ण्येन य आह सः—यह विग्रह है।]

* क्रियासातत्य = क्रिया का निरन्तर होना—यह प्रतीति होने पर आख्यात [तिङन्त] का आख्यात [तिङन्त] के साथ समास होता है।* अश्नीतपिबता [अश्नीत पिबत—इत्येवं यत्र सततमभिधीयते सा क्रिया] पचतभृज्जता [पचत भृज्जत—इत्येवं सततमभिधीयते यत्र सा क्रिया] खादतमोदता [खादत मोदत—इत्येवं सततमभिधीयते यस्यां क्रियायां सा] खादताचमता [खादत आचमत—इत्येवमभिधीयते यस्यां क्रियायां सा। कहीं-कहीं—'खादतवमता' यह अधिक पाठ है। खादत वमत—इत्येवं सततमभिधीयते यस्यां क्रियायां सा]। आहरनिवपा [आहर निवप—इत्येवं सततमभिधीयते यस्यां सा क्रिया]। आवपनिष्किरा [आवप निष्किर इत्येवं सततमभिधीयते यस्यां क्रियायां सा]। उत्पचविपचा [उत्पच विपच इत्येवं सततमभिधीयते यस्यां क्रियायां सा]। भिन्धिलवणा [भिन्धि लवणं भिन्धि लवणमिति

**जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारं चाभिदधाति । जहिजोडः । उज्जहिजोडः । जहिस्तम्बः । उज्जहिस्तम्बः ॥**

**आख्यातमाख्यातेन क्रियासातत्ये । अश्नीतपिबता । पचतभृज्जता । खादतमोदता । खादताचमता ।**

### न्यासः

पाकलादीनाम् । निपत्यरोहिणी । निषण्णश्यामा । अपेहिप्रसवा । इहपञ्चमी । इहद्वितीयेति । ऐकपद्यमैकस्वर्यंञ्च समासे भवति ।

**जहि कर्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधातीति ।** जहीति लोण्मध्यमपुरुषैकवचनम् । तदन्तं कर्मणा च बहुलं समस्यत आभीक्ष्ण्ये गम्यमाने समासेन चेत् कर्त्ता चाभिधीयते । जहिजोडमित्याभीक्ष्णं य आह स उच्यते जहिजोड इति । जहिस्तम्ब इति, 'लोट्; सिप्, हन्तेर्जः' इति जादेशः । जोडादेरत्र कर्मभावः ।

**आख्यातमित्यादि ।** तिङन्तं तिङन्तेन सह समस्यते क्रियासातत्ये गम्यमाने । अश्नीत पिबतेत्यसकृद् यत्रोच्यते तत्र अश्नीतपिबतेति प्रयुज्यते ।

### पदमञ्जरी

उच्चैश्च नीचैश्च उच्चनीचम्, आचितं चोपचितं च आचोपचम् (आचितोपचितम्), निश्चितं च प्रचितं च निश्चप्रचम्—सर्वं एते निपात्यन्ते । न किञ्चन विद्यते यस्य सोऽकिञ्चनः, स्नात्वाकालकादिषु समासान्तोदात्तत्वं ल्यबभावश्च निपातनात् । प्रतीयमानक्रियापेक्षं च समानकर्तृकत्वम्—स्नात्वाकालकः संपन्न इति ।

**जहि कर्मणेति ।** जहीति लोण्मध्यमैकवचनम्; तदेतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत्कर्ता विधीयते । जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः ।

अश्नीत पिबतेत्येवं यत्र सततमभिधीयते सा अश्नीतपिबता । एवं पचतभृज्जता 'भ्रस्ज पाके' (धा० पा० १५८४) ।

### भावबोधिनी

सततमभिधीयते यत्र सा] । छिन्धिविचक्षणा [छिन्धि विचक्षणम्, छिन्दि विचक्षणम् इति सततमभिधीयते यत्र सा] पचलवणा [पच लवणं पच लवणमिति सततमभिधीयते यस्यां क्रियायां सा] पचप्रकूटा [पच प्रकूटं पच प्रकूटमित्येवं सततमभिधीयते यस्यां कियायां सा] ।

जिस तत्पुरुष का कोई लक्षण = सूत्रादि नहीं बनाया गया है [परन्तु वह प्रयोग देखा जाता है] उसको मयूरव्यंसकादि में समझ लेना चाहिये । [जैसे अन्यो राजा—राजान्तरम् । नास्ति कुतो भयं यस्य सः—अकुतोभयः ।

**विमर्श**—प्रस्तुत सूत्र में ऐसे शब्दों के समास का विधान निपातन प्रतीत होता है जिनका किसी अन्य सूत्रादि से समास सम्भव नहीं है । इसमें केवल सुबन्तों का ही नहीं अपि तु तिङन्त शब्दों के भी समास का विधान है ।

यहाँ गणपाठ में उपलब्ध शब्दों के रूप के विषय में भेद दिखाई देता है । कहीं-कहीं प्रेहिस्वागता इसका पाठ नहीं है । एहिकटा आदि के स्थान पर पदमंजरीकार ने 'एहिकरटा' माना है । कहीं-कहीं 'प्रेहिकर्दमा' और 'प्रोहकर्दमा' दोनों का पाठ है । 'उद्धरचूडा' भी मिलता है । 'कृन्तविचक्षणा' के स्थान पर 'कृन्धिविचक्षणा' पाठ भी है । 'अचितोपचितम्' का 'आचोपचम्' और 'अवचितपराचम्' के स्थान पर 'आचपराचम्' यह पाठ मिलता है ]

सबसे महत्त्वपूर्ण बात यह है कि अनेक स्थलों पर इसको 'आकृतिगणोऽयम्' ऐसा लिखकर अकुतोभयः, कान्दिशीकाः, आहोपुरुषिका, अहमहमिका, यदृच्छा, एहिरे, याहिरा, उन्मृजावमृजा, द्रव्यान्तरम् अवश्यकार्यम्—इनका भी उल्लेख है । परन्तु काशिकाकार और न्यासकार इस विषय में मौन हैं । सिद्धान्तकौमुदीकार ने भी वही लिखा है जो काशिकाकार ने लिखा— 'अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादौ द्रष्टव्यः' (प्रस्तुत सूत्रपर सिद्धान्तकौमुदी) । हाँ,

आहरनिवपा। आवपनिष्किरा। उत्पचविपचा। भिन्धिलवणा। छिन्धिविचक्षणा। पचलवणा। पचप्रकूटा। अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्यः॥

॥ इति श्रीजयादित्यविरचितायां काशिकायां वृत्तौ द्वितीयाध्यायस्य प्रथमः पादः ॥

---

### न्यासः

क्रियाप्रधानश्चायं समासः। एवं पचतभृज्जतेत्येवमादयो वेदितव्याः। भिन्धि लवणं भिन्धि लवणमिति यत्राभिधीयते सा भिन्धिलवणा। एवं पचलवणेति ॥ ७२॥

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरणपञ्जिकायां द्वितीयाध्यायस्य प्रथमः पादः समाप्तः॥

---

### पदमञ्जरी

भिन्धि लवणमिति यस्यामभिधीयते सा भिन्धिलवणा। एवं पचलवणा। अविहितलक्षणस्तत्पुरुष इति। यस्य तत्पुरुषस्य लक्षणं न कृतम्, प्राप्तप्रयोगाश्च भवति, स मयूरव्यंसकादेराकृतिगणत्वादत्रैव द्रष्टव्य इत्यर्थः॥ ७२॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां द्वितीयाध्यायस्य प्रथम पादः समाप्तः॥

---

### भावबोधिनी

पदमञ्जरीकार ने अवश्य ही इसके आकृतिगण होने का उल्लेख किया है।

भाष्यकार ने इस सूत्र में प्रयुक्त 'च' को एवकार = निर्धारण अर्थ में माना है। इसलिये पठित रूप से भिन्न का समास नहीं होता है—'परमो मयूरव्यंसकः'।

इस गण में प्रयुक्त अनेक शब्द पाणिनिकालीन मुहावरों के रूप में प्रयुक्त होते रहे होंगे। अतः इस समय उनके सही अर्थों का निर्णय करना कठिन है। विग्रह देखकर इन शब्दों का अर्थ निर्णय करना चाहिये॥ ७२॥

॥ इस प्रकार श्रीजयादित्यविरचित काशिकावृत्ति में द्वितीय अध्याय का प्रथम पाद समाप्त हुआ॥

॥ इस प्रकार जयशङ्करलालत्रिपाठि-विरचित 'भावबोधिनी' हिन्दी व्याख्या में काशिका के द्वितीय अध्याय का प्रथम पाद समाप्त हुआ॥

---

# अथ द्वितीयाध्याये द्वितीयः पादः

## ४२४. पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ १ ॥ (७१२)

एकदेशोऽस्यास्तीत्येकदेशी = अवयवी, तद्वाचिना सुबन्तेन सह पूर्व, अपर, अधर, उत्तरशब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्ते, तत्पुरुषश्च समासो भवति। एकाधिकरणग्रहणमेकदेशिनो विशेषणम्। एकं चेद-धिकरणमेकद्रव्यमेकदेशि भवति। षष्ठीसमासापवादोऽयं योगः। पूर्वं कायस्य पूर्वकायः। अपरकायः। अधर-कायः। उत्तरकायः।

**न्यासः**

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ सामर्थ्यादेकदेशवचना इति। यदि हि पूर्वादयः शब्दा एकदेशवचना स स्युस्तदोत्तरपदस्यैकदेशित्वं न गम्येत; एकदेशिन एकदेशापेक्षत्वात्। तस्मात् सामान्योक्ता अपि पूर्वादयः शब्दाः सामर्थ्यादेकदेशवचनाः समस्यन्त इति विज्ञायते। एकाधिकरणग्रहणमेकदेशिनो विशेषण-मित्यस्यार्थं विस्पष्टीकर्तुमाह—एकं चेत्यादि। एकमित्येकसंख्याविशिष्टं द्रव्यमित्यर्थः। एकद्रव्यमित्यनेनाधिकरण-शब्दोऽत्र द्रव्ये वर्तमान उपात्त इति दर्शयति। ननु 'एकदेशिना' इति तृतीयान्तमेतत्, 'एकाधिकरणे' इत्येतत् सप्तम्यन्तम्, तत् कथं तयोर्भिन्नविभक्तिकयोः सामानाधिकरण्येन विशेषणविशेष्यभाव उपपद्यते, कथञ्च न स्यात्? भिन्नार्थत्वात्? नैतदस्ति; 'छन्दोवत् सूत्राणि भवन्ति' इत्यतो 'व्यत्ययो बहुलम्' इति बहुलवचनात्। 'एका-धिकरणे' इत्यत्र तृतीयार्थ एवैषा सप्तमी। न 'सप्तम्यधिकरणे च' इत्यनेन। अतो नास्ति भिन्नार्थत्वमित्यदोषः। षष्ठीसमासापवादोऽयं योग इति। 'एकदेशिना' इति वचनात् पूर्वादयः शब्दा एकदेशवचना आश्रीयन्ते। सम्बन्धिशब्दा हि नियतमेव प्रतियोगिनमुपस्थापयन्ति। तत्रावयवावयविसम्बन्धे सत्येकदेशिनः षष्ठ्यामुप-जनितायां 'षष्ठी' इति समासः प्राप्नोति, अतस्तदपवादोऽयं योग इति। पूर्वकाय इत्यत्र काय एकदेशी, एकद्रव्यश्च; एकसंख्यायुक्तत्वात्।

**पदमञ्जरी**

पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे ॥ एकदेशोऽस्यास्तीत्येकदेशीति। एकगोपूर्वादिति ठञ् प्राप्नोति, अत एव निर्देशादनिर्द्रष्टव्यः। एकदण्डोऽथयं त्वपशब्दः एको दण्डो यस्येति बहुव्रीहिणैव गतत्वा-न्मत्वर्थ एव दुर्लभः, किं पुनरिनिष्ठञा बाधितः? एकदेशशब्दस्तु कर्मधारय एवावयववचन इति न तत्र बहु-व्रीहिणा गतत्वम्, यथा—कृष्णसर्पवानिति। सामर्थ्यादेकदेशवचना इति। एकदेशमपेक्ष्यैकदेशी भवति, नान्य-थेत्येतत्सामर्थ्यम्। एकाधिकरणग्रहणमेकदेशिनो विशेषणमिति। सत्सप्तम्यन्तवैयधिकरण्येनेति भावः, तदाह— एकं चेदिति। एकत्वसंख्याविशिष्टमित्यर्थः। समानाभिधेयवचन एकाधिकरणशब्दो न भवति, अवयवावयवि-शब्दयोः समानाधिकरण्यानुपपत्तेः, सामानाधिकरण्येनेति प्रकृतत्वाच्च। स्यादेतत्—'समुदायेषु हि दृष्टाः[1] शब्दाः अवयवेष्वपि वर्त्तन्ते' (शाक० परि० ८६) इति न्यायेन सामानाधिकरण्ये सति पूर्वश्चासौ कायश्चेति

**भावबोधिनी**

एकदेश है जिसका वह एकदेशी = अवयवी, इस अवयवी के वाचक सुबन्त शब्द के साथ पूर्व, अपर, अधर, और उत्तर शब्द जो सामर्थ्यवश एकदेश = अवयव के वाचक हैं, का समास होता है, और तत्पुरुष समास होता है। एकाधिकरण का ग्रहण एकदेशी = अवयवी का विशेषण है। यदि एक अधिकरण एकद्रव्य = एकदेशी होता है। यह सूत्र षष्ठीसमास का अपवाद है। [भाव यह है कि एकद्रव्यवाचक अवयविवाचक के साथ पूर्व आदि का समास होता है।] उदा०—पूर्वं कायस्य [इस विग्रह में समास और विभक्तिलोप करने पर] पूर्वकायः [शरीर का पूर्व भाग।]

---

१. 'प्रवृत्ताः' इति वा पाठः।

**एकदेशिनेति किम् ? पूर्वं नाभेः कायस्य। एकाधिकरण इति किम् ? पूर्वं छात्राणामामन्त्रय। कथं**

### न्यासः

**पूर्वं नाभेः कायस्येति।** नाभेरिति दिग्योगलक्षणा पञ्चमी। नाभेरुपरिष्टात् यत् पूर्वं तत् कायस्येत्ययमत्रार्थो विवक्षितः। तेनात्र नाभिरेकदेशिनी न भवति। किं तर्हि ? अवधिभूता, तद्वाची नाभिशब्दः पञ्चम्यन्तो न समस्यते। यस्त्वेकदेशी कायस्तद्वाचिनः कायशब्दस्य भवत्येव समासः। सत्यपि पूर्वशब्दस्य सापेक्षत्वे कायस्य प्राधान्यात् प्रधानस्य च सापेक्षस्यापि समासो भवतीति ज्ञापितमेतद् 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यत्र। **पूर्वं छात्राणामन्त्रयस्वेति।** अत्र बहुत्वसंख्याविशिष्टैकदेशिनश्छात्रा इति न भवति समासः। ननु चात्र परत्वात् 'न निर्द्धारणे' इति षष्ठीसमासनिषेधो भविष्यति, तत् किमेवाधिकरणग्रहणेन ? नैतदस्ति; यदि तर्ह्यामन्त्रयस्वेत्येतन्नापेक्ष्यते तदा पूर्वं छात्राणामित्येतावद्वाक्यं परिसमाप्यते, तदा निर्द्धारणाभावाद् नायं तस्य प्रतिषेधस्य विषय इत्यसत्येकाधिकरणेऽनेकसंख्येनाप्येकदेशिना समासः स्यात्। अथ सर्वं हि वाक्यं क्रियया परिसमाप्यत इति पूर्वं छात्राणामित्यत्र यां काञ्चित् क्रियामध्याहृत्य निर्धारणं परिकल्प्येत, एवं 'पूर्वं कायस्य' इत्यत्रापि निर्द्धारणं स्यात्। अस्ति ह्यत्राप्यपकर्षणक्रिया निर्द्धारणहेतुः। तथा च तस्यैव योगस्य विषये किलारभ्यमाणोऽयं योगस्तदपवादः स्यात्। न चोत्सर्गापवादयोर्विप्रतिषेध उपपद्यते, तत् कथं परत्वात् 'न निर्द्धारणे'

### पदमञ्जरी

विशेषणमित्येव सिद्धः समासो नार्थ एतेन, एवं च कृत्वा परवल्लिङ्गमित्यत्र तत्पुरुषग्रहणं न कर्तव्यं भवति, कथम् ? उत्तरपदार्थप्रधानत्वादेव सिद्धमिति, तत्राह–**षष्ठीसमासापवादोऽयं योग इति।** सिद्धं तु कथञ्चित्पूर्वकाय इति, कायपूर्व इत्यस्य निवृत्त्यर्थमेव तु सूत्रं कर्तव्यमित्यर्थः। **पूर्वं कायस्येति।** यद्यपि दिशि दृष्टः शब्दो दिक्शब्द इत्याश्रयणात् सम्प्रत्यदिग्वृत्तिनापि योगे पञ्चमी भवति, 'तस्य परमाम्रेडितम्' इति लिङ्गादवयववृत्तिभिर्योगे षष्ठी भवति।

**पूर्वं नाभेः कायस्येति।** नाभेरिति दिग्योगलक्षणा पञ्चमी, कायसम्बन्धी नाभ्यपेक्षया पूर्वो भाग इत्यर्थः। तत्र नाभिरेकदेशी न भवतीति न तेन समासो भवति। यस्त्वेकदेशी कायस्तेन समासो भवत्येव—पूर्वकायो नाभेरिति, पूर्वशब्दस्य सम्बन्धिशब्दत्वेन नित्यसापेक्षत्वादिति केचिदाहुः। अन्ये तु—यत्रार्थप्रकरणादिनावधिर्गम्यते तत्रैव समासः, न शब्दोपादाने इत्याहुः। **पूर्वं छात्राणामिति।** नेयं निर्धारणे षष्ठी, किं तर्हि ? समुदायः छात्राणामित्यनेनोच्यत इति बहुवचनम्, यथा—छात्राणां पञ्चम इति, ततश्च छात्राणामेकदेशित्वमस्त्येव, किं तु

### भावबोधिनी

अपरकायः [अपरं कायस्य—इस विग्रह में समास विभक्तिलोप करने पर रूप बनता है। शरीर का अपर = भाग]। अधरकायः [अधरं कायस्य। शरीर का नीचेवाला भाग]। उत्तरकायः [उतरं कायस्य। शरीर का उतरी भाग]।

एकदेशी = अवयवी के साथ—इसका क्या प्रयोजन है ? पूर्वं नाभेः कायस्य [शरीर की नाभि से पूर्व। यहाँ नाभि = अवयवी न होकर अवयव है। अतः समास नहीं होता है।] एकाधिकरण = एकत्वविशिष्ट द्रव्यवाचक के साथ—इसका क्या प्रयोजन है ? पूर्वं छात्राणाम् आमन्त्रय [छात्रों में पूर्व वाले को आमन्त्रित करो। यहाँ छात्राणाम् यह बहुत्वविशिष्ट होने से समास नहीं होता है।]

'सायाह्नः' 'मध्याह्नः' ये कैसे बनते हैं ? "संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ' (पा० सू० ६।३।११०) इस ज्ञापक के द्वारा अहन् शब्द के साथ सभी एकदेश = अवयववाचकों का समास होता है।

विमर्श—एकम् च तद् अधिकरणं च—यह कर्मधारय है। सप्तमी यहां तृतीया के अर्थ में है—एकाधिकरणेन। 'छन्दोवत् सूत्राणि भवन्ति' के अनुसार विभक्तिव्यत्यय है। इस प्रकार—'एकाधिकरणेन एकदेशिना पूर्वापरादयः समस्यन्ते' यह अर्थ होता है।

प्रतिषिद्धायां 'विशेषणं विशेष्येण' (२।१।५७) इति भवत्येव समासः। पूर्वनिपातश्च तत्र नियोगतो विशेषणस्यैव॥

**४३५. क्तेन च पूजायाम् ॥ १२ ॥ (७०६)**

'मतिबुद्धिपूजार्थेभ्यश्च' (२।३।१८८) इति वक्ष्यति, तस्येदं ग्रहणम्। पूजाग्रहणमुपलक्षणार्थम्। क्तो यः पूजायां विहितस्तेन षष्ठी न समस्यते। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः।

**न्यासः**

समासः स्यात् तदा द्वयोरपि पदयोः प्रथमानिर्दिष्टत्वादुपसर्जने सति पक्षे विशेषणस्यापि पूर्वनिपातः स्यात्, स च नेष्यते। विशेषणसमासे सति विशेषणस्यैव समासशास्त्रे प्रथमानिर्दिष्टत्वात् पूर्वनिपातो भवतीति न भवत्येष दोषप्रसङ्गः॥ ११॥

**क्तेन च पूजायाम्॥ 'मतिबुद्धिपूजार्थेभ्यश्च'** इति वक्ष्यतीति। क्तमिति वाक्यशेषः। **तस्येदं ग्रहणमिति**। एतेन 'मतिबुद्धि' इत्यादिना सूत्रेण यो विहितः क्तः, तस्य पूजायामन्यत्र च सर्वस्य विहितस्येदं ग्रहणम्। न केवलं पूजायां यो विहितस्तस्यैवेष्यत इत्यभिप्रायः। अत एवाह— **पूजाग्रहणमुपलक्षणार्थमिति**। कस्योपलक्षणार्थम्? 'मतिबुद्धि' इत्यादौ सूत्रे निर्दिष्टार्थस्य यः क्तो विधीयते तस्य मत्यादेः। तेन न केवलं पूजायां यः

**पदमञ्जरी**

निर्देशो द्वयोरपि तुल्यः। अथ तत्राप्रधानमुपसर्जनमाथं चाप्राधान्यमिति द्रव्यगुणादिषु तेन प्रकारेण व्यवस्था, षष्ठीसमासेऽपि तथैव व्यवस्था भविष्यति। तस्माद्यत्तत्र प्रत्युदाहरणम्—तक्षकः सर्प इति, तयोः षष्ठ्यन्तयोः समासप्रसङ्ग एव दोषः, तन्निवृत्तये च प्रतिषेध इति वाच्यम्। तदिह 'किं च स्यात्' इत्यादिकमेवानुपपन्नम्, उदाहरणं तूपपन्नम्, यदि माराविकशब्दः संज्ञा। अथ सोऽपि योगवृत्तिः, तर्हि तदप्यनुपपन्नम्। एवं पाटलिपुत्रेऽपि द्रष्टव्यम्॥ ११॥

**क्तेन च पूजायाम्॥ तस्येति**। मत्यादिसूत्रविहितस्य सर्वस्यैव क्तस्य ग्रहणं न तु पूजायामेव विहितस्येत्यर्थः। कथं तर्हि पूजाग्रहणमित्याह— **पूजाग्रहणमिति**। विवक्षितस्य क्तस्य तटस्थमुपलक्षणं पूजाग्रहणम्, गृहस्येव काकः, न तु समासनिषेधार्थमित्यर्थः। तेन मतिबुद्ध्योरपि विहितस्य ग्रहणं भवतीति भावः। **पूजायां विहित इति**। वर्तमानादिति शेषः। **राज्ञामिति**। 'क्तस्य च वर्तमाने' इति षष्ठी। कथं राजसंमतः, राजाभिमत इति, अस्ति हि भट्टिकाव्ये प्रयोगः—'कालहं स राममहितः कृतवान्' (भट्टि० १०.२) इति, 'मह पूजायाम्' (धा० पा० ७३०) रामस्य महित इत्यर्थः? कश्चिदाह—"यदा वर्तमाने क्तस्तदा षष्ठसमासनिषेधश्च, यदा भूते क्तस्तदा कर्तरि तृतीयैव भवति, यथा—'पूजितो यः सुरैरपि' इति, तस्याः 'कर्तृकरणे कृता बहुलम्' इति समासः" इति। स्यादेवं यदि भूते क्तो लभ्यः, न; नाप्राप्ते तस्मिन्नारभ्यमाणः 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तस्तस्य बाधको भवति, यथा च 'वडवाया वृषे वाच्य' इति अपत्ये प्राप्तो ठक् ततोऽपकृष्य विधीयते अपत्ये त्वणेव भवतीति वक्ष्यति। एवं च 'पूजितो यः सुरैरपि' इत्यर्चिकित्स्योऽपशब्दः। त्वया ज्ञातो मया ज्ञात इति तु भवत्येव; तेनेत्यधिकारे उपज्ञात इति निर्देशात्।

**भावबोधिनी**

किसको पहले रखा जाय—यह व्यवस्था नहीं बन पाती। कभी विशेष्य पहले होता और कभी विशेषण।] अनन्तर प्राप्ति अर्थात् 'षष्ठी' (पा० सू० २।२।८) से होने वाली प्राप्ति का प्रतिषेध हो जाने पर 'विशेषणं विशेष्येण बहुलम्' (पा० सू० २।१।५७) इस सूत्र से समास होता ही है। इस स्थिति में विशेषण का ही पूर्वनिपात नियमितरूप से होता है। [क्योंकि 'विशेषणम्' यही प्रथमानिर्दिष्ट है। यही उपसर्जन है, 'उपसर्जनं पूर्वम्' (पा० सू० २।२।३०) से इसी का पूर्वनिपात होता है।]॥ ११॥

'मतिबुद्धिपूजार्थेभ्यश्च' (पा० सू० २।३।१८८) आगे कहा जायगा उससे विहित 'क्त' का ही यहाँ ग्रहण होता है। पूजाग्रहण उपलक्षणार्थ है। [अर्थात् 'मतिबुद्धिपूजार्थेभ्यश्च' (पा० सू० २।३।१८८) इस सूत्र का उपलक्षण है केवल पूजा का बोधन नहीं है अतः सभी अर्थों में विहित 'क्त' का ग्रहण होने से किसी का भी समास नहीं होता है।]

पूजायामिति किम् ? छात्रस्य हसितं छात्रहसितम् ॥

**४३६. अधिकरणवाचिना च ॥ १३ ॥ (७०७)**

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३।४।७६) इति वक्ष्यति, तस्येदं ग्रहणम् । अधिकरण-वाचिना क्तेन षष्ठी न समस्यते । इदमेषामासितम् । इदमेषां यातम् । इदमेषां भुक्तम् ॥

**न्यासः**

क्तो विहितस्तेन षष्ठीसमासप्रतिषेधो भवति, अपि तु मतिबुद्ध्योरपि यो विहितस्तेनापि । राज्ञां मत इति । 'क्तस्य च वर्त्तमाने' इति षष्ठी । पूजायां किम् ? छात्रस्य हसितं छात्रहसितम् । 'नपुंसके भावे क्तः' । शेषलक्षणा षष्ठी ॥ १२ ॥

**अधिकरणवाचिना च ॥ इदमेषामासितमिति ।** अस्यतेऽस्मिन्नित्यधिकरणे क्तः । 'अधिकरण-वाचिनश्च' इति षष्ठी । एवं पीतमित्यादावपि । अधिकरणवाचिनेति किम् ? छात्रस्य हसितं छात्रहसित-मिति ॥ १३ ॥

**पदमञ्जरी**

अपर आह—'क्तेन च पूजायाम्' इत्यादिषु कारकषष्ठ्या एव निषेधः । तदेव तु कर्त्रादिकारकं यदा शेषरूपेण विवक्ष्यते तदा भवत्येव समास इति । तत्र स्वरे विशेषः, कारकषष्ठ्याः समासे कृत्स्वरो भवति, शेषषष्ठ्याः समासे समासान्तोदात्तत्वमिति । एवं तु यत् 'जनिकर्तुः प्रकृतिः', 'तत्प्रयोजको हेतुश्च' इत्यादा-वुच्यते—'निपातनात्समासः' इति, तदनुपपन्नम्; शेषषष्ठ्या एव समासस्य सिद्धत्वात् । अथ येऽमी नवीना वैयाकरणा आरभन्ते तदपार्थकमापद्येत । तस्मादाप्तप्रयोगस्य यथाकथंचिन्निर्वाहः, न तु यथारुचि पदयोग इति धीरा मन्यन्ते ॥ १२ ॥

**अधिकरणवाचिना च ॥** 'अधिकरण' इत्येव सिद्धे वाचिग्रहणं चिन्त्यप्रयोजनम्, कथम् ? 'किंवृत्ते लिप्सायाम्' 'यद्वृत्तान्नित्यम्' इति, नायमधिकरणे क्तः, क्व तर्हि ? भावे । किमो वृतं यस्मिन्, यदो वृतं यस्मिन्निति व्यधिकरणपदो बहुव्रीहिः ॥ १३ ॥

**भावबोधिनी**

पूजा में विहित जो क्त, तदन्त के साथ षष्ठ्यन्त का समास नहीं होता है । उदा०—राज्ञां मतः [राजाओं का माना हुआ], राज्ञां बुद्धः [राजाओं का जाना हुआ], राज्ञां पूजितः [राजाओं का पूजा हुआ], [इनमें 'क्तस्य च वर्तमाने' (पा० सू० २।३।६७, से षष्ठी होती है । उससे प्राप्त समास का निषेध होता है ।] पूजा में—यह किसलिये है ? छात्रस्य हसितम्, छात्रहसितम् [छात्र का हँसना] । [यहाँ भाव में क्त है । शेष अर्थ में षष्ठी है । पूजा अर्थ नहीं है । समासनिषेध नहीं होता है ।]

**विमर्श**—यह सूत्र 'मतिबुद्धिपूजार्थेभ्यश्च' (पा० सू० ३।२।१८८) इस सूत्र द्वारा वर्तमानकाल अर्थ में विहित 'क्त' के साथ ही समास का निषेध करता है । अतः भूतकाल अर्थ में होने होने वाले 'क्त' प्रत्ययान्त के साथ समास होता ही है, निषेध नहीं होता है । यहाँ कर्ता अर्थ में तृतीया होती है—राजपूजितः । यहाँ राज्ञा पूजितः यह विग्रह है ॥ १२ ॥

'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (पा० सू० ३।४।७६) यह सूत्र आगे कहा जायगा; इससे विहित 'क्त' का यहाँ ग्रहण है । अधिकरणवाची क्तान्त [के] साथ का समास नहीं होता है । उदा०—इदम् एषाम् आसितम् [यह इनका बैठने का स्थान है ।] इदम् एषां यातम् [इनका यह मार्ग है ।] इदम् एषां भुक्तम् [यह इनका भोजन का पात्र है ।]

**विमर्श**—'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः (पा० सू० ३।४।७६) ध्रौव्यार्थक=स्थित्यर्थक [अकर्मक], गत्यर्थक और प्रत्यवसानार्थक = भक्षणार्थक धातुओं से जो 'क्त' होता है वह अधिकरण कारक अर्थ में समझना चाहिये ।

## ४३७. कर्मणि च ॥ १४ ॥ (७०८)

**'क्तेन' इति निवृत्तम्। कर्मग्रहणं षष्ठीविशेषणम्। कर्मणि च या षष्ठी सा न समस्यते। 'उभयप्राप्तौ कर्मणि' (२।३।८) इति षष्ठ्या इदं ग्रहणम्। आश्चर्यो गवां दोहोऽगोपालकेन। रोचते ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं देवदत्तेन। विचित्रा सूत्रस्य कृतिः पाणिनिना॥**

### न्यासः

**कर्मणि च ॥ 'उभयप्राप्तौ कर्मणि' इत्यस्याः षष्ठ्या इदं ग्रहणमिति।** एतच्च पुनः 'कर्त्तरि च' इति प्रतिषेधाद् विज्ञायते। यदि हि कर्मणि या काचित् षष्ठी तस्याः सर्वस्या इदं ग्रहणं स्यात् तदा 'कर्त्तरि च' इति पुनः प्रतिषेधं न कुर्यात्; अनेनैव सिद्धत्वात्। यत्र हि कर्त्तरि तृजकौ विहितौ तत्र नियोगतः कर्मणि षष्ठ्या भवितव्यम्। तस्मात् 'कर्त्तरि च' इति पुनः प्रतिषेधवचनादुभयप्राप्तौ कर्मणि या षष्ठी विहिता तस्या अत्र ग्रहणमवसीयते। 'उभयप्राप्तौ कर्मणि' इति षष्ठ्या इह ग्रहणादिध्मव्रश्चनः; पलाशशातनः, इक्षुभक्षिकां मे धारयसीति समासनिषेधो न भवति ॥ १४ ॥

### पदमञ्जरी

**कर्मणि च ॥ उभयप्राप्तौ कर्मणीति।** अनेकार्थत्वान्निपातानामितीत्यर्थे चशब्दोऽयम्, तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यत इत्यर्थः। यदि च या काचन कर्मणि षष्ठी गृह्येत 'कर्तरि च' इति निषेधं न कुर्याद्, अनेनैव सिद्धत्वात्। **साधु पयसः पानमिति।** कर्मणि च येन संस्पर्शादिति नित्यसमासार्थं वचनमिति वक्ष्यति, तत्र पयः पानं सुखमित्युदाहरिष्यते। इदं तु शरीरसुखस्याविवक्षायां रोगाद्यभिभूतोऽशक्नुवन्नेव यदा साधु पिबति, तदा द्रष्टव्यम् ॥ १४ ॥

### भावबोधिनी

साथ ही भाव और कर्म अर्थ भी 'च' के बल से समझना चाहिये। इस आधार पर—आस्यते अस्मिन् तत् आसनम् = जिस पर बैठा जाय। यायते = गम्यतेऽस्मिन् तत्—यातम् = जिस पर चला जाय = मार्ग। भुज्यतेऽस्मिन् तत्—भुक्तम् = जिसमें खाया जाय—भोजन का पात्र थाली आदि। इस प्रकार के क्त-प्रत्ययान्त के साथ भी षष्ठ्यन्त का समास नहीं होता है। इनमें 'अधिकरणवाचिनश्च' (पा० सू० २।३।६८) सूत्र से षष्ठी होती है ॥ १३ ॥

'क्तेन' इसकी अनुवृत्ति नहीं होती है। कर्मग्रहण षष्ठी का विशेषण है। कर्म अर्थ में जो षष्ठी होती है उस [षष्ठ्यन्त] का समास नहीं होता'। 'उभयप्राप्तौ कर्मणि' (पा० सू० २।३।८) इससे होने वाली षष्ठी का ही प्रयोग होता है। उदा०—आश्चर्यो गवां दोहः अगोपालकेन [अगोपालक = अहीर से भिन्न व्यक्ति का गाय का दूध दुहना आश्चर्य का विषय है।] रोचते [मे] ओदनस्य भोजनं देवदत्तेन। [देवदत्त का चावल खाना मुझे अच्छा लगता है।] साधु खलु पयसः पानं देवदत्तेन [देवदत्त का दूध पीना अच्छा है।] विचित्रा सूत्रस्य कृतिः पाणिनिना। [पाणिनि की सूत्रों की रचना विचित्र = आश्चर्यकारक है।]

**विमर्श**—जहाँ कर्ता और कर्म दोनों में षष्ठी की सम्भावना होती है ऐसे कृदन्त शब्द के योग में 'उभयप्राप्तौ कर्मणि' (पा० सू० २।३।८) यह सूत्र कर्म में ही षष्ठी का नियमन करता है। इस प्रकार की षष्ठी वाले का समासनिषेध इस सूत्र से होता है। उदाहरण में (कृदन्त) दोहन क्रिया का कर्ता अगोपालक है और कर्म 'गो' है। कर्म में ही षष्ठी का विधान है। इसके साथ षष्ठी समास नहीं होता है। जहाँ केवल कर्म रहता है वहाँ 'कर्तृकर्मणोः कृति' (पा० सू० २।३।६५) से ही षष्ठी होती है, उसका समासनिषेध नहीं होता है। इसीलिये महाभाष्य के प्रारम्भ में "शब्दानाम् अनुशासनम्—शब्दानुशासनम्" यह समास प्रयोग हुआ है। यहाँ 'इध्मप्रवश्चनः' के समान 'कृद्योगा च षष्ठी समस्यते इति वक्तव्यम्' यह वचन प्रवृत्त होता है ॥ १४ ॥

**४३८. तृजकाभ्यां कर्तरि ॥ १५ ॥ (७०९)**

**कर्तृग्रहणं षष्ठीविशेषणम् । कर्त्तरि या षष्ठी सा तृचाऽकेन च सह न समस्यते । भवतः शायिका । भवत आसिका । भवतोऽग्रगामिका । तृच् कर्त्तर्येव विधीयते, तत्प्रयोगे कर्तरि षष्ठी नास्ति । तस्मात्तृज्ग्रहण-मुत्तरार्थम् । कर्तरीति किम् ? इक्षुभक्षिकां मे धारयसि ॥**

**४३९. कर्त्तरि च ॥ १६ ॥ (७१०)**

**कर्त्तरि च यौ तृजकौ ताभ्यां सह षष्ठी न समस्यते । सामर्थ्यादकस्य विशेषणार्थं कर्तृग्रहणमितरत्र**

**न्यासः**

**तृजकाभ्यां कर्त्तरि ॥** भवतः शायिकेत्यादौ 'भावे पर्यायार्हणोत्पत्तिषु ण्वुज् भवति' इति 'कर्तृकर्मणोः कृति' इति कर्त्तरि षष्ठी । तृचा योगे कर्त्तरि षष्ठी नास्ति, तेनैव कर्त्तुरभिहितत्वात्, तर्हि किमर्थं तृचो ग्रहण-मित्याह—**तस्मादित्यादि । इक्षुभक्षिकां मे धारयसीति ।** पूर्ववण् ण्वुच् । अत्रेक्षुशब्दात् कृद्योगे कर्मणि षष्ठी । 'मे' इति कर्त्तरि षष्ठी कृद्योगैव । 'उभयप्राप्तौ कर्मणि' इत्यत्र न प्रवर्त्तते; 'अकाकारयोः प्रतिषेधः' इति वचनात् ॥ १५ ॥

**कर्त्तरि च ॥ इतरत्र व्यभिचाराभावादिति ।** तृचि । सामर्थ्यादकस्येदं विशेषणम् । कर्तृग्रहणमित्यत्र

**पदमञ्जरी**

**तृजकाभ्यां कर्तरि ॥ कर्तृग्रहणं षष्ठीविशेषणमिति । अथ कस्माद्विपर्ययो नाश्रीयते–इह तृजकविशेषणं** कर्तृग्रहणमुत्तरत्र षष्ठीविशेषणमिति, एवं तृज्ग्रहणमुत्तरार्थमिति न वक्तव्यं भवति ? उच्यते; 'नित्यं क्रीडा-जीविकयोः' इत्यत्र तृज्ग्रहणस्याननुवृत्तिः शङ्क्येत 'कर्त्तरि च' इत्यत्र सम्बन्धासम्भवात्, न हि तृज्प्रयोगे कर्तरि षष्ठी सम्भवतीति । ननु च 'तृज्क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते' इति वक्ष्यति, एवं तर्हि तथानाश्रितमित्येव । **भवतः शायिकेति ।** 'पर्यायार्हणोत्पत्तिषु ण्वुच्' । **तृच्प्रयोगे कर्त्तरि षष्ठी नास्तीति ।** तेनैव कर्तुरभिहितत्वात् । **इक्षुभक्षिकामिति ।** कर्मणि षष्ठ्याः समासः । **म इति ।** 'धारेरुत्तमर्णः' इति संप्रदाने चतुर्थी ॥ १५ ॥

**कर्त्तरि च ॥** सम्भवे व्यभिचारे च सति विशेषणविशेष्यभावो भवतीत्याह—**सामर्थ्यादिति ।**

**भावबोधिनी**

कर्तृग्रहण षष्ठी का विशेषण है । कर्ता अर्थ में जो षष्ठी होती है वह [षष्ठ्यन्त] तृच् और अक [तृजन्त और अकान्त के साथ समास नहीं प्राप्त करती है । उदा०—भवतः शायिका ['भावे पर्यायार्हणोत्पत्तिषु ण्वुच्' (पा० सू० ३।३।१११) से ण्वुच् = अक प्रत्यय करने पर शायिका । आपके सोने की पारी है] । भवतः आसिका [आपके बैठने की पारी है ।] भवतः अग्रगामिका [आपकी आगे जाने की पारी है । ण्वुच् प्रत्यय-विधायक सूत्र की विशेष व्याख्या काशिका के चतुर्थ भाग में देखें] तृच् प्रत्यय तो कर्ता अर्थ में ही किया जाता है, अतः इस के प्रयोग में कर्ता में षष्ठी नहीं होती है [क्योंकि तृच् प्रत्यय से ही कर्ता का अभिधान हो चुका रहता है । तब तृच् का ग्रहण किसलिये है ?] इसलिये तृच् का ग्रहण उत्तरसूत्र में अनुवृत्ति के लिये है ।

कर्ता अर्थ में — यह किसलिये है ? इक्षुभक्षिकां मे धारयसि । [मेरा ईख चूसना तुम्हारे ऊपर बाकी है । यहाँ 'भक्षिका' का कर्म इक्षु' है । अतः निषेध न होकर समास हो जाता है ।]

**विमर्शः**—कुछ ऐसे प्रयोग देखे जाते हैं जिनमें तृच् या अक प्रत्यय वाले पदों के साथ कर्तृषष्ठ्यन्त का समास देखा जाता है, जैसे —'घटानां निर्मातुः त्रिभुवनविधातुश्च कलहः ।' ऐसे स्थलों पर शेष = सम्बन्ध-सामान्य अर्थ में षष्ठी मान लेने से समास होने में बाधा नहीं है । इसके उदाहरणों की समीक्षा अग्रिम सूत्र के विमर्श में देखें ॥ १५ ॥

कर्ता अर्थ में जो तृच् और अक [तृजन्त और अकप्रत्ययान्त] उनके साथ षष्ठी = षष्ठ्यन्त का समास नहीं होता है । सामर्थ्यवश 'अक' को विशेषित करने के लिये कर्तृग्रहण है अन्य = तृच् में तो व्यभिचार नहीं है । [भाव यह

**व्यभिचाराभावात् । अपां स्रष्टा । पुरां भेत्ता । वज्रस्य भर्त्ता । ननु च भर्तृशब्दो ऽयं याजकादिषु पठ्यते ? संबन्धिशब्दस्य पतिपर्यायस्य तत्र ग्रहणम् । अकः खल्वपि—ओदनस्य भोजकः । सक्तूनां पायकः ॥**

### ४४०. नित्यं क्रीडाजीविकयोः ॥ १७ ॥ (७११)

**'न' इति निवृत्तम्, न तृजकौ । नित्यं समासो विधीयते । क्रीडायां जीविकायां च नित्यं षष्ठी**

**न्यासः**

हेतुः । सम्भवव्यभिचारे हि विशेषणविशेष्यभावो भवति । न हि तृच् कर्त्तारं व्यभिचरति; तस्य कर्त्तर्येव विधानात् । अकस्तु व्यभिचरति; तस्य भावेऽपि विधानात् । अतः सामर्थ्यादकस्यैव विशेषणं कर्तृग्रहणम्, न तृचः । **अपां स्रष्टेति** । अपामिति कर्मणि षष्ठी । **अपां स्रष्टेति** तृच्, व्रश्चादिना षत्वम् । 'सृजिदृशोर्झल्यमकिति' इत्यमागमः ।

**ननु चेत्यादि** । याजकादिपाठाद् भवितव्यमेवात्र समासेनेत्यभिप्रायः । **सम्बन्धिशब्दस्येत्यादिना** परीहारः । होतृशब्देन सम्बन्धिशब्देन साहचर्याद् भर्तृशब्दोऽपि सम्बन्धिशब्दस्तत्र गृह्यते, अयं तु क्रियाशब्दः—बिभर्त्तीति भर्त्ता । **सक्तूनां पायक इति** 'आतो युक् चिण्कृतोः' इति युक् । अथ किमर्थं तृचः सानुबन्धकस्योच्चारणम् ? तृनो निवृत्त्यर्थमिति चेत्, नैतदस्ति; तद्योगे 'न लोकाव्ययनिष्ठा' इत्यादिना षष्ठीप्रतिषेधात् । एवं तर्ह्येतदेव ज्ञापकम्—तृन्योगेऽपि क्वचित्षष्ठी भवतीति । तेन 'भीष्मः कुरूणां भयशोकहर्ता' इत्यादि सिद्धं भवति ॥ १६ ॥

**नित्यं क्रीडाजीविकयोः ॥ उद्दालकपुष्पभञ्जिकेति** । 'रोगाख्यायां ण्वुल् बहुलम्' इत्यनुवर्त्तमाने

**पदमञ्जरी**

**सम्बन्धिशब्दस्येति** । 'अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी' (व्या० परि० १०८) इति भावः । अन्यस्त्वाह—होतृशब्दसाहचर्यादिति; तन्न, न हि तत्र बह्वृचो होता गृह्यते । स एव सम्बन्धिशब्दः क्षीरहोतेत्यादौ क्षीरस्य क्षेप्तेत्येव गम्यते ॥ १६ ॥

**नित्यं क्रीडाजीविकयोः ॥ नेति निवृत्तमिति** । नित्यग्रहणाद्, महाविभाषाधिकाराद्विकल्पेनैव पाक्षिकस्य

**भावबोधिनी**

है कि अक प्रत्यय तो कर्ता अर्थ के अतिरिक्त अन्य अर्थों में भी होता है । अतः इसको विशिष्ट करने के लिये 'कर्तरि' का ग्रहण है । तृच् प्रत्यय तो केवल कर्ता अर्थ में ही होता है । इसको अन्य अर्थ में नहीं देखा जाता है, अतः इसके लिये 'कर्तरि' यह विशेषण व्यर्थ है । उदा०—अपां स्रष्टा । [सृज्+तृच् जल की सृष्टि करने वाले] । पुरां भेत्ता [पुरों का भेदन करने वाले] । वज्रस्य भेत्ता [वज्र का भेदन करने वाले । इनमें तृच् प्रत्ययान्त शब्दों के साथ कर्म में षष्ठ्यन्त पदों का समास नहीं होता है ।]

प्रश्न—याजकादिगण में भर्तृशब्द पठित है ? [अतः इस तृजन्त का समास होता ही है ? इसका समाधान यह है कि पति के पर्यायवाची सम्बन्धिवाचक का ही ग्रहण है ।] अक-प्रत्ययान्त का भी समास नहीं होता है—ओदनस्य भोजकः । सक्तूनां पायकः [चावल खाने वाला । सत्तू पीने वाला ] ।

**विमर्श**—प्रस्तुत सूत्र पर काशिकाकार की व्याख्या कुछ प्रमादग्रस्त प्रतीत होती है । उन्होंने तृच् और अक दोनों की अनुवृत्ति मानी है । परन्तु तृच् की अनुवृत्ति का कोई औचित्य नहीं है क्योंकि यदि कर्ता अर्थ में तृच् होगा तो उसी के द्वारा कर्ता का अभिधान हो जाने पर कर्ता अर्थ में षष्ठी ही नहीं प्राप्त है तब समास के निषेध का औचित्य नहीं है । अतः यहाँ के तीनों उदाहरणों को पूर्वसूत्र के साथ ही समझना चाहियें । और पूर्व सूत्र के 'अक' प्रत्यय वाले उदाहरण इस सूत्र के समझने चाहिये ॥ १६ ॥

'न' [समास नहीं होता है] इसकी अनुवृत्ति नहीं होती है, तृच् और अक की अनुवृत्ति होती ही है । नित्य समास का विधान किया जाता है । क्रीडा में और जीविका में [जो अक प्रत्यय तदन्त का] नित्य षष्ठ्यन्त के साथ समास

समस्यते, तत्पुरुषश्च समासो भवति। तृच् क्रीडाजीविकयोर्नास्तीत्यक एवोदाह्रियते—उद्दालकपुष्पभञ्जिका। वारणपुष्पप्रचायिका। जीविकायाम्—दन्तलेखकः, नखलेखकः।

क्रीडाजीविकयोरिति किम्? ओदनस्य भोजकः॥

**४४१. कुगतिप्रादयः॥ १८॥ (७६१)**

'नित्यम्' इति वर्त्तते। कुशब्दोऽव्ययं परिगृह्यते, गत्यादिभिः साहचर्यात्, न द्रव्यवचनः। कुगतिप्रादयः समर्थेन शब्दान्तरेण सह नित्यं समस्यन्ते, तत्पुरुषश्च समासो भवति। कुः पापार्थे–कुपुरुषः। गति–

**न्यासः**

'संज्ञायाम्' इति ण्वुल्। उद्दालकपुष्पादिषु कर्मणि 'षष्ठी'। दन्तलेखकः, नखलेखक इति। 'ण्वुल्तृचौ' इति ण्वुल्। क्रीडायां विषये 'षष्ठी' इति सूत्रेण महाविभाषया विकल्पेन समासे प्राप्ते जीविकायाञ्च 'कर्त्तरि च' इति निषेधे प्राप्तेऽयमारम्भः। तत्र नित्यग्रहणं किमर्थम्? जीविकार्थम्। इतरत्र त्वारम्भसामर्थ्यान्नित्योऽयं भविष्यति। जीविकायां त्वसति नित्यग्रहणे महाविभाषाधिकाराद् विकल्पेन समासः स्यादिति तदर्थं नित्यग्रहणं कृतम्, उत्तरार्थञ्च॥ १७॥

कुगतिप्रादयः॥ कुशब्दोऽव्ययं परिगृह्यत इति। अलिङ्गसंख्यत्वादव्ययत्वम्, न तु निपातेषु

**पदमञ्जरी**

प्रतिषेधस्य सिद्धत्वान्नित्यः प्रतिषेधो भविष्यति, किं नित्यग्रहणेन? तृच् क्रीडाजीविकयोर्नास्तीति। वामनस्तु 'अके जीविकार्थे' इत्यत्र 'अक इति किं रमणीयकर्ता' इति जीविकायां तृचं प्रत्युदाहरिष्यति। स मन्यते—मा भूत्क्रीडायां तृच्, लक्षणाभावात्, जीविकायां तु ण्वुल्तृचाविति ण्वुलिव तृच् कस्मान्न स्यादिति। अन्ये तु तदनुसारेणेदमप्येवं व्याचक्षते—क्रीडाजीविकयोर्नास्तीति द्वयोर्नास्ति, किन्त्वन्यतरत्रैवेत्यर्थः। अक एवोदाह्रियत इति। उभयत्रेत्यर्थः। उद्दालकपुष्पभञ्जिकेत्यादौ। संज्ञायामिति ण्वुल्। नित्यग्रहणमुत्तरार्थम्। न हि वाक्येन क्रीडाजीविकयोरवगतिरस्ति, क्रियाकारकसम्बन्धमात्रावगमात्॥ १७॥

कुगतिप्रादयः॥ कुशब्दोऽव्ययं गृह्यत इति। स्वरादिष्वपठितोऽप्ययं पठितव्य इति भावः। नित्यसमासविषयस्यास्य पूर्वपदप्रकृतिस्वराणामव्ययत्वम्, यथा वक्ष्यति—'अव्यये नञ्कुनिपातानामिति वक्तव्यम्'

**भावबोधिनी**

होता है, और वह तत्पुरुष समास होता है। क्रीडा और जीविका अर्थ में तृच् प्रत्यय नहीं होता है, अतः केवल 'अक' प्रत्यय का ही उदाहरण दिया जा रहा है—उद्दालकपुष्पभञ्जिका। [भञ्ज् धातु से 'संज्ञायाम्' (पा० सू० ३।३।१०९) से ण्वुल् = अक प्रत्यय और टाप् करने पर 'भञ्जिका' बनता है। पुष्पाणां भञ्जिका इसमें इस सूत्र से समास करने के बाद 'षष्ठी' (पा० सू० २।२।८) से उद्दालकानां पुष्पभञ्जिका में समास होता है। उद्दालक लोगों के फूल तोड़ने की क्रीडा को इस नाम से बुलाया जाता था] वारणपुष्पप्रचायिका। [प्र पूर्वक 'चि' धातु से ण्वुल् = अक, टाप् और इत्वादि करके—प्रचायिका बनता है। पुष्पाणां प्रचायिका—यहाँ प्रस्तुत सूत्र से समास करने के बाद 'वारणानां पुष्पप्रचायिका' में 'षष्ठी' सूत्र से समास होता है। वारण लोगों की फूल तोड़ने की क्रीड़ा। जीविका अर्थ में—दन्तलेखकः [लिखतीति अर्थ में लिख् धातु से ण्वुल् = अक करके 'लेखकः' बनाकर दन्तानां लेखकः यहाँ प्रस्तुत सूत्र से समास होता है। दान्तों की कलाविशेष से जीविका चलाने वाला]। नख-ले[illegible]ः। [नाखूनों की कलाविशेष से जीविका चलाने वाला]।

क्रीडा और जीविका अर्थ में होने [illegible]अक' प्रत्ययान्त का—यह किस लिये है? ओदनस्य भोजकः। यह सामान्य प्रत्यय है। अतः समास न होकर [illegible] ही होता है॥ १७॥

[पूर्व सूत्र से] 'नित्यम्' इसकी अनुवृत्ति होती है। यहाँ 'कु' शब्द अव्यय ही लिया जाता है, [पृथ्वी आदि] द्रव्यवाचक नहीं, क्योंकि गति आदि के साहचर्य से यही उचित है। कु, गति और प्र आदि शब्दों का दूसरे समर्थ शब्दों के साथ नित्य समास होता है, और वह तत्पुरुष समास होता है। कु यह पाप अर्थ में है—कुपुरुषः [बुरा आदमी। कुत्सितः

**उररीकृतम्, यदूरीकरोति। प्रादयः—दुर्निन्दायाम्, दुष्पुरुषः। स्वती पूजयाम्, सुपुरुषः, अतिपुरुषः। आपिङ्गलः।**

**प्रायिकं चैतदुपाधिवचनम्। अन्यत्रापि हि समासो दृश्यते। कोष्णम्, कवोष्णम्, कदुष्णम्। दुष्कृतम्। [सुष्टुतम्] अतिस्तुतम्। आबद्धम् [आविद्धम्] इति।**

### न्यासः

पाठात्। न ह्ययं तत्र पठ्यते। **न द्रव्यवचन इति**। पृथिव्यादौ यो द्रव्ये वर्त्तते तस्यात्र ग्रहणं न भवति। कुत एतदित्याह—**गत्यादिभिः साहचर्यादिति**। गतार्थम्।

**कोष्णमिति**। 'ईषदर्थे च' इति कोः कादेशः। **कवोष्णमिति**। 'कवञ्चोष्णे' इति कवादेशः। **कदुष्णमिति**। 'कोः कत्तत्पुरुषेऽचि' इति कत्। **कुपुरुष इति** पापार्थे। **दुष्कृतमिति**। 'दुस्' कृच्छ्रार्थे वर्त्तते। 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम्। **सुस्तुतमिति** सुशब्दोऽतिशये वर्त्तते। **अतिस्तुतमिति** अतिरतिक्रमणे। **आविद्धमिति**। आङ् क्रियायोगे, मर्यादायां वा।

### पदमञ्जरी

(म० भा० ६.२.२ वा० १) इति। **न द्रव्यवचन इति**। पृथिव्यादिद्रव्ये यो वर्तते स न गृह्यत इत्यर्थः। **दुर्निन्दायामिति**। प्रशस्ते द्वेषान्निन्दा भवति, पापं तु वस्तुस्थित्या गर्हितमिति द्वयोरप्युपादानम्।

**प्रायिकमिति**। अन्यथेषदर्थे चेति कोः कादेशविधानमनुपपन्नं स्यात्। **दुष्कृतमिति**। दुर्निन्दायामिति विषयनिर्देशो गतित्वेन प्राप्तस्यापि समासस्य नियामकः स्यादिति मन्यते। यदा तु प्रादिग्रहणप्राप्तस्यैव नियामकस्तदा गतित्वादेवात्र सिद्धः समासः। दुरत्र कृच्छ्रार्थोऽनभिधानात्कृतेः खल् न भवति, दुष्कर इत्यादावुपपदसमासः, 'आमन्द्रैरिन्द्र हरिभिः' (शा० श्रौ० सू० १.२.९.११) इत्याङो मन्द्रं प्रत्यगतित्वादनीषदर्थत्वाच्च समासाभाव इत्येकस्वर्यं न भवति। **सुष्टुतमिति**। सुशब्दोऽतिशये, न पूजायाम्। अत एवोपसर्गनिबन्धनं षत्वम्। **अतिस्तुतमिति**। 'अतिरतिक्रमणे च' इति कर्मप्रवचनीयत्वात् षत्वाभावः॥

### भावबोधिनी

पुरुषः यह अस्वपद विग्रह है। प्रस्तुत सूत्र से समास होता है]। उररीकृतम् [स्वीकार किया। "ऊर्यादिच्विडाचश्च" (पा० सू० १.४ ६१) उररी की गति संज्ञा होती है। अतः प्रस्तुत सूत्र से समास होता है। यदूरीकरोति यत्ऊरीकरोति यहाँ भी समास होता है। जो स्वीकार करता है।] प्र आदि—'दुः' यह निन्दा अर्थ में है। दुष्पुरुषः [दुष्टः पुरुषः यह विग्रह है। दुर् की गति संज्ञा होने के कारण समास होता है। यहाँ रेफ का विसर्ग करने के बाद 'इदुदुपधस्य चाप्रत्ययस्य" (पा० सू० ८.३.४१) से स का ष होता है। निन्दित पुरुष 'सु और अति' ये पूजा=प्रशंसा अर्थ में हैं। सुपुरुषः [शोभनः पुरुषः। यह विग्रह है। अच्छा आदमी] अतिपुरुषः [अच्छा पुरुष।] आङ् यह ईषत्-थोड़ा इस अर्थ में है। आपिङ्गलः [ईषत् पिङ्गलः यह अस्वपद विग्रह है। कुछ पीला]।

ये उपाधिवचन प्रायिक हैं। क्योंकि अन्य अर्थों में भी समास देखा जाता है। यह [ईषदुष्णम्—इस विग्रह में] "ईषदर्थे च" (पा० स० ६.३९.०५) से 'कु' का 'का' आदेश करने पर] (१) कोष्णम् [और "कवं चोष्णे" (पा० सू० ६ ३ १०९) से कव आदेश करने पर] (२) कवोष्णम् [और "कोः कत्ततरपुरुषेऽचि" पा० सू० ६.३.१०३) से कत् आदेश करने पर] (३) कदुष्णम् [ये रूप बनते हैं।] दुष्कृतम् [यहाँ दुः शब्द निन्दा अर्थ में नहीं है अपि 'कृच्छ्र' अर्थ में है] सुष्टुतम् [सु शब्द अतिशय अर्थ में है पूजा में नहीं। इसी लिये 'सुः पूजायाम्' (पा० सू० १.४.९४) से कर्मप्रवचनीय न होकर उपसर्ग मान कर षत्व होता है] अतिस्तुतम् [यहाँ "अतिरतिक्रमणे च" (पा० स० १.४.९५) से अति की कर्मप्रवचनीय संज्ञा होने के कारण ष्टुत्व नहीं होता है।] आबद्धम् [बन्धनग्रस्त तक। न्यास में आविद्धम् यह पाठ है 'बिद्ध तक' यह अर्थ है। 'आङ्' यहाँ मर्यादा अर्थ में है।]

***प्रादयो गताद्यर्थे प्रथमया *** (म० भा० २.२ १८. वा० ५)। **प्रगत आचार्यः प्राचार्यः। प्रान्तेवासी। *अत्यादयः क्रान्ताद्यर्थे द्वितीयया *** (म० भा० वा० ६)। **अतिक्रान्तः खट्वाम् अतिखट्वः। अतिमालः। *अवादयः क्रुष्टाद्यर्थे तृतीयया *** (म० भा० वा० ७)। **अवक्रुष्टः कोकिलया अवकोकिलः। * पर्यादयो ग्लानाद्यर्थे चतुर्थ्या *** (म० भा० वा० ८)। **परिग्लानोऽध्ययनाय पर्यध्ययनः। अलं कुमार्यै अलंकुमारिः।**

**न्यासः**

**पर्यादयो ग्लानाद्यर्थ इति।** पर्यादिराकृतिगणः। **पर्यध्ययन इति** परिग्लानोऽध्ययनायेत्यर्थः।

**वाससी इवेत्यादि।** 'सर्वधातुभ्योऽसुन्' इत्यनुवर्त्तमाने 'वसेर्णिच्च' इत्यसुन्प्रत्ययान्तो वासःशब्दो व्युत्पादितः, वस्त्रशब्दोऽप्यौणादिकष्ट्रन्प्रत्ययान्तः, तेन द्वावप्येतौ 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तौ।

**पदमञ्जरी**

**प्रादयो गताद्यर्थ इति।** वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेऽपि प्रादिग्रहणेन समस्यन्त इति।

**पर्यध्ययन इति।** परिश्रान्तोऽध्ययनार्थमित्यर्थः।

**वाससी इवेति।** 'वसेर्णिच्च' (दशपादि उणादि० ९.७७) इत्यसुन्प्रत्ययान्तो वासःशब्दः, वस्त्रशब्दः ष्ट्रन्प्रत्ययान्तः, द्वावपि नित्याद्युदात्तौ।

**भावबोधिनी**

**विमर्श—**भाष्यकार ने प्रस्तुत सूत्र पर कात्यायन के वार्तिक 'सिद्धं तु क्वाङ्-स्वति-दुर्गतिवचनात्' और 'प्रादयः क्ताद्यर्थे'' ये लिखने के बाद सौनाग वार्तिक प्रस्तुत किये हैं—(१) स्वती पूजायाम्। (२) दुर्निन्दायाम्। (३) आङीषदर्थे। (४) कुः पापार्थे। (५) प्रादयो गताद्यर्थे प्रथमया'' आदि।

इनमें शब्दों के साथ उपाधि=विशेषण जोड़े है। काशिकाकार का कहना है कि ये उपाधियाँ "प्रायिक हैं। क्योंकि इन से भिन्न अर्थों में भी सु, अति, दुः, आङ् और कु का समास देखा जाता हैं। अतः अर्थ का नियमन करना व्याबहारिक नहीं है। काशिका में आगे के पाँच वार्तिक भी सौनाग वार्त्तिक ही हैं।] [अनु०]* प्र आदि शब्द गत आदि अर्थ में प्रथमान्त के साथ समासत्व प्राप्त करते हैं।* उदा०—प्रगत आचार्यः [इस विग्रह में इस वचन से समास होता है। यहाँ अस्वपद विग्रह और नित्य समास है]।

*अति आदि शब्द क्रान्त आदि अर्थ में द्वितीयान्त के साथ समासत्व प्राप्त करते हैं* उदा०—अतिक्रान्तः खट्वाम् [यहाँ केवल अति शब्द अतिक्रान्त अर्थ में है। समास के बाद खट्वा का ह्रस्व होने पर रूप बनता है।] *अव आदि शब्द क्रुष्ट आदि अर्थों में तृतीयान्त के साथ समासत्व प्राप्त करते है।* उदा० - अव क्रुष्टः कोकिलया [कोयल द्वारा अवक्रुष्ट] अवकोकिलः।

*परि आदि शब्द ग्लान आदि अर्थों में चतुर्थ्यन्त के साथ समासत्व प्राप्त करते हैं।* उदा० — परिग्लानः अध्ययनाय [इस विग्रह में समास के बाद यण् करने पर]—पर्यध्ययनः। [अध्ययन के लिये दुखी] *अलं कुमार्यै-इस विग्रह में—अलङ्कुमारिः [कुमारी के लिये पर्याप्त]

*निर् आदि शब्द क्रान्त आदि अर्थ में पञ्चम्यन्त के साथ समासत्व प्राप्त करते हैं।* उदा० — निष्क्रान्तः कौशाम्ब्याः—इस विग्रह में निष्कौशाम्बिः [कौशाम्बी नगरी से निकला हुआ। निर्वाराणसिः [निष्क्रान्तः वाराणस्याः—इस विग्रह में समास के बाद ह्रस्व होने पर उक्त रूप बनते है। वाराणसी से निकला हुआ]।

*निरादयः क्रान्ताद्यर्थे पञ्चम्या* । (म० भा० वा० ९) । निष्क्रान्तः कौशाम्ब्याः, निष्कौशाम्बिः । निर्वाराणसिः ।

*इवेन सह समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् * । (म० भा० वा० ६) । वाससी इव ।

*प्रादिप्रसङ्गे कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः * । वृक्षं प्रति विद्योतते विद्युत् । साधुर्देवदत्तो मातरं प्रति ॥

## ४४२. उपपदमतिङ् ॥ १९ ॥ (७१२)

'नित्यम्' इति वर्तते । उपपदमतिङन्तं समर्थेन शब्दान्तरेण सह समस्यते नित्यम्, तत्पुरुषश्च समासो

### न्यासः

प्रादिप्रसङ्गे इत्यादि । प्रादिग्रहणे यः प्रसङ्गः समासशास्त्रस्य तत्र कर्मप्रवचनीयानां प्रतिषेधो वक्तव्यः । व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—लक्षणादिष्वर्थेषु कर्मप्रवचनीयसंज्ञा भवति । न च तेऽर्थाः समासेन गम्यन्त इत्यनभिधानात् कर्मप्रवचनीयानां समासो न भवति । यत्र तेऽर्था गम्यन्ते तत्र भवत्येव समासः—अतिस्तुतमिति ॥ १८ ॥

उपपदमतिङ् ॥ एधानाहारको व्रजतीति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल् । एतयोर्योगयोः सुप्सुपेति नाभिसम्बध्यत इति । ननु चास्मिन्नेव योगे तदनभिसम्बन्धो युक्तो यत्रातिङ्ग्रहण-

### पदमञ्जरी

प्रादिप्रसङ्ग इति । सूत्रे प्रादिग्रहणमगत्यर्थमिति कर्मप्रवचनीयानां प्रतिषेध उच्यते, प्रत्यादिविषयश्चायं निषेधः । स्वत्योस्तु समासो भवत्येव । वृक्षं प्रतीति । कर्मप्रवचनीयेन योगाद् द्वितीयावत्समासस्यापि प्रसङ्गः, उदात्तवता तिङा गतेः समासवचनम्—यो जात एव पर्यभूषत्, यः शम्बरमन्वविन्दत्, योऽन्तरिक्षं विममे, यो वै प्रजवं याताम्, अपथेन प्रतिपद्यते ॥ १८ ॥

उपपदमतिङ् ॥ एधानाहारको व्रजतीति । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति ण्वुल् । अतिङिति किमिति । येनाभिप्रायेण पृष्टं तमाविष्करोति ननु चेति ।

### भावबोधिनी

*इव के साथ समास होता है, विभक्ति का लोप नहीं होता है, और पूर्व पद का प्रकृतिस्वर होता है, ऐसा कहना चाहिये ।* उदा०—वाससी इव [यहाँ समास होने पर भी विभक्तिलोप नहीं होता है । असुन्=नित् होने के कारण 'ञ्नित्यादिर्नित्यम्' (पा० सू० ६.१.१९७) से आदि उदात्त है ।]

*'प्र' आदि के प्रसङ्ग में कर्मप्रवचनीय शब्दों के समास का प्रतिषेध कहना चाहिये ।* (का. वा. २.२ ८ १) उदा०—वृक्षं प्रति विद्योतते विद्युत् । [यहाँ लक्ष्यलक्षणभाव प्रतीत होने के कारण प्रति की कर्मप्रवचनीय संज्ञा होने के कारण समास नहीं होता है । वृक्षेण लक्ष्यमाणा विद्युत् विद्योतते यह अर्थ है ।] साधु देवदत्तः मातरं प्रति [यहाँ भी प्रति कर्मप्रवचनीय है अतः समास नहीं होता है ।]

विमर्श—महाभाष्य के आधार पर काशिकाकार ने भी 'इम' आचार्य के अनेक वार्तिक प्रस्तुत किये हैं । फिर भी कुछ को छोड़ दिया है । अन्तिम वार्तिक कात्यायन का है । और भाष्य में सबसे पहले रखा गया है ॥ १८ ॥

'नित्यम्' इसकी अनुवृत्ति होती है । उपपद अतिङन्त समर्थ [सुबन्त] का अन्य शब्द के साथ समास होता है, और वह तत्पुरुष समास होता है । उदा०—कुम्भकारः [कुम्भं करोति इस विग्रह में कुम्भम् उपपद कृ धातु से

भवति । कुम्भकारः । नगरकारः ।

अतिङिति किम् ? एधानाहारको व्रजति ।

ननु च 'सुप् सुपा' इति वर्त्तते, तत्र कुतस्तिङन्तेन सह समासप्रसङ्ग ? एतज्ज्ञापयति–'एतयोर्योगयोः

न्यास॰

मस्ति, न तु पूर्वसूत्रेण, न हि तत्रातिङित्येतदस्ति ? एवं मन्यते—'अतिङ्' इति योगविभागः क्रियते, स च पूर्वसूत्रस्यापि शेषभूतो विज्ञायते। नन्वेवमप्यतिङिति प्रथमान्तेन निर्देशात् प्रथमान्तस्यैव सुबित्यस्य निवृत्तिर्युक्ता, न तृतीयान्तस्य सुपेत्यस्य ? नैतदस्ति; सामान्येन सुबधिकारनिवृत्त्युपलक्षणार्थत्वाद् युक्ता द्वयोरपि निवृत्तिः। तेनेत्यादिना ज्ञापकस्य प्रयोजनं दर्शयति। पूर्वयोगेऽप्यतिङ्ग्रहणाद् 'गत्युपसर्गसंज्ञकानां कृद्भिः सह प्राक् सुबुत्पत्तेः समासो भविष्यति' इत्येतदुपपन्नं भवति। तथा हि तत्र गतयः कृद्भिः सह समस्यन्ते, अस्मिंस्तु योगेऽतिङ्ग्रहणात् कारकोपपदानां कृद्भिः समासः सुबुत्पत्तेः प्रागुपपन्नो भवति। तथा ह्यत्र कारकं कृद्भिः सह समस्यन्ते प्राक् सुबुत्पत्तेः।

समासे सति यदिष्टं सिध्यति तद्दर्शयन्नाह—**अश्वक्रीतीति**। अत्राश्वः करणं कारकम्, तद्वाचिनोऽश्वशब्दस्य 'कर्तृकरणे कृता बहुलम्' इति समासः। सुबुत्पत्त्यां सत्यां यदि स समासः स्यात् तदा प्रागन्तरङ्गत्वाट्टाप् स्यात्, ततः सुप्, पश्चात् समासः, ततश्च 'क्रीतात् करणपूर्वात्' इति ङीष् न स्यात्; अत इत्यधिकारात्। ङीषस्त्ववकाशः—धनेन क्रीतं = क्रयणं यस्याः। प्राक् सुबुत्पत्तेः समासे सति टाप् न क्रियते, प्रथमतः समास एव भवति, तेनादन्तत्वाद् ङीष् सिद्धो भवति। कथं पुनरश्वादेरुपपदत्वम्, यावता द्वितीयधात्वधिकारे

पदमञ्जरी

**एतज्ज्ञापयतीति**। स्यादेतत्—मुख्यस्य तिङन्तस्य प्रतिषेधोऽनर्थक इति। यस्तेन समानार्थः सुबन्तस्तस्य प्रतिषेधो विज्ञायते। तत्र यद्यपि काल-कारकसंख्योपग्रहयुक्तः पूर्वापरीभूतः क्रियारूपस्तिङन्तार्थप्रधानोऽर्थो न सुबन्तस्य सम्भवति, तथापि क्रियावाचित्वमात्रेण तदर्थत्वमाश्रीयते, क्रियावाच्युपपदं न समस्यत इत्यर्थः। तेन कारको गतः, कारकस्य व्रज्येति गतव्रज्याशब्दयोः कारकशब्देन समासो न भवति; अन्यथा हि क्रियार्थायामिति सप्तमीनिर्देशेनोपपदत्वादनयोरपि समासः स्यादिति ? तन्न; अनुपपदत्वात्। क्रियायां क्रियार्थायामिति सप्तमीनिर्देशेन क्रियावाचिन उपपदत्वम्, धातुरेवात्र क्रियावचनस्तदाश्रयश्च ण्वुल् प्रत्ययः।

भावबोधिनी

'कर्मण्यण्' (पा० सू० ३.२.१) सूत्र से अण्=अ, कुम्भम् कृ+अ, ऋ की वृद्धि, रपर करने के बाद प्रस्तुत सूत्र से समास विभक्तिलोप होने पर कुम्भकार=घड़ा बनाने वाला कुम्हार]। नगरकारः [नगरं करोति—इस विग्रह में नगरम् उपपद कृ + अण्=कार, समास करने पर रूप बनता है। नगर बनाने वाला] अतिङ्—यह किस लिये है ? एधान् आहारकः व्रजति ['तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (पा० सू० ३.३.१०) सूत्र से आहृ+ण्वुल्=अक, ऋ की वृद्धि, रपर करने पर आहारकः बनता है। यहाँ तिङन्त का समास न हों इसके लिये 'अतिङ्' यह है।] 'सुप् और सुपा' [सुबन्त का सुबन्त के साथ समास होता है] इनकी अनुवृत्ति होती [illegible] इस लिये तिङन्त के साथ समास का प्रसङ्ग ही कहाँ आता है ? यह अतिङ्ग्रहण ही यह ज्ञापित करता है कि 'इ[illegible] [कुगतिप्रादयः और 'उपपदमतिङ्'] सूत्रों में 'सुप्' और सुपा' का सम्बन्ध नहीं होता है। इससे यह उपपन्न [illegible] है—"गति, कारक और उपपदों का कृत् प्रत्ययों के साथ, सुप की उत्पत्ति से पहले ही, समास होता है।" [भाव यह है कि कृदन्त शब्द से सुप् आकर सुबन्त बनने से पहले ही इसका गतिसंज्ञक, कारक और उपपद के साथ समास हो जाता है। अतः यहाँ सुप् और सुपा की आवश्यकता नहीं है। उदा०—अश्वक्रीती। धनक्रीती।

**सुप् सुपेति न संबध्यते' इति। तेन 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इत्येतदुपपन्नं भवति। अश्वक्रीती। धनक्रीती॥**

न्यासः

सप्तम्या निर्देशः कृतः? नैष दोषः, न हि द्वितीयधात्वधिकारे यत् सप्तम्या निर्दिष्टं तदेवोपपदसंज्ञं भवति। अपि तु यदप्युपोच्चारितं पदं तदप्युपपदं भवत्येव, तदपि शास्त्रे 'इतरेतरान्योन्योपपदाच्च' इत्यादौ सूत्रे क्वचिदाश्रीयत एव। तस्मादश्वादिकमप्युपोच्चारितपदत्वादुपपदमिह विवक्षितम्। पदत्वं पुनस्तस्य पद्यते गम्यतेऽनेनार्थ इति कृत्वा; न तु सुबन्तत्वात्, इह सुपोऽसम्भवात्। सुबनुत्पत्तेः प्राक् समासाद्। यदि तर्हि यदुपोच्चारितं पदं तदपीहोपपदं गृह्यते तदातिप्रसङ्गः स्यात्; राजश्रितमित्यत्रापि प्राक् सुबत्पत्तेः समासप्रसङ्गात्, ततश्च पदत्वाभावान्नलोपो न भवति? असर्वविषयत्वादस्य ज्ञापकस्येत्यदोषः। न ह्यनेन सर्वत्र गतिकारकोपपदानां कृद्भिः प्राक् सुबुत्पत्तेः समासो भवति' इति ज्ञाप्यते, किं तर्हि? क्वचिदेवेष्टविषये। कथमेतज् ज्ञायते? 'तत्पुरुषे कृति बहुलम्' इति कृदन्त उत्तरपदे सप्तम्या अलुग्विधानात्। यदि तर्हि सर्वत्रैव गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेः स्यात् तदा सप्तम्याः कृदन्त उत्तरपदेऽलुग्विधानं नोपपद्यते—बिलेशय इत्यादौ, सप्तम्या असम्भवात्। तस्मात् क्वचिदेव प्राक् सुबुत्पत्तेः समासः, न सर्वत्रेति। एवञ्च कृत्वा 'सा हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसी' इत्यादौ टाबन्तेन समास उपपन्नो भवति॥ १९॥

पदमञ्जरी

गतशब्दस्तु क्रियोपसर्जनं कर्त्तारमाह, व्रज्याशब्दोऽपि यस्तस्य सिद्धता नाम धर्मस्तत्र घञादयो भवन्तीति धात्वर्थस्य सिद्धतायां वर्तन्ते, अतो यत्क्रियावाचित्वादुपपदं न तत्सुबन्तम्, यत्सुबन्तं न तत्क्रियावाचि नाप्युपपदमिति नार्थ एवमनेनातिङ्ग्रहणेन।

**एतयोर्योगयोरिति।** ननु चास्मिन्नेव योगे तदनभिसम्बन्धो युक्तः, यत्रातिङ्ग्रहणमस्ति, न पूर्वत्र? एवं मन्यते—योगविभागेनातिङ्ग्रहणं पूर्वसूत्रेणापि सम्बन्धनीयमिति। यद्येवम्, कुशब्दे प्रादिषु चातिप्रसङ्गः, तत्रापि प्राक् सुबुत्पत्तेः समासः स्यात्? एवं तर्हि पूर्वसूत्रे गतिग्रहणं पृथक्कृत्य तेनैवातिङ्ग्रहणं सम्बन्धनीयम्।

**गतिकारकोपपदानाम्,** अस्यायमर्थः—गतीनां कारकाणामुपपदानां च कृद्भिः सह यः समासस्तेन तेन लक्षणेन स उत्तरपदात्सुबुत्पत्तेः प्रागेव कार्यः, पूर्वपदं तु सुबन्तमेव समस्यत इति। गतीनां तावत्—व्याजिघ्र-

भावबोधिनी

**विमर्श—**अश्वेन क्रीता, धनेन क्रीता यह विग्रह है। यहाँ करण अश्व का 'क्रीत' इसी के साथ 'कर्तृकरणे कृता बहुलम्' (पा० सू० २।३।३२) से समास होता है और 'क्रीतात् करणपूर्वात्' (पा० सू० ४।१।५०) से ङीष् होने पर 'अश्वक्रीती' बनता है। यदि पहले सुप् करने के बाद यदि समास होता तब तो अन्तरङ्ग होने से पहले टाप् ही हो जाता तब 'क्रीतात् करणपूर्वात्' से ङीष् नहीं हो सकता क्योंकि 'अतः' [अकारान्त से ङीष् होता है] यह अधिकार है। अतः सुबुत्पत्ति से पहले ही यहाँ समास करके 'धनक्रीत' बनाकर ङीष् किया जाता है। इसी प्रकार 'कच्छेन पिबति, विशेषेण आसमन्तात् जिघ्रति' इन विग्रहों में 'कच्छ' और 'व्या' को उपपद मानकर पहले समास ही हो जाता है। 'कच्छप' और 'व्याघ्र' बनाकर ही ङीष् होने से 'कच्छ[illegible] और व्याघ्री रूप बनते हैं।

वास्तव में यह परिभाषा नित्य नहीं है। अतः कहीं-[illegible]ब्द [illegible]त्पत्ति के बाद भी समास देखा जाता है। इसमें प्रमाण है। 'तत्पुरुषे कृति बहुलम्' (पा० सू० ६।३।१४) इस सूत्र द्वा[illegible]ग्राम' [illegible]न्त उत्तरपद के परे रहते सप्तमी के अलुक् का विधान। समास करने पर ही विभक्तिलोप का प्रसङ्ग आता है। अतः यहाँ पद बनाने के लिये सुप् की पहले उत्पत्ति आवश्यक है। इसीलिये—'सा हि तस्य 'धनक्रीता' प्राणेभ्योऽपि गरीयसी।' आदि में टाप् प्रत्ययान्त के साथ समास उपपन्न होता है॥ १९॥

पदमञ्जरी

तीति व्याघ्री, 'पाघ्राध्मावेट्दृशः शः' इति प्राप्तस्य जिघ्रतेः 'संज्ञायां प्रतिषेधो वक्तव्यः' (कात्या० वा० १९६७) इति निषेधात् 'आतश्चोपसर्गे' इति कः, व्याङोर्घ्रशब्देन गतिसमासः, स यद्युत्तरपदे सुबन्ते जाते पश्चात्स्यात्, ततः सुबुत्पत्तये संख्याकर्मादियोगो विवक्षितव्यः, तद्योगाच्च प्रागेव लिङ्गयोगः स्वार्थमभिधाय शब्द इति न्यायात्, ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् घ्रशब्दमात्रस्याजातिवाचित्वाट्टाप् स्यात्, ततश्च व्याङोर्घ्राशब्देन समासः, ततो व्याघ्राशब्दस्य जातित्वेऽप्यनकारान्तत्वाज्जातिलक्षणो ङीष् न स्यात्; प्राक् सुबुत्पत्तेः समासो भवन् लिङ्गयोगमपि नापेक्षत इत्यन्तरङ्गत्वात् स एव तावद्भवति पश्चात्स्त्रीप्रत्ययो भवन्ङीषेव भवति, पूर्वपदस्य तु सुबन्तत्वात्पदकार्याणि भवन्ति, निर्गत इति रुत्वम्, संय्यन्तेति परसवर्णविकल्प इत्यादीनि। कारकाणाम्—अभ्रेर्लिप्ताऽभ्रलिप्ती, 'कर्तृकरणे कृता बहुलम्' इति समासः, यद्युत्तरपदस्य सुबन्तत्वं स्यात्, पूर्ववट्टाप् स्यात्, ततः 'क्रीतात् करणपूर्वात्' 'क्तादल्पाख्यायाम्' इति ङीष् न स्याद्; 'अत' इत्यधिकारात्, वचनसामर्थ्याद्वा पूर्वशब्दं व्यवस्थावचनमाश्रित्य वाक्यावस्थायामेव स्यात्, अत इत्यधिकारो वा व्यवच्छिद्येत। प्राक् सुबुत्पत्तेः समासे पूर्ववत्सिद्धमिष्टम्। अत्रापि पूर्वपदस्य सुबन्तात्वाच्चर्मक्रीतीत्यादौ नलोपादिकार्याणि भवन्ति। उपपदानाम्—कच्छेन पिबतीति 'सुपि स्थः' इत्यत्र सुपीति योगविभागात् कः, कच्छपी, व्याघ्रीतुल्यम्, माषान्वपति 'सुप्यजातौ णिनिस्ताच्छील्ये' माषवापिणी, ङीपः प्राक् समासे प्रातिपदिकस्यान्तो नकार इति णत्वं भवति। सुबन्तस्य तु समासे ङीप्समासस्यान्तो न तु नकार इति न स्यात्। अत्रापि पूर्वपदस्य सुबन्तत्वाच्चर्मकारादौ नलोपादिपदकार्यं भवत्येव। अत्रोपपदग्रहणं गतिकारकव्यतिरिक्तोपपदपरिग्रहार्थम्—मृषावापिणी, ईषद्दर्शाया अपत्यं ऐषद्दर्शेयः, अत्र दर्शाशब्देन समासे सति समुदायात्स्त्रीभ्यो ढकं बाधित्वा दर्शाशब्दात् स्त्रीप्रत्ययलक्षणो ढक् स्यात्, स्त्रीप्रत्यये तदादिनियमाभावेऽपि दर्शाशब्दादपि कदाचित्स्यादित्येषा दिक्।

जातान्यस्याः परिभाषायाः प्रयोजनानि। कथं पुनरतिङ्ग्रहणेनायमर्थः साधयितुं शक्यः, यावता प्रथमान्तमतिङ्ग्रहणं प्रथमान्तस्यैव सुब्ग्रहणस्य निवृत्तिं सूचयेदिति पूर्वपदे पदकार्याणि न स्युः, उत्तरपदे चोक्तमिष्टं न सिध्यति, तदेतत्क्रियमाणमतिङ्ग्रहणं विपर्ययमेव साधयति, तदपि गत्युपपदयोरेव, कारकेषु तु 'कर्तृकरणे कृता बहुलम्' इत्यादावस्याः कथाया अप्रसङ्ग एव? उच्यते—योगविभागेनातिङ्ग्रहणं गतिनापि संबध्यत इत्युक्तम्, एवं स्थिते योगद्वयविहितसमासमतिङ्ग्रहणेन विशेषयिष्यामः—गतिः समस्यते अतिङ् समासो भवति, उपपदं समस्यते अतिङ् च समासो भवतीति। तदेवम् 'माङि लुङ्' मा कार्षीदित्यादौ तिङन्तेन समासो मा भूदित्येवमर्थं क्रियमाणमतिङ्ग्रहणं सुपेति तृतीयान्तस्य निवृत्तिं साधयतीति गत्युपपदयोस्तावत्सिद्धमिष्टम्। वृत्तावपि 'सुप् सुपेति न संबध्यते' इति समुदायस्य निवृत्तिर्विवक्षिता, न केवलस्य सुब्ग्रहणस्य। प्रत्युदाहरणमपि दिङ्मात्रं प्रदर्शितम्, न हि तत्र तिङन्तेन समासः, किं तर्हि? तिङन्तस्य सुबन्तेन, 'कर्तृकरणे कृता बहुलम्' इत्यत्रापि कृतेति न वक्तव्यम्, कथम्? कर्तृकरणयोः क्रियापेक्षत्वात्क्रियावचनेन तावत्समासः, धातुश्च क्रियावचनः, धातोश्च द्वये प्रत्ययाः—कृतस्तिङश्च, तत्र सुबधिकारात्तिङन्तेनाप्रसङ्गः, तदेतद् कृद्ग्रहणं कृदन्तावस्थायामेव यथा स्यादित्येवमर्थमिति केचित्।

नेति वयम्। काष्ठैः पचतितराम्, द[illegible]भुक्तपूर्वीत्यादौ तद्धितान्तेन समासो मा भूदित्येवमर्थं कृद्ग्रहणं कर्त्तव्यं कष्टश्रितादिषु प्राक्सुबुत्पत्तेः स[illegible]न साधित इति कष्टश्रितेत्यादि न सिद्ध्यति। एवं तर्हि 'गतिकारकोपपदानाम'इति (व्या० परि० १[illegible]रिभाषा पूर्वाचार्यैः पठिता सूत्रकारेणाप्यतिङ्ग्रहणेन तद्देश आश्रिता। तत्र सामान्यापेक्षं ज्ञापकमिति कृत[illegible]व परिभाषार्थं ज्ञापयतीति सिद्धमिष्टम्।

तदेतत्प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा॥ १९॥

## ४४३. अमैवाव्ययेन ॥ २० ॥ (७८३)

पूर्वेणैव समासे सिद्धे नियमार्थं वचनम्। अव्ययेनोपपदस्य यः समासः सोऽमैव भवति, नान्येन। स्वादुङ्कारं भुङ्क्ते। संपन्नङ्कारं भुङ्क्ते। लवणङ्कारं भुङ्क्ते।

### न्यासः

**अमैवाव्ययेन ॥ स्वादुङ्कारं भुङ्क्त इति।** 'स्वादुमि' इति णमुल्। स्वादुमीत्येतस्मादेव मान्तनिर्देशादुपपदस्य मकारान्तत्वं निपात्यते। यदि पूर्वेणैव समासे सिद्धे नियमार्थं वचनम्, एवञ्च सति सिद्धे विधिरारभ्यमाणोऽन्तरेणाप्येवकारकरणं नियमार्थो भविष्यति, तत् किमर्थमेवकरणमित्याह—**एवकारकरणमित्यादि।** किमर्थं पुनस्तदुपपदविशेषणार्थं क्रियत इत्यत आह—**अमैव तुल्यविधानमित्यादि।** येन वाक्येनामेव प्रत्ययो विधीयते न तु प्रत्ययान्तरम्, तेन यदुपपदं निर्दिश्यते तदमैव तुल्यविधानम्, तस्यैव समासो यथा स्यादित्येव-

### पदमञ्जरी

**अमैवाव्ययेन ॥ स्वादुङ्कारमिति।** स्वादुमि णमुल्, स्वादुमीत्यत एव निपातात्पूर्वपदस्य मान्तत्वम्। स्वादुमीत्यर्थग्रहणम्, तेन संपन्नंकारमित्यत्रापि भवति। ननु सिद्धे विधिरारभ्यमाणो नियमाय भवति (कात० परि० ६२), एवकारः किमर्थः? इष्टतोऽवधारणार्थः, एवं यथा विज्ञायेत—अमैवाव्ययेनेति मैवं विज्ञायि—अमाव्ययेनैवेति। अनव्ययस्यासम्भवादेवायं नियमो न भविष्यति। ननु चायमस्ति—स्वशयं ब्राह्मणकुलमिति—'अधिकरणे शेतेः' इत्यच्, 'अतोऽम्' इति सोरम्भावः, अनेनानव्ययेन समासो मा भूदित्येवमर्थो नियमः स्यात्, न; अत्र ह्यन्तरङ्गत्वादनुत्पन्न एव सावुपपदसमासेन भाव्यम्, पश्चात्सुपेति विधानवेलायामनव्ययस्यामोऽसम्भवान्नियमान्तरेण वचनस्य चरितार्थत्वाद् विपरीतनियमो न भविष्यतीत्यत आह—**एवकारकरणमिति।** अमैव यदुपपदं तत्समस्यते, तदेव समस्यत इत्यक्षरार्थः, न पुनरमैव समस्यत इति। तत्रामैव यदुपपदमित्यत्र तुल्यविधानमिति वाक्यशेषः। किं चामैव तुल्यविधानं येन वाक्येनामेव केवलो विधीयते, न

### भावबोधिनी

पूर्ववर्ती सूत्र [उपपदमतिङ्] से ही कार्य सिद्ध रहते नियम करने के लिये यह सूत्र है। अव्यय के साथ उपपद का जो समास होता है वह अम् [अमन्त] के साथ ही होता है अन्य के साथ नहीं। उदा०—स्वादुङ्कारं भुङ्क्ते। [स्वादुयुक्त बनाकर खाता है।] सम्पन्नंकारं भुंक्ते [सम्पन्न करके खाता है।] लवणंकारं भुङ्क्ते [नमकीन बनाकर खाता है। इनमें अभूततद्भाव में णमुल् होता है—अस्वादु स्वादु कृत्वा भुङ्क्ते, असम्पन्नं सम्पन्नं कृत्वा भुङ्क्ते अलवणं लवणं कृत्वा भुङ्क्ते—यह विग्रह है। यहाँ स्वादु अम् कृ से 'स्वादुमि णमुल्' (पा० सू० ३।४।२६) सूत्र से णमुल् = अम् प्रत्यय करके वृद्धि आदि के बाद स्वादु अम् कारम् में 'अमैवाव्ययेन' इस प्रस्तुत सूत्र से समास होता है क्योंकि 'कृन्मेजन्तः' से 'कारम्' इसकी अव्यय संज्ञा हो जाती है। अतः अमन्त अव्यय मानकर समास हो जाता है। यहाँ मकारान्तत्व निपातन से होकर उसका अनुस्वार और परसवर्ण होने पर रूप सिद्ध होता है। यही प्रक्रिया अन्य शब्दरूपों में भी समझनी चाहिये।]

'अमन्त' के साथ ही यह किसलिये है? 'कालसमयवेलासु तुमुन्' (पा० सू० ३।३।१६७) [इससे तुमुन् करने पर]—कालो भोक्तुम् [भोजन का समय। यहाँ अमन्त नहीं 'तुम्' अतः समास नहीं होता है।]

एवकार को उपपद का विशेषण बनाने के लिये ही लगाया गया है—अम् के सदृश ही विधान वाला जो उपपद उसका समास हो सके, अम् तथा दूसरे के तुल्य विधान वाला जो, उसका न हो—जैसे अग्रे भुक्त्वा, अग्रे भोजम्।

अमैवेति किम् ? 'कालसमयवेलासु तुमुन्' [३।३।१६७]—कालो भोक्तुम् ।

एवकारकरणमुपपदविशेषणार्थम्—अमैव यत्तुल्यविधानमुपपदं तस्य समासो यथा स्यात्, अमा चान्येन च यत्तुल्यविधानं तस्य मा भूत्–अग्रे भुक्त्वा, अग्रे भोजम् ॥

## ४४४. तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ २१ ॥ (७८४)

'अमैव' इत्यनुवर्त्तते। 'उपदंशस्तृतीयायाम्' [३।४।४७] इत्यतः प्रभृति यान्युपपदानि तान्यमैवाव्ययेन सहान्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति।

न्यासः

मर्थमेवकारकरणमुपपदविशेषणार्थं क्रियते। स च समासः प्रत्यासत्तेरमैव भवति, न प्रत्यान्तरेणेति विज्ञायते। अग्रे भुक्त्वा, अग्रे भोजमिति। अत्राग्रेशब्द उपपदम् 'विभाषाग्रेप्रथमपूर्वेषु' इत्यमा क्त्वाप्रत्ययेन च तुल्यविधानमिति न समस्यते। अव्ययग्रहणं स्पष्टार्थम्। न ह्यनव्ययममन्तमस्ति यन्निवृत्त्यर्थमव्ययग्रहणमर्थवद्भवति ॥ २० ॥

तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ पर्याप्तो भोक्तुमिति। 'पर्याप्तिवचनेष्वलमर्थेषु' इत्यत्र 'शकधृषज्ञाग्ला-

पदमञ्जरी

प्रत्ययान्तरसहितस्तेन वाक्येन यदुपपदं विधीयते तत्र सप्तमीनिर्देशात्तदमैव तुल्यविधानम्। नियमाङ्गभूतस्त्वेवकारो नियमस्वभावादेव लभ्यते—अमैव यत्तुल्यविधानं न तु प्रत्ययान्तरोत्पत्तौ निमित्तमिति तदपेक्षयाऽनुपपदत्वाद् अव्ययान्तरेण समासो नाशङ्कनीयः। अग्रे भोजमिति। 'विभाषाग्रे प्रथमपूर्वेषु' इति क्त्वाणमुलौ। अव्ययग्रहणं किम् ? असत्यव्ययग्रहणे 'अमैव तुल्यविधानं तदेवोपपदं समस्यते' इत्युच्यमाने कुम्भकारादावपि न स्यात्। अथ पूर्वसूत्रस्यानवकाशत्वादमैव तुल्यविधानस्योपपदस्याव्ययविषयत्वात्तद्विषय एव नियमो विज्ञास्यत इत्युच्यते ? एवं त्वमैव नियमः स्याद्—अमन्तेनोपपदस्य यः समासः सोऽमैव तुल्यविधानस्येति, तत्र को दोषः ? अग्रेभोजमित्यत्रैव न स्यात्, अग्रे भुक्त्वा, कालो भोक्तुमित्यत्र तु स्यादेव; अव्ययग्रहणे तु सति अव्ययेनोपपदस्य यः समासः सोऽमैव तुल्यविधानस्येति विज्ञानान्न कश्चिद्दोषः ॥ २० ॥

तृतीयाप्रभृतीन्यन्यतरस्याम् ॥ तृतीयाप्रभृतीनीति। यत्पुनरमा चान्येन तस्याऽऽप्राप्त इति। उपपद-

भावबोधिनी

विमर्श—'उपपदमतिङ्' (पा० सू० २।२।१९) इस सूत्र से ही समास हो जाना सम्भव था फिर भी जो प्रस्तुत सूत्र बनाया गया, उसका उद्देश्य है–नियम करना। वह नियम ऐसा है—'उपपद का अव्यय के साथ जो समास होता है वह अमन्त अव्यय के साथ ही हो, अन्य अव्यय के साथ नहीं।'

प्रश्न यह है कि जब यह नियमार्थ है तो 'एव' का क्या फल है, क्योंकि नियम में एवकारार्थ रहता ही है ? इसका समाधान यह है कि उपपद को विशेषित करने के लिये 'एव' का प्रयोग है—जिस वचन द्वारा जिसके उपपद रहते अम् का ही विधान किया जाता है, किसी अन्य प्रत्यय का विधान नहीं किया जाता है, अर्थात् जिससे अम् का विधान होता है उसी के द्वारा जिस उपपद का निर्देश किया जाता है वही उपपद अम् के साथ तुल्यविधानवाला माना जाता है, उसी का समास होता है। यदि कोई दूसरा प्रत्यय भी किया जाता है तो उसके साथ समास नहीं होता है। यही 'एव' का फल है। इस कारण 'अग्रे [illegible]त्वा, अग्रे भोजम्' यहाँ समास नहीं होता है क्योंकि 'विभाषाऽग्रे प्रथम०' (पा० सू० ३।४।२४) सूत्र द्वारा णमुल् [illegible] साथ-साथ क्त्वा प्रत्यय का भी विधान किया जा रहा है। अतः यह अग्रे अम् का तुल्यविधान नहीं है, इ[illegible] समास नहीं होता है। 'येन अम् एव विधीयते तेन यस्य उपपदसंज्ञा विधीयते तद् उपपदम् अव्ययेन समस्यते, [illegible]न्येन तुल्यविधानम्।' संज्ञायाः तुल्यविधानत्वमाश्रित्य तत्संज्ञकस्य तुल्यविधानत्वमुक्तमिति भावः।' (दाधिमथी) ॥ २० ॥

'अमैव' इसकी अनुवृत्ति होती है। 'उपदंशस्तृतीयायाम्' (पा. सू ३।४।४७) इससे लेकर जितने उपपद हैं वे अमन्त अव्यय के साथ ही समासत्व प्राप्त करते हैं, और वह तत्पुरुष समास होता है। [भाव यह है कि 'उपदंशस्तृती-

उभयत्रविभाषेयम्। यदमैव तुल्यविधानमुपपदं तस्य प्राप्ते, यथा—'उपदंशस्तृतीयायाम्' इति। यत्पुनरमा चान्येन च तुल्यविधानं तस्याप्राप्ते, यथा—'अव्यये यथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' [३।४।६९] इति, मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते। उच्चैःकारमाचष्टे। उच्चैः कारम्।

अमैवेत्येव—'पर्याप्तिवचनेष्वलमर्थेषु', पर्याप्तो भोक्तुम्। प्रभुर्भोक्तुम्॥

## ४४५. क्त्वा च॥ २२॥ (७८५)

'अमैव' इति पूर्वयोगेऽनुवृत्तम्, तेनान्यत्र न प्राप्नोतीति वचनमारभ्यते। क्त्वाप्रत्ययेन सह तृतीया-

### न्यासः

घटरभ' इत्यादेः सूत्रात् तुमुन्ग्रहणानुवृत्तेस्तुमुन्प्रत्ययः॥ २१॥

**क्त्वा च॥** अलं कृत्वा, खलु कृत्वेति। 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा', स च तृतीया-

### पदमञ्जरी

विशेषणार्थ एवकारोऽत्र नानुवर्त्तत इति भावः। उच्चैःकारमिति। यदा समासस्तदा कृदुत्तरपदप्रकृतिस्वरः, 'आदिर्णमुल्यन्यतरस्याम्' इत्याद्युदात्तत्वम्। यदा तु न समासः, तदोच्चैरित्यन्तोदात्तम्; स्वरादिषु तथा पाठात् कारमित्याद्युदात्तम्॥ २१॥

**क्त्वा च॥** क्त्वेति तृतीयान्तम्। 'आतः' इत्याकारलोपः, यथा—'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति

### भावबोधिनी

यायाम् (पा सू. ३।४।४७ से लेकर 'अन्वच्यानुलोम्ये' (पा. सू. ३।४।६४) तक जो उपपद हैं वे अमन्त अव्यय के साथ ही समस्त होते हैं।]

यह उभयत्र विभाषा है—जो अम् के ही तुल्यविधानवाला उपपद है, उसका समास प्राप्त रहने पर, जैसे 'उपदंशस्तृतीयायाम्' (पा सू ३।४।४७) और जो अम् तथा अन्य के तुल्यविधानवाला है, उसका समास न प्राप्त रहने पर, जैसे 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (पा० सू० ३ ४.६९)। क्रमशः उदा०—मूलकोपदंशं भुङ्क्ते, मूलकेनोपदंशं भुङ्क्ते*।

**विमर्श**—यहाँ मूलकेन उपपद दंश धातु से 'उपदंशस्तृतीयायाम्' (पा. सू. ३।४.४७) इससे णमुल्=अम् प्रत्यय होता है। यहाँ तृतीयान्त उपपद का और अम् का विधान होने से तुल्यविधान है। यहाँ 'अमैवाव्ययेन' से समास की प्राप्ति रहते इस विकल्प का विधान होने से प्राप्तविभाषा है। और उच्चैः कारमाचष्टे, उच्चैः कारम्। यहाँ 'अव्यये-ऽयथाभिप्रताख्याने क्त्वाणमुलौ' (पा. सू. ३।४।५९) से कृञ् धातु से क्त्वा और णमुल् दोनों के होने से यह अम् का तुल्यविधान नहीं है। अतः 'अमैवाव्ययेन' सूत्र से समास को प्राप्ति नहीं है। अतः अप्राप्तविभाषा है। यही मानकर इसे उभयविभाषा=प्राप्ताप्राप्तविभाषा कहा है। उच्चैःकारम् आचष्टे-यहाँ जब समास हो जाता है तब कृदुत्तर पद का प्रकृतिस्वर होने से आद्युदात्त है। जब समास नहीं होता है तब 'उच्चैः' इसका अन्तोदान्त और 'कारम्' इसका आद्युदात्त होता है। उन उदाहरणों की सिद्धि के विषय में प्रत्यय-विधायक सूत्रों की व्याख्या में लिखा जा चुका हैं। उसे काशिका-चतुर्थ भाग में देखना चाहिये।

[अनु०] अम् प्रत्ययान्त के साथ ही-इतनाही है [[illegible] समास नहीं होता है]—'पर्याप्तिवचनेष्वलमर्थेषु' [पा० सू० ३.४.६६ से विहित तुमुन् प्रत्ययान्त के साथ] पर्याप्[illegible] प्रभुर्भोक्तुम् [खाने में समर्थ है।]

**विमर्श**—महाविभाषा की अनुवृत्ति रहने पर भी यहाँ[illegible]यतरस्याम्' का ग्रहण किया गया है वह 'नित्य' की अनुवृत्ति रोकने के लिये है॥ २१॥

'अमा एव' यह पूर्वसूत्र में अनुवृत्त होता है, अतः अन्य प्रत्यय के रहने पर समास प्राप्त नहीं होता है, इस लिये प्रस्तुत सूत्र बनाया जा रहा है। क्त्वा-प्रत्ययान्त के साथ तृतीया आदि उपपदों का विकल्प से समास होता है,

प्रभृतीन्युपपदानि अन्यतरस्यां समस्यन्ते, तत्पुरुषश्च समासो भवति। उच्चैःकृत्य। उच्चैः कृत्वा। 'अव्यये यथाभिप्रेताख्याने' [३।४।५९] इति क्त्वाप्रत्ययः। समासपक्षे ल्यबेव! तृतीयाप्रभृतीनीत्येव—अलं कृत्वा। खलु कृत्वा॥

**४४६. शेषो बहुव्रीहिः॥ २३॥ (८२९)**

उपयुक्तादन्यः शेषः। शेषः समासो बहुव्रीहिसंज्ञो भवति। कश्च शेषः? यत्रान्यः समासो नोक्तः। वक्ष्यति—'अनेकमन्यपदार्थे' [२।२।२४]। चित्रगुः। शबलगुः। कृष्णोत्तरासङ्गः।

शेष इति किम्? उन्मत्तगङ्गम्, लोहितगङ्गम्। बहुव्रीहिप्रदेशाः—'न बहुव्रीहौ' [१।१।२९] इत्येवमादयः॥

**न्यासः**

प्रभृतिभ्यः पूर्वः॥ २२॥

**शेषो बहुव्रीहिः॥ उपयुक्ताद् योऽन्य इति।** अभिहितादन्य इत्यर्थः। **यत्रान्यः समासो नोक्त इति।** यत्रान्या समाससंज्ञा न विहितेत्यर्थः। **चित्रगुरिति।** अत्र बहुव्रीहित्वे सति 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इत्येष विधिर्भवति। **उन्मत्तगङ्गमिति।** 'अन्यपदार्थे च संज्ञायाम्' इत्यव्ययीभावः। असति हि शेषग्रहण इहापि बहुव्रीहिः स्यात्। ननु च बहुव्रीहौ प्राप्तेऽव्ययीभावस्त्वारभ्यमाणस्तस्यैव बाधको भविष्यति, तत् कुतो बहुव्रीहि-

**पदमञ्जरी**

'क्त्वि स्कन्दिस्यन्द्योः' इति॥ २२॥

**शेषो बहुव्रीहिः॥ उपयुक्तादन्यः शेष इति।** 'शिष असर्वोपयोगे' (धा० पा० १८१७) इत्यस्मात्कर्मणि घञ्। **कश्च शेष इति।** ननु चोपयुक्तादन्यः शेष इत्युक्तम्, सत्यम्, सर्वेषामेव पदानां सामान्यविशेषरूपेणोपयोगात् सर्वेषु च पूर्वोत्तरान्यपदार्थेषु यथायोगं तत्पुरुषाव्ययीभावयोर्विधानादुपयुक्तादन्यो न सम्भवतीति पुनः प्रश्नः। उक्तं च—'शेषग्रहं पदतश्चेन्नाभावादर्थतश्चेदविशिष्टम्' (कात्या० वा० १३४७ ४८) इति। **यत्रान्यः समासो**

**भावबोधिनी**

और वह तत्पुरुष होता है। उदा०—उच्चैः कृत्य, उच्चैः कृत्वा। यहाँ 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' (पा० सू० ३.४.५९) से क्त्वा प्रत्यय होता है। जब समास होता है तब 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (पा० सू० ७.१.३७) से ल्यप् ही होता है [और तुक् होने पर उच्चैः कृत्य बनता है। समास न होने पर अलग अलग रहते हैं—उच्चैः कृत्वा।]

तृतीया आदि उपपद रहते ही समास होता है—[अतः यहाँ नहीं होता है] अलं कृत्वा, खलु कृत्वा [अब करने की आवश्यकता नहीं है—इस निषेध अर्थ में 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' (पा० सू० ३.४.१८) से क्त्वा प्रत्यय होता है।

**विमर्श**—'क्त्वा च' यहाँ सूत्र में तृतीया एकवचन का प्रयोग है। अतः क्त्वा प्रत्ययान्त के साथ तृतीयान्त आदि उपपदों का समास होता है। 'समासेऽनञ्पूर्वे क्त्वः' (पा० सू० ७.१.३७) 'क्त्वि स्कन्दिस्यन्द्योः' (पा. सू. ६.४.३१) आदि सूत्रों में क्त्वा को आकारन्त मानकर षष्ठी, सप्तमी के समान यहाँ तृतीया का रूप समझना चाहिये। यहाँ तत्पुरुष का अधिकार समाप्त हो जाता है॥ २२॥

उपयुक्त से भिन्न शेष होता है। शेष [illegible] की बहुव्रीहि संज्ञा होती है। शेष कौन है? जहाँ और दूसरा समास नहीं कहा गया है। आगे कहा जायगा [illegible] अन्यपदार्थे" २।२।२४ [अन्य पदार्थ में वर्तमान अनेक सुबन्तों का समास होता है।] चित्रगुः। शबलगुः। [illegible]सङ्गः। [इनकी प्रक्रिया विमर्श में देखें]। शेष में—यह किस लिये है? उन्मत्तगङ्गम्। लोहितगङ्गम्। [उन्मत्त गंगा[illegible]ला देश। लोहित गंगा वाला देश। इनमें 'अन्यपदार्थे च संज्ञायाम्' (पा० सू० २ १.२१) से अव्ययीभाव समास का विधान किया जा चुका है, उपयुक्त है। अतः शेष न होने से बहुव्रीहि नहीं होता है।] बहुव्रीहि संज्ञा के प्रयोगस्थल—'न बहुव्रीहौ।' (पा० सू० १.१.२९) आदि के समान बहुव्रीहि पद-

## ४४७. अनेकमन्यपदार्थे ॥ २४ ॥ (८३०)

**अनेकं सुबन्तमन्यपदार्थे वर्तमानं सह समस्यते, बहुव्रीहिश्च समासो भवति। प्रथमार्थमेकं वर्जयित्वा सर्वेषु विभक्त्यर्थेषु बहुव्रीहिर्भवति। प्राप्तमुदकं यं ग्रामं प्राप्तोदको ग्रामः। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। चित्रगुर्देवदत्तः। वीरपुरुषको ग्रामः।**

न्यासः

प्रसङ्गः ? 'प्राक् कडारात् परं कार्यम्' इत्यस्मिन् पक्ष इदं प्रत्युदाहरणमुपन्यस्तम्। तत्र हि पक्षे यदि शेषग्रहणं न क्रियेत, ततः 'अन्यपदार्थे च संज्ञायाम्' इति वचनप्रामाण्यादव्ययीभावः स्यात्। परत्वाद्बहुव्रीहिरित्येके। अयं तु पक्षो वृत्तिकारेण नाश्रित इत्ययुक्तमेतत्। तस्माद् 'आकडारादेका संज्ञा' इत्यस्मिन् पक्षे 'व्यक्तिः पदार्थः' इत्येतद्दर्शनमाश्रित्येदं प्रत्युदाहरणमुपन्यस्तम्। व्यक्तौ हि पदार्थे प्रतिलक्ष्ये लक्षणं प्रवर्त्तते। अत्रासति शेषग्रहणे यदेतद्विषयं लक्षणं तदकृतार्थमित्यवश्यं तेन वर्त्तितव्यम्। एकसंज्ञाधिकाराच्च यौगपद्यं न सम्भवतीति वचनप्रामाण्यादुभयप्रसङ्गः, उभे अपि पर्यायेण स्यातामित्यपरे ॥ २३ ॥

**अनेकमन्यपदार्थे** ॥ अनेकग्रहणं सुबित्यनेन सम्बध्यते, प्रथमान्तत्वात्; न सुपेति तृतीयान्तेन। **प्राप्तोदको ग्राम** इत्यादीनि द्वितीयादिविभक्त्यर्थेषु यथाक्रमं बहुव्रीहेरुदाहरणानि।

पदमञ्जरी

**नोक्त इति**। येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिकः समासो न विहितः स शेष इत्यर्थः। अथैवं कस्मान्न विज्ञायते—सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य शृङ्गग्राहिकया समासो नोक्तः, यथा—प्रथमायाः, स शेष इति ? कण्ठेकाल इत्यादावप्रथमान्तानामपि समासस्येष्टत्वात्। शेषग्रहणं प्राक्कडारात्परं कार्यमित्यस्मिन्पक्षे कर्तव्यम्, एकसंज्ञाधिकारपक्षे न कर्तव्यमित्याकडारसूत्र एव प्रतिपादितम् ॥ २३ ॥

**अनेकमन्यपदार्थे** ॥ **अनेकं सुबन्तं सह समस्यत इति**। परस्परमित्यर्थः। तदनेन सुबित्येतदत्रानुवर्तते, न सुपेत्येतद्; उत्तरपदस्याप्यनेकमित्यनेनैव प्रतिपादितत्वादिति दर्शयति—**सर्वेषु विभक्त्यर्थेष्विति**। पदेन प्रकृत्य-

भावबोधिनी

घटित सूत्र है।

**विमर्श**—चित्रा गावः यस्य सः—यह लौकिक विग्रह है और चित्रा जस् गो जस् यह अलौकिक विग्रह है। 'अनेकमन्यपदार्थे' (२।२।२४) से समास करने पर 'कृत्तद्धितसमासाश्च' (पा० सू० १ २.४६) से प्रतिपदिक संज्ञा और 'सुपो धातुप्रातिपदिकयोः (२।४।७१) से विभक्तिलोप और 'सप्तमीविशेषणे बहुव्रीहौ' । (२।२।३५) से विशेषण-चित्रा का पूर्वनिपात—चित्रा गो। 'गोस्त्रियोरुपसर्जनस्य (१।२।४८) से गो का ह्रस्व और 'स्त्रियः पुंवद्भाषितपुंस्काद०' से चित्रा का पुंवद्भाव करने पर 'चित्रगु'। प्रथमा एक वचन में' 'सु', उकार की इत्संज्ञालोप, स् का 'ससजुषोः रुः' (पा० सू० ८ २.६६) से रुत्व, 'खरवसानयोर्विसर्जनीयः (पा० सू० ८.३.१५ से विसर्ग करने पर रूप सिद्ध होता है। चित्रवर्णवाली गायों वाला। इसी प्रकार 'शबलगुः' की भी सिद्धि होती है। चितकबरी गायों वाला। कृष्णवर्ण के उत्तरासंगवाला [काले दुपट्टा वाला]।

शेष की व्याख्या करते हुये लिखा गया है–उपयुक्त [illegible] हुआ। द्वितीया आदि सभी विभक्तियों के समास का विधान किया जा चुका है। अतः प्रथमान्त का समास बहुव्रीहि [illegible] है। बहुव्रीहि के दो भेद होते हैं (१) समानाधिकरण और (२) व्यधिकरण। जब सभी में प्रथमा विभक्ति [illegible] समानाधिकरण होता है जैसा कि उक्त उदाहरणों में है। किन्तु जब भिन्न विभक्तियाँ होती हैं तब व्यधिकरण [illegible] जैसे —कण्ठे कालः यस्य सः आदि ॥ २३ ॥

अन्यपदार्थ में वर्तमान अनेक सुबन्तों का (परस्पर) समास होता है, और वह बहुव्रीहि होता है। एकमात्र प्रथमा विभक्त्यर्थ को छोड़ कर शेष सभी विभक्तियों के अर्थों में बहुव्रीहि समास होता है। उदा०—[१–द्वितीयार्थ में] प्राप्तम् उदकं यं ग्रामम् सः—प्राप्तोदकः ग्रामः [प्राप्त कर लिया है उदक ने जिस गाँव को वह–प्राप्तोदक ग्राम है। यहाँ

प्रथमार्थे तु न भवति । वृष्टे देवे गतः । अनेकग्रहणं किम् ? बहूनामपि यथा स्यात्—

सुसूक्ष्मजटकेशेन सुगजाजिनवाससा ।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति ॥ (म० भा० २.२ २४)

**न्यासः**

• **प्रथमार्थे तु न भवतीति** । अनभिधानात् । नहि वृष्टे देवे गत इति वाक्याद् योऽर्थः प्रतीयते, स वृष्टदेवशब्दात् प्रतीयते ।

**अनेकग्रहणं किमिति** । एवं मन्यते—अनेकग्रहणमित्येकस्य मा भूदित्येवमर्थं स्यात्, एतच्चायुक्तम्; यथैव हि 'सुप्सुपा' इत्यधिकारात् समर्थपरिभाषोपस्थानाच्च तत्पुरुष एकस्य न सम्भवति, तथा बहुव्रीहिरपि न भविष्यतीति किमर्थमनेकग्रहणमित्याह—**बहूनामपि यथा स्यादिति** । 'सुप्सुपा' इत्यधिकारात् समर्थपरिभाषोपस्थानाच्चानेकस्यैव समासे लब्धे सत्यनेकग्रहणं प्रचुरतरार्थं विज्ञायते, तेन बहूनामपि भवति । चित्रग्वादेः सकाशात् सुसूक्ष्मजटकेशादिषु प्रचुराणि पदानि भवन्ति । अथान्यपदार्थग्रहणं किमर्थम् ? बहुव्रीहितत्पुरुषयोर्विषयविभागार्थम् । अविशेषेण तत्पुरुष उच्यमानोऽनन्यपदार्थे कृतावकाशोऽन्यपदार्थे परत्वाद्बहुव्रीहिणा यथा बाध्येत—वीरपुरुषको ग्रामः, चित्रगुर्देवदत्त इति ।

**पदमञ्जरी**

र्थोपसर्जनः प्रत्ययार्थोऽभिधीयत इति विभक्त्यर्थस्य प्राधान्यात्तस्यैवान्यपदार्थग्रहणेन ग्रहणमिति भावः । अत एव प्रासादकोऽयं ग्राम इति ग्रामशब्दानुप्रयोगः, अन्यथा यावानेवार्थो ग्रामपदस्य तावतोऽभिधाने गतार्थत्वान्न स्यात्, यथा—द्वन्द्वे 'च'-शब्दस्य । यदा तु समासेन विभक्त्यर्थं एव सम्बन्धादिरभीप्स्यते तदा विभक्तिर्मानुप्रयोजि, द्रव्यस्यानभिहितत्वात्तद्वाचिनोऽनुप्रयोगः कस्मान्न स्यात् यदि विभक्त्यर्थोऽभिधीयते, कथं ग्रामादिभिः सामानाधिकरण्यं तल्लिङ्गसंख्यायोगे वा बहुव्रीहिर्भवति—प्रासादको ग्रामः, उद्धृतौदना स्थालीति ? उच्यते—विभक्त्यर्थस्य सम्बन्धादेराश्रितत्वेन गुणत्वादभेदोपचारात्सामानाधिकरण्यमाश्रयतश्च लिङ्गवचनानि भविष्यन्ति शुक्लादिवत्, यथा—शुक्लं शस्त्रम्, शुक्ला पटो, शुक्लः कम्बलः, शुक्लैः, शुक्ला इति । नन्वेवं यथा शुक्लशब्देन कदाचिद्गुण उच्यते, कदाचित् गुणी; तया बहुव्रीहावपि प्राप्नोति । नैषाऽस्ति नियमः—गुणशब्देन कदाचिद्गुणमात्रमभिधीयत इति, पट्वादिष्वदर्शनात्, न हि भवति देवदत्तस्य पटुरिति; तद्वदिहापि नित्यमेव गुणिनिष्ठता भविष्यति । एवमपि बहुव्रीहिणा यथा विभक्त्यर्थस्याभिधानात् षष्ठ्यादयो न भवन्ति, तथा लिङ्गसंख्ययोरप्यभिधानात्तयोर्वाचकाः प्रत्यया न प्राप्नुवन्ति ? नैष दोषः; स्वार्थिकाष्टाबादयः, स्त्रियां यद्वर्तते तस्मात्स्वार्थिकाष्टाबादयो भवन्तीति तेन बहुव्रीहिणाऽभिहितेऽपि क्लीवे भविष्यन्ति । एवं च कृत्वा 'अनो बहुव्रीहेः' इत्याद्युपपन्नं

**भावबोधिनी**

यम्=ग्रामम् इस द्वितीयान्त से बोध्य अन्य पदार्थ की प्रतीति होती है ।] [२–तृतीयार्थ में] ऊढरथः अनड्वान् [ऊढः रथः येन सः । यहाँ तृतीयान्तबोध्य अन्य पदार्थ में बहुव्रीहि है । ढो लिया है रथ को जिसने ऐसा बैल] [३–चतुर्थी के अर्थ में] उपहृतपशुः रुद्रः [उपहृतः पशुः यस्मै सः । यहाँ चतुर्थी-विभक्त्यन्त से बोध्य अन्य पदार्थ में बहुव्रीहि है । भेंट किया गया है पशु जिसको वह] [४–पञ्चमी विभक्ति के [illegible]र्थ में] उद्धृतौदना स्थाली [उद्धृतः ओदनः यस्याः सा । यहाँ पञ्चमी के अर्थ में समास है । निकाल लिया गया [illegible] जिससे ऐसी बटलोई ।] [५–षष्ठी के अर्थ में] चित्रगुः देवदत्तः [चित्राः गावः यस्य सः । यहाँ षष्ठी-विभक्त्यन्त [illegible] अन्य पदार्थ में समास होता है । चितकबरी गायें हैं जिसकी] [६–सप्तमी के अर्थ में] वीरपुरुषकः ग्रामः [वी[illegible]ः यस्मिन् सः । यहाँ सप्तम्यन्त-पदबोध्य अन्य पदार्थ में समास किया गया है । वीर पुरुष हैं जिसमें ऐसा गाँव ।]

प्रथमा के अर्थ में तो बहुव्रीहि नहीं होता है वृष्टे देवे गतः [वर्षा हो जाने पर गया—यहाँ 'गतः' इस प्रथमान्त से बोध्य पदार्थ की प्रधानता है अतः समास नहीं होता है ।]

* **बहुव्रीहिः समानाधिकरणानामिति वक्तव्यम्** * (म० भा० २ २.२४ वा० ७)। **व्यधिकरणानां मा भूत्—पञ्चभिर्भुक्तमस्य।**

* **अव्ययानां च बहुव्रीहिर्वक्तव्यः** * (वा० ८)। **उच्चैर्मुखः। नीचैर्मुखः।**

**न्यासः**

**बहुव्रीहिः समानाधिकरणानामित्यादि।** समानाधिकरणानां पदानां बहुव्रीहिर्भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। किमर्थमिदमित्याह—**व्यधिकरणानां मा भूदिति।** तत्रेदं व्याख्यानम्—अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्ति, न च व्यधिकरणानां बहुव्रीहौ कृते विवक्षितार्थाभिधानमस्ति, न हि पञ्चभिर्भुक्तमस्येति वाक्याद् योऽर्थः प्रतीयते स पञ्चभुक्तशब्दात्। तस्मादनभिधानाद्व्यधिकरणानां बहुव्रीहिर्न भविष्यति। यत्र त्वभिधानमस्ति तत्र वैयधिकरण्येऽपि भवत्येव समासः—कण्ठेकाल इति।

**अव्ययानाञ्चेति।** बहुव्रीहिर्भवतीति सम्बन्धनीयम्। चकारादनव्ययानाञ्च क्वचित्। असमानाधिकरणार्थमिदम्। **उच्चैर्मुखमिति।** उच्चैःशब्दस्याव्ययस्यासत्त्ववाचित्वात् सत्त्ववाचिना मुखशब्देन नास्ति सामानाधिकरण्यम्, तथापि गमकत्वात् समासो भवत्येव। अनव्ययानामुदाहरणम्—**कण्ठे स्थितः कालो यस्येति स कण्ठेकाल इत्येवमादि।** कथं पुनस्तुल्येऽपि वैयधिकरण्ये पदानां क्वचिद्बहुव्रीहेर्गमकत्वं भवति ? क्वचिन्न भवतीति ? शब्दशक्तिस्वभावात्। शब्दशक्तयश्च प्रतिनियताश्रयाः क्वचिदेव प्रवर्त्तन्ते; न सर्वत्र।

**पदमञ्जरी**

भवति। समासेन च बाह्यक्रियापेक्षा या कर्मादिशक्तिस्तद्रहितसमासप्रातिपदिकार्थमात्रस्यैवैकत्वादेरुक्तत्वादिति कर्मादिगतैकत्वादिप्रतिपादनाय वचनानि भविष्यन्ति—चित्रगुं पश्य, चित्रगुणा कृतमिति। एवमपि प्रथमा न प्राप्नोति, समासेन संख्याया अभिधानात् ? वचनग्रहणादेकः, द्वौ, बहव इतिवद्भविष्यति। अथवा—लिङ्गमात्रं संख्यामात्रं बहुव्रीहिणाभिहितं न विशेषस्तत्रावश्यं विशेषार्थिना तद्वाची शब्दः प्रयोक्तव्यः, एवं च कृत्वा सह प्रकृत्यर्थेन विभक्त्यर्थे बहुव्रीहिणाभिधीयमानेऽपि न कश्चिद्दोषः। कथं सामान्यमनभिहितं विशेषस्यानुप्रयोगः ? सामान्यस्य तर्हि न प्राप्नोति—देवदत्तः कश्चिदिति, सामान्यमपि विशेषः, यथा विशेषेण विशेषान्तरं व्यावर्त्यते तद्वत्सामान्येन विशेषो व्यावर्त्यते, अन्यथा सन्देहः स्यात्—सामान्यमत्र विवक्षितम् ? विशेषो वा ? इति।

**प्राप्तोदको ग्राम** इत्यादीनि द्वितीयाद्यर्थेषु यथाक्रममुदाहरणानि। ऊढो रथो येन, उपहृतः पशुर्यस्मै, उद्धृत ओदनो यस्याः, चित्रा गावो यस्य, वीराः पुरुषा यस्मिन्निति विग्रहाः। **प्रथमार्थे तु न भवतीति।**

**भावबोधिनी**

अनेकम्—इसका ग्रहण किस लिये है? बहुत पदों का भी समास जिससे सम्भव हो सके—

'सुन्दर और सूक्ष्म जटाओं केशों वाले, सुन्दर गजचर्म रूपो वस्त्रवाले, समन्तशितिरन्ध्रवाले,—दो का समास वृत्ति में यहाँ नहीं सिद्ध होता है।

**विमर्श** - प्रस्तुत श्लोक के महाभाष्य में श्लोक का केवल पूर्वार्द्ध ही उद्धृत है। काशिकाकार ने श्लोकपूर्ति के लिये उत्तरार्व को जोड़ दिया है। सुष्ठु सूक्ष्मा जटाः केशाः यस्य सः तेन – यहाँ चार पदों का बहुव्रीहि है। अथवा सुष्ठु सूक्ष्माः जटाः येषु ते सुसूक्ष्मजटाः, तादृशाः केशाः यस्य [illegible]—ऐसा विग्रह है। इसी प्रकार गजस्य अजिनम् गजाजिनम्—इस तत्पुरुष के बाद सुष्ठु गजाजिनं वासः यस्य [illegible] विग्रह विग्रह है।

[अनु०] * समानाधिकरण पदों का ही बहुव्रीहि [illegible] हिये। * व्यधिकरण पदों का बहुव्रीहि न हो—पञ्चभिः भुक्तम् अस्य। [यहाँ पदों का अलग-अलग अर्थ है।] [illegible]

* अव्ययों का बहुव्रीहि कहना चाहिये। * उच्चैर्मुखः [उच्चैर्मुखम् अस्य सः। ऊँचे मुखवाला।] नीचैर्मुखः [नीचैः मुखम् अस्य सः। नीचे मुखवाला। उच्चैः और नीचैः ये शब्द अधिकरण-शक्तिप्रधान असत्त्ववाची है। अतः सामानाधिकरण्य न होने से समास सम्भव नहीं है। इसीलिये यह स्वतन्त्र वचन है।]

* **सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च वक्तव्यः** * (वा० ९)। **कण्ठे स्थितः कालोऽस्य कण्ठेकालः। उरसिलोमा। उष्ट्रस्य मुखमिव मुखं यस्य स उष्ट्रमुखः। खरमुखः।**

**न्यासः**

**सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्चेति**। सप्तम्यन्तं पूर्वपदं यस्योत्तरपदस्य तत् सप्तमीपूर्वपदम्। तस्य परेण पदान्तरेण समासो भवति। तस्य च सप्तम्यन्तपूर्वपदस्योत्तरपदलोपो भवति। कण्ठे स्थित इति विगृह्य 'सप्तमी' इति योगविभागात् समासः। 'तत्पुरुषे कृति बहुलम्' इत्यलुक्। **कण्ठेस्थितः कालोऽस्येति कण्ठेकालः**। अत्र सप्तम्यन्तपूर्वपदस्य समानाधिकरणत्वात् सिद्ध एव बहुव्रीहिः। उत्तरपदलोपस्तु विधीयते। एवमन्यत्रापि वेदितव्यम्। उपमानं पूर्वपदं यस्योत्तरपदस्य तत् पदान्तरेण समस्यते। तस्योपमानपूर्वपदस्योत्तरपदलोपो विधीयते। उष्ट्रमुखमिव मुखमस्योष्ट्रमुखः, खरमुखः। अत्रोष्ट्र उपमानं पूर्वपदं मुखस्य। ननु चोष्ट्रमुखमुपमानं देवदत्तमुखस्य, न तूष्ट्रः? उपमानावयवत्वादुष्ट्रोऽप्युपमानमुच्यत इत्यदोषः।

**पदमञ्जरी**

अभिधानात्, एवमनन्तरादिषु न भवति—चित्रा गावो यस्यानन्तरा इति। **अनेकमिति किमिति**। सुप्सुपेत्यधिकारादेव तत्पुरुषबहुव्रीहिरप्येकस्य न भविष्यतीति प्रश्नः। **बहूनामपि यथा स्यादिति**। अन्यथा सुप्सुपेति संख्याया विवक्षितत्वाद्यथा तत्पुरुषो बहूनां न भवति—महत्कष्टं श्रित इति, यथा बहुव्रीहिरपि न स्यादिति भावः। ज्ञापकात्सिद्धम्, यदयं तद्धितार्थेत्युत्तरपदे द्विगुं शास्ति तज्ज्ञापयति—बहूनामपि समास इति। यद्येवम्, तत्पुरुषेऽपि प्रसङ्गः, अथ चित्रगुरित्यत्रोत्तरपदस्याप्युपसर्जनसंज्ञा प्रयोजनं कस्मान्न भवति, सत्यनेकग्रहणे सुपेत्यस्य निर्वर्तितत्वादुत्तरपदमपि तेनैव प्रत्याय्यते, तदपि समासशास्त्रे प्रथमानिर्दिष्टं भवति, नान्यथा? एवं मन्यते—चित्रगुस्तिष्ठति, चित्रगुं पश्येति प्रधानस्यान्यपदार्थस्य नानाविभक्तियोगेऽपि वर्त्तिपदयोर्नित्यप्रथमान्तत्वादेकविभक्तीत्येव सिद्धमुपसर्जनत्वमिति।

**सुसूक्ष्मजटकेशेनेति**। सुष्ठु सूक्ष्मा जटाः केशा अस्येति चतुर्णां बहुव्रीहौ 'ङ्यापोः संज्ञाछन्दसोर्बहुलम्' इति बहुलवचनाद् ह्रस्वत्वम्। यद्वा, सुष्ठु सूक्ष्मा जटा येषु ते सुसूक्ष्मजटास्तादृशाः केशा अस्येति पुनर्बहुव्रीहिः। एवं सुष्ठु गजाजिनं वास आच्छादनं यस्य तेन सुगजाजिनवाससा, तृतीयान्तोदाहरणम्; श्लोके तथा पठितत्वात्।

'सुसूक्ष्मजटकेशेन　　सुगजाजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिद्ध्यति॥ (म० भा० २.२.१४)

इति भाष्ये श्लोकः पठितः, तत्र तु श्लोकपूरणार्थं तृतीयानिर्देशः। अन्यग्रहणं बहुव्रीहितत्पुरुषयोर्विषयविभागार्थम्, असति तस्मिन् कण्ठेकाल इत्यादौ व्यधिकरणपदे सावकाशं बहुव्रीहिं स्वपदार्थ इव नीलोत्पलं

**भावबोधिनी**

* सप्तम्यन्त और उपमानवाची जिसका पूर्वपद है उसका किसी अन्य पद के साथ समास होने पर इसमें स्थित उत्तर पद का लोप कहना चाहिये। * [यहाँ पूर्वपद का सम्बन्ध सप्तमी और उपमान दोनों के साथ है—सप्तमीपूर्वपदस्य उपमानपूर्वपदस्य] उदा०—कण्ठे स्थितः कालः यस्य सः—कण्ठेकालः [कण्ठ में है काल = मृत्यु जिसकी। यहाँ सप्तम्यन्त कण्ठे पूर्वपद है। ऐसे 'कण्ठेस्थित' [illegible] समास हो जाने पर उत्तरपद = स्थित का लोप हो जाता है। 'अमूर्धमस्तकात्०' (पा० सू० ६।३।१२) से सप्त[illegible]लुक् है।

[भाष्य में कण्ठेस्थः कालो यस्य स[illegible] किया गया है।] उरसिलोमा [उरसि स्थितानि लोमानि यस्य सः यह विग्रह है। पूर्ववत् सप्तमी का अलुक् '[illegible]' उत्तरपद का लोप होता है। छाती में जिसके रोम हैं।] उष्ट्रस्य मुखमिव मुखं यस्य सः—उष्ट्रमुखः। [ऊँट के मुख के समान मुख है जिसका यहाँ उपमानवाचक उष्ट्रमुख का मुख के साथ समास करने पर उत्तरपद 'मुख' का लोप हो जाता है। ऊँट के मुख के समान है मुख जिसका।] खरमुखः [खरस्य मुखमिव मुखं यस्य सः। यहाँ उत्तरपद 'मुख' का लोप हो जाता है गधे के समान मुख वाला।]

* **समुदायविकारषष्ठ्याश्च बहुव्रीहिरुत्तरपदलोपश्चेति वक्तव्यम्** * (वा॰ १०)। **केशानां संघातः, केशसंघातः, केशसंघातः=चूडाऽस्य केशचूडः। सुवर्णस्य विकारोऽलंकारोऽस्य सुवर्णालंकारः।**

**पदमञ्जरी**

सर इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत। अन्यग्रहणे तु सति स्वपदार्थे सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधेत इति न कश्चिद्दोषः।

पदग्रहणं किम्? पदार्थे यथा स्याद्वाक्यार्थे मा भूत्। कश्चित्कञ्चिन्नद्यां सिष्णासुमाह—नद्यां ग्राहाः सन्तीति, एतानि पदानि 'तस्मात्तत्र मा स्नासीः' इति वाक्यार्थं गमयन्तीति तेषां बहुव्रीहिसंज्ञा प्राप्नोति। अर्थग्रहणं किम्, यावता पदे पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति? कृत्स्ने पदार्थे यथा स्यात्, अन्यथा प्राधान्याद्विभक्त्यर्थ एव स्यान्न प्रकृत्यर्थे द्रव्ये। तत्र यदुक्तम्—अभेदोपचाराद्धर्मिणोऽभिधाने सिद्धेऽपि शुक्लादिवद्धर्ममात्रस्यापि कदाचिदभिधानं प्राप्नोति, तदनेनापाक्रियते। पटवादिशब्दवन्नित्यं धर्मिनिष्ठो बहुव्रीहिरिति प्रतिपादनेन बहुव्रीहिः समानाधिकरणानामित्यादिरभिधानसिद्धस्यार्थस्य प्रपञ्चः।

**उच्चैर्मुख इति**। उच्चैसोऽधिकरणप्रधानत्वाद्वैयधिकरण्याद्वचनम्।

**सप्तम्युपमानेति**। सप्तम्यन्तमुपमानवाचि च पूर्वपदं यस्य तस्य शब्दान्तरेण समासस्तत्रस्थस्योत्तरपदस्य लोप इत्यर्थः। **कण्ठेस्थ इति**। 'सुपि स्थः' इति कः। 'अमूर्द्धमस्तकात्' इत्यलुक् **कण्ठेस्थित** इति पाठे तु सप्तमीति योगविभागात्समासः। समानाधिकरणत्वात्समासे सिद्धे वचनमुत्तरपदलोपार्थम्, तेन वैयधिकरण्येऽप्यत्र गमकत्वमस्तीति प्रदर्श्यते। **उष्ट्रमुखमिवेति**। अवयवधर्मेण समुदायव्यपदेशादुष्ट्रस्योपमानतेत्युपमानपूर्वपदमुष्ट्रमुखशब्दः, अत्रोपमानोपमेययोर्वैयधिकरण्यवद्वचनमुत्तरपदलोपार्थं च **उष्ट्रमुख इति**। उष्ट्रो मुखमस्येति विग्रहः, न च प्राणी प्राण्यन्तरस्य मुखमुपपद्यत इति सामर्थ्यात् सादृश्यावगतिः, मुखेन च मुखस्य सादृश्यं प्रसिद्धमित्युष्ट्रमुखमिव मुखमस्येत्ययमर्थो भवति। तस्मादुत्तरपदलोपो न वक्तव्यः।

**समुदायविकारषष्ठ्या इति**। समुदायावयवसंबन्धे प्रकृतिविकारसंबन्धे च या षष्ठी तदनन्तरं यदुत्तरपदं तदन्तस्य समासस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः। **केशचूड इति**। इदमपि केशसमाहारे केशशब्दस्य वृत्तेः सिद्धम्। एवं स्वर्णविकारे स्वर्णशब्दस्य वृत्तेः स्वर्णालङ्कार इति सिद्धम्। वचनं तु केशसमाहारचूडः, स्वर्णविकारालङ्कार इत्युत्तरपदस्य श्रवणं मा भूदिति।

**भावबोधिनी**

**विमर्श**—कहीं-कहीं व्यधिकरण माना ही जाता है अतः कण्ठेकालः आदि में भी मान लेना चाहिये। इसलिये इस वार्त्तिक की आवश्यकता नहीं है। उष्ट्रः मुखम् अस्य यह विग्रह करके 'उष्ट्रमुखम्' आदि भी बनाये जा सकते हैं; क्योंकि एक प्राणी किसी दूसरे प्राणी का मुख नहीं बन सकता है। अतः सामर्थ्यवशात् सादृश्य की प्रतीति सम्भव है—उष्ट्र के मुख के सदृश मुखवाला। अतः इसके लिये भी वार्त्तिक की आवश्यकता नहीं है।

[अनु॰] * समुदाय [और अवयव के सम्बन्ध में] तथा [प्रकृति और] विकार के सम्बन्ध में होने वाली षष्ठी [षष्ठ्यन्त] का बहुव्रीहि समास और उसके उत्तरपद का लो[illegible]ना चाहिये। * उदा॰—केशानां संघातः = केशसंघातः = बालों का समूह, केशसंघातः चूडा अस्य सः [इस वि[illegible] केशचूडः [समास करने के बाद षष्ठ्यन्त के उत्तर पद 'संघात' का लोप होता है। यहाँ केशसंघात समुदाय है [illegible] अवयव है। बालों का समूहरूपी चोटीवाला] सुवर्णस्य विकारः = सुवर्णविकारः, सुवर्णविकारः अलंकारः यस्[illegible] इस विग्रह में समास करके षष्ठी के उत्तरपद = 'विकार' का लोप होने पर यह रूप बनता है—सुवर्णालङ्कारः [सोने [illegible] विकार अलंकार है जिसका, सोने का बना हुआ गहना है जिसका। यहाँ भी केशसमुदाय अर्थ में केश की और स्वर्णविकार अर्थ में स्वर्ण की कृति को मानकर समास सम्भव है। यह वचन तो केशसमाहारचूडः, सुवर्णविकारालङ्कारः ऐसा उत्तरपद न सुनाई दे, इसके लिये है।]

* प्रादिभ्यो धातुजस्योत्तरपदस्य लोपश्च वा बहुव्रीहिर्वक्तव्यः * (वा० ११)। प्रपतितं पर्णमस्य प्रपर्णः, प्रपतितपर्णः। प्रपतितं पलाशमस्य प्रपलाशः।

* नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च वक्तव्यः * (वा० १२)। अविद्यमानः पुत्रो यस्य अपुत्रः। अविद्यमानभार्यः अभार्यः।

• * सुबधिकारेऽस्तिक्षीरादीनां बहुव्रीहिर्वक्तव्यः * (दी० १८)। अस्तिक्षीरा ब्राह्मणी। अस्त्यादयो निपाताः॥

### न्यासः

**समुदायविकारषष्ठ्याश्चेति**। उत्तरपदलोपश्चेत्यनुवर्त्तते। समुदायषष्ठ्यन्ताद् विकारषष्ठ्यन्ताच्च पूर्वपदात् परं यदुत्तरपदं तत् परं पदान्तरेण समस्यते। तस्य च समुदायविकारषष्ठ्यन्तपूर्वपदस्योत्तरपदस्य लोपो भवति। केशानां संघातः केशसंघातः, स चूडास्येति केशचूड इत्यत्र समुदायसमुदायिसम्बन्धे षष्ठी। सुवर्णस्य विकारोऽलङ्कारोऽस्येत्यत्र विकारविकारिसम्बन्धे षष्ठी।

**प्रादिभ्य इत्यादि**। उत्तरपदलोपश्चेत्यनुवर्त्तते। धातोर्जातं निष्पन्नं धातुजम्। प्रादिभ्यः पूर्वपदेभ्यः परं यद्धातुजमुत्तरपदं पतितशब्दादि तदन्तस्य बहुव्रीहिर्भवति तस्य चोत्तरपदस्य वा लोपः।

**नञोऽस्त्यर्थानामित्यादि**। नञ उत्तरेषां विद्यमानादीनामित्यर्थः।

इह सुबिति वर्त्तते, अस्तिशब्दश्चायं तिङन्तः, अस्तिक्षीरेत्येवमादि न सिध्यतीति यो मन्येत तं प्रत्याह—**सुबधिकार इति**। अस्तिक्षीरादेः समास उच्यते=प्रतिपाद्यते येन तदस्तिक्षीरादेर्वचनम्। व्याख्यानं कर्त्तव्यमित्यर्थः। तत्रेदं व्याख्यानम्—'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्ति' इति विभक्तिप्रतिरूपकोऽयमस्तिशब्दो निपातः, न तिङन्तः। तेनास्तिक्षीरा ब्राह्मणीत्यादि सिद्धं भवति॥ २४॥

### पदमञ्जरी

**प्रादिभ्यो धातुजस्येति**। इदं न वक्तव्यमेव, प्रादयो हि ससाधनां क्रियां प्राहुः—यथा निष्कौशाम्बिः, निर्वाराणसिः, प्राचार्य इति। एवं नञोऽस्त्यर्थानामित्येतदपि।

**सुबधिकार इति**। अस्तीति तिङन्तमिति मत्वा वचनं निपातत्वात्सिद्धम्। उपसर्गविभक्तिप्रतिरूपका निपाताः, स्वरादिषु चास्तिशब्दः पठ्यते। इह किं सब्रह्मचारीति? बहुव्रीहिरयम्। के सब्रह्मचारिणस्तव, किं स ब्रह्मचारी त्वमिति पूर्वपदप्रकृतिस्वरो ह्यत्रेष्यते, तत्र कठसब्रह्मचार्यहमिति सम्भावितं प्रतिवचनम्। यत्तु कठोऽहमिति न तत्साक्षात्प्रतिवचनम्, किं तर्हि? आर्थिकम्। अहं तावत् कठ इत्युक्ते गम्यत एतन्नतु तेऽपि कठा इति। कठस्य हि कठा एव सब्रह्मचारिणो भवन्ति, नान्ये। समाने ब्रह्मणि व्रतचार्येव सब्रह्मचारी भवति। के सब्रह्मचारिणस्तवेति वाक्येन तु प्रश्ने कठा इति प्रतिवचनम्। समासेन तु प्रश्ने कठा इति प्रतिवचनं कदाचिदपि न भवति; वर्तिपदार्थानामुपसर्जनत्वात्, किं सब्रह्मचारीति समासेन सब्रह्मचारिणामभिधानात्। इह द्वौ द्रोणावर्द्धद्रोणाश्चार्द्धतृतीया द्रोणा इति? अर्द्धस्तृतीयो येषामिति बहुव्रीहावुद्भूतावयवभेदः समुदायः समासार्थं इति बहुवचनं द्रोणशब्द[illegible]द्रोणयोरर्द्धद्रोणेऽपि लक्षणया वर्त्तत इति सामानाधिकरण्यं च भवति॥ २४॥

### [illegible]बोधिनी

✽ प्र आदि से परे धातुजन्य शब्द [illegible] बहुव्रीहि समास होता है और उत्तरपद का वैकल्पिक लोप होता है—ऐसा कहना चाहिये।✽ उदा०—प्रपतितं [illegible] अस्य सः [इस विग्रह में प्र शब्द के साथ पत धातुजन्य पतित शब्द का समास होता है और उसके उत्तरपद का विकल्प से लोप भी होता है] (१) प्रपर्णः- [उत्तरपद = पतित का लोप न होने पर] (२) प्रपतितपर्णः [जिसके पत्ते अच्छी तरह गिर चुके हैं ऐसा वृक्ष] प्रपतितं पलाशम् अस्य [इस विग्रह में समास

## ४४८. संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ॥ २५ ॥ (६४३)

**संख्येये वा संख्या वर्त्तते तया सहाव्ययासन्नादूराधिकसंख्याः समस्यन्ते, बहुव्रीहिश्च समासो भवति।**

**न्यासः**

**संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये ॥ उपदशा इति।** 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् समासान्तः, टिलोपश्च। दशानां समीपे ये वर्त्तन्ते ते तथोच्यन्ते, ते पुनर्नवैकादश वा। पूर्वपदार्थप्रधानोऽयं समासः। यद्येवम्, कस्तर्ह्यव्ययीभावस्यास्य च विषयविभागः, सोऽप्यव्ययीभावोऽव्ययस्य समीपे वर्त्तमानस्य 'अव्ययं विभक्ति' इत्यादिना पूर्वपदार्थप्रधान एव विधीयते ? उच्यते—यदा समीपिनः प्राधान्यं तदा बहुव्रीहिः, यदा तु समीपस्य प्राधान्यं तदाव्ययीभावः—इत्येष विषयविभागः। **उपविंशा इति।** पूर्ववड् डच्। 'ति विंशतेर्डिति' इति टिलोपः। **आसन्नदशा इति।** दशानामासन्ना आसन्नदशाः। ते च पूर्ववन्नवैकादश वा। **अदूरदशा इति।** दशानामदूरा ये, ते पुनः पूर्वोक्ता एव। **अधिकदशा इति।** दशानामधिकाः, ते पुनरेकादशादयः। **द्वित्रा**

**पदमञ्जरी**

**संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये ॥ उपदशा इति।** 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डचि टिलोपः, दशानां समीपे ये भवन्ति त उच्यन्ते, ते पुनर्नवैकादश वा। पूर्वपदार्थप्रधानोऽयं समासः। उपशब्दोऽयमाराच्छब्देनैकार्थत्वात्समीपे समीपिनि च वर्तते। तत्र समीपिप्राधान्येऽयं बहुव्रीहिः। सामीप्यप्राधान्ये 'अव्ययं विभक्तिसमीप' इत्यव्ययीभावः। **उपदशं दन्तोष्ठा इति।** अत्र धर्मधर्मिणोरभेदोपचारात्सामानाधिकरण्यम्। **उपविंशा इति।** 'ति विंशतेर्डिति' इति लोपः। आसन्ना दशानामासन्नदशाः, तेऽपि नवैकादश वा। अधिकदशास्त्वेकादश। द्वौ वा त्रयो वा द्वित्राः, वार्थेऽयं समासः। वार्थश्च यदि विकल्पः स्यात्, ततो यदि द्वौ भवतस्तदा बहुवचनं न स्यात्। तस्मात्संशयोऽत्र वार्थः, स चानियतसंख्याविमर्शः, तत्र तु त्रयोऽपि सर्वदा परिस्फुरन्तीति तदपेक्षं बहुवचनम्। अथ वा—पञ्चैवात्र सर्वदा भवन्ति, कथम् ? विमर्शज्ञानमुभयपक्षालम्बि एकं च तत्र, यथा—द्वौ वा त्रयो वा पुरुषा आनीयन्तामित्यत्र पुरुषशब्दे तिङन्ते च

**भावबोधिनी**

करने पर पतित का वैकल्पिक लोप होने पर] (१) प्रपलाशः। [लोप न होने पर] (२) प्रपतितपलाशः [जिसके नवीन पल्लव अच्छी प्रकार गिर चुके हैं ऐसा वृक्ष आदि] * नञ् से उत्तरवर्ती अस्त्यर्थक शब्दों का बहुव्रीहि समास कहना चाहिये। * उदा०—अविद्यमानः पुत्रः यस्य सः [इस विग्रह में समास करने पर उत्तरपद 'विद्यमान' का लोप हो जाने पर] (१) अपुत्रः। [उत्तरपद का लोप न करने पर] अविद्यमानपुत्रः [अविद्यमान है पुत्र जिसका]। अभार्यः, अविद्यमानभार्यः [अविद्यमाना भार्या यस्य सः यह विग्रह है। समास और वैकल्पिक उत्तर पद का लोप करके ह्रस्व करने पर (१) अभार्यः और लोप न होने पर (२) अविद्यमानभार्यः। जिसकी भार्या विद्यमान नहीं है।]

*सुप्-इस अधिकार में 'अस्तिक्षीरा' आदि शब्दों का बहुव्रीहि कहना चाहिये।* अस्ति क्षीरा ब्राह्मणी [अस्ति क्षीरं यस्याः सा यह विग्रह है। 'अस्ति' यह विभक्ति-प्रतिरूपक अस्ति शब्द है तिङन्त नहीं। यहीं लिखते हैं —] अस्ति आदि निपात हैं।

विमर्श—महाभाष्य में उपर्युक्त वर्त्तिकों का [illegible] करके सूत्र द्वारा ही समास उपपादित किया गया है ॥ २४ ॥

संख्येय [=पदार्थ] में वर्तमान जो संख्या, उसके [illegible] य, आसन्न, अदूर, अधिक और संख्या—इनका समास होता है, और बहुव्रीहि समास होता है। उदा०—[illegible] के साथ समास -उपदशाः [दशानां समीपे ये सन्ति ते - इस विग्रह में प्रस्तुत सूत्र से समास होता है। यहाँ उप-यह अव्यय समीपी=वस्तुविशेष के अर्थ में है। सामीप्य अर्थ में अव्ययीभाव होता है। उपदशाः का अर्थ है नौ अथवा ग्यारह। समास करने के बाद 'बहुव्रीहौ संख्येये डजबहुगणात्' (पा० सू० ५।४।७३) से डच्=अ, और टि=अन् का लोप करने पर यह रूप बना है] आसन्नविंशाः

**अव्यय—उपदशाः । उपविंशाः । आसन्नदशाः । आसन्नविंशाः । अदूरदशाः । अदूरविंशाः । अधिकदशाः । अधिकविंशाः । संख्या—द्वित्राः । त्रिचतुराः । द्विदशाः ।**

**न्यासः**

**इति ।** द्वौ वा त्रयो वेति विग्रहः । वार्थे चायं समासः । वार्थश्चायं संशयः, न विकल्पः । यदि वार्थ इह विकल्प आश्रीयते ततो यदा द्वौ भवतः, तदा बहुवचनं न स्यात् । तस्मात् संशयोऽत्र वार्थः । संशयिते वार्थे बहुवचनं भवति, यथा—कति भवतः पुत्राः । उक्तञ्च भाष्ये—'अविज्ञातेऽर्थे बहुवचनं प्रयोक्तव्यम्' इति, तत् कथम् ? संशयज्ञानस्योभयपक्षपरामर्शित्वेन बह्वर्थविषयत्वात् । उभयपक्षापरामर्शत्वेन संशय एव न स्यात् । अथ वा—पञ्चैवात्र सदा भवन्ति, न कदाचिद् द्वौ त्रयो वेति । तथा च 'द्वित्रा' इत्युक्ते पञ्चैवेति गम्यते । सैषा पञ्चाधिष्ठाना वागिति ततो युक्तं बहुवचनम् । यदि तर्हि वार्थेऽयं समासः, तस्यार्थस्यान्यपदार्थत्वात् पूर्वेणैव सिद्धः समासः ? न सिध्यति, मत्वर्थे हि पूर्वयोगः; अमत्वर्थार्थोऽयं योगः । अथ वा—प्रथमार्थं वर्णयित्वाऽन्यत्र विभक्त्यर्थे पूर्वेण समासः । प्रथमार्थमिदं वचनम् । **त्रिचतुरा इति ।** 'चतुरोऽच्प्रकरणे चतुरस्त्र्युपाभ्यामुपसंख्यानम्' इत्यच् समासान्तः । **द्विदशा इति ।** द्विर्दशेति विग्रहः । सुजर्थेऽयं समासः । दशसम्बन्धिनी याऽऽवृत्तिर्दशशब्देन लक्ष्यमाणा सा द्विशब्देनाख्यायते । सुजर्थश्च प्रत्ययार्थो नान्यपदार्थ इति पूर्वेण न सिद्धयति । अथ वा—

**पदमञ्जरी**

बहुवचनमेव भवति, कस्य हेतोः ? मिश्रितेषु तयोर्वृत्तेः । एवं द्वित्रिपदमपि मिश्रितेषु वर्तत इति सैषा पञ्चाधिष्ठाना वाक्, अतो बहुवचनमेव भवति । आनयनादिकार्यं तु द्वयोस्त्रयाणां वा यथारुचि भवति । वाक्यवदेव समासस्य चैषा हि आपत्, अतस्तेषु मिश्रितेषु वृत्तिः तेन द्वौ वा पुरुषा आनीयन्तामिति वाक्ये द्विशब्दाद् द्विवचनमेव भवति । **त्रिचतुरा इति ।** 'चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम्' (म० भा०) इत्यच् । **द्विदशा इति ।** अत्र द्विशब्देन दशत्वावृत्तिगता द्वित्वसंख्या प्रतिपाद्यते, न दशत्वसंख्या; एकत्वात् । नापि संख्यायुक्ताः, बहुत्वात् । तत्र वाक्ये सुचमन्तरेणाभ्यावृत्तेरनवगमात्सुच् भवति, ततश्चास्वपदविग्रहः क्रियते—द्विर्दश द्विदशा इति । वृत्तौ तु स्वभावादेव सुचमन्तरेणाभ्यावृत्तिसंख्यां द्विशब्द एवाहेति संख्यावाचित्वात्समस्यते ।

नन्वत्र वार्थः सुजर्थश्चान्यपदार्थे इति पूर्वेणैव सिद्धम्, तन्न; सुचः स्वार्थिकत्वात्तदर्थोऽपि पदार्थ [illegible] मत्वर्थे पूर्वयोगः; अमत्वर्थार्थोऽयमारम्भः । ननु प्राप्तोदकादि प्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु यथाभिधानं भवतीत्युक्तम्, एवं तर्हि प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः । अथ प्रथमार्थं वर्जयित्वेत्येतदनादृत्य यथाभिधानं भवतीत्युच्यते, एवं तर्हि तस्यैव प्रपञ्चः संख्यायाः समासः, अव्ययानां तु चतुर्दशादिभिः संख्येय-

**भावबोधिनी**

[बीस के समीप = उन्नीस या इक्कीस । विंशतेः आसन्नाः ये सन्ति ते—इस विग्रह में समास के बाद पूर्व के समान डच् = अ प्रत्यय और 'ति विंशतेर्डिति' (पा० सू० ६।४।१४२) से ति का लोप करने पर रूप बनता है ।] अदूरदशाः [दशानाम् 'दूरे ये सन्ति ते । प्रक्रिया पूर्ववत् है ।] अदूरविंशाः [विंशतेः अदूरे ये सन्ति ते । प्रक्रिया पूर्ववत् है ।] अधिकदशाः [दशानाम् अधिकाः ये ते । दश से अधिक जो [illegible]-बारह आदि] अधिकविंशाः [विंशतेः अधिकाः ये ते । बीस से अधिक जो एक्कीस-बाईस आदि] (२) संख्या [illegible] साथ संख्येयवाची के समास का] उदा०—द्वित्राः [द्वौ वा त्रयो वा] यहाँ 'वा' के अर्थ में समास है और [illegible] 'संशय' है । इससे अनिश्चित संख्या का ज्ञान होता है । इसमें भी डच् = अ प्रत्यय और टिलोप के बा[illegible] बहुवचन का रूप है ।] त्रिचतुराः [त्रयो वा चत्वारो वा—यह विग्रह है । समास होता है । यहां 'वा' = स[illegible] है । 'डच् अथवा अच् प्रत्यय करके प्रथमा बहुवचन का रूप है । तीन अथवा चार] द्विदशाः [द्विरावृत्ताः दश—यह विग्रह है । दो बार आवृत्ति किये गये दश = बीस यह अर्थ है । समास के कारण 'सुच्' प्रत्यय का श्रवण नहीं होता है । डच् प्रत्यय आदि प्रक्रिया पूर्ववत् ही होती है ।]

संख्ययेति किम् ? पञ्च ब्राह्मणाः। अव्ययासन्नादूराधिकसंख्या इति किम् ? ब्राह्मणाः पञ्च। संख्येये इति किम् ? अधिका विंशतिर्गवाम् ॥

**४४९. दिङ्नामान्यन्तराले ॥ २६ ॥ (८४५)**

दिशां नामानि = दिङ्नामानि। दिङ्नामानि सुबन्तानि अन्तराले वाच्ये समस्यन्ते, बहुव्रीहिश्च समासो भवति। दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं दक्षिणपूर्वा दिक्। पूर्वोत्तरा। उत्तरपश्चिमा। पश्चिमदक्षिणा ॥

**न्यासः**

प्रथमार्थेऽपि चायम्, अमत्वर्थेऽपि; अतः पूर्वेण न सिद्ध्यति। समास एव सुजर्थं गमयितुं समर्थ इति वृत्तौ सुज् न प्रयुज्यते।

**अधिका विंशतिर्गवामिति**। विंशतिशब्दोऽत्र संख्यान एव वर्त्तते, न तु संख्येये द्रव्ये ॥ २५ ॥

**दिङ्नामान्यन्तराले ॥ दक्षिणपूर्वेति**। प्रथमार्थेऽप्ययं समास इष्यते, अमत्वर्थेऽपि तत्पूर्वेण न सिध्यतीत्ययममत्वर्थ आरम्भः, प्रतिपदविधानार्थश्च। 'विभाषा दिक्समासे' इत्यत्र दिशां यः समासः प्रतिपदविहितस्तस्य ग्रहणमिष्यते। प्रतिपदविहितश्च समासो दिशामेव भवति यद्ययं योग आरभ्यते, नान्यथा। **सर्वनाम्नो वृत्तिमात्रे**

**पदमञ्जरी**

वाचिभिः समासो विधेय एव। केचित्तु ये विंशत्यादयः संख्याने वर्त्तन्ते तैः पूर्वेणैव सिद्धम्—अधिका विंशतिर्येषां त इमेऽधिकविंशाः, विंशतिसंख्या आसन्ना येषां ते आसन्नविंशा इति, तत्र 'सर्वनामसंख्ययोः' (म० भा० २.२.३५ वा० १) इति विंशतिशब्दस्य पूर्वनिपातः प्राप्नोति, तस्माद्विंशत्याद्यर्थमप्यव्ययादीनां ग्रहणं कर्तव्यमेव ॥ २५ ॥

**दिङ्नामान्यन्तराले ॥ दक्षिणपूर्वेति**। अन्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धे वचनमिदं त्वमत्वर्थेपि यथा स्यात्प्रथमार्थेपि यथा स्याद्वैयधिकरण्येऽपि यथा स्यात्। किं च 'विभाषा दिक्समासे बहुव्रीहौ' इत्यत्र दिशां प्रतिपदोक्तस्य बहुव्रीहेर्ग्रहणं तथा स्यात्, या पूर्वा सोत्तरास्योन्मुग्धस्य तस्मै उत्तरपूर्वाय देहीत्यत्र मा

**भावबोधिनी**

संख्या के साथ—यह किस लिये है ? पञ्च ब्राह्मणाः [पाँच ब्राह्मण। यहाँ ब्राह्मण संख्यावाची नहीं है। अतः यह समास नहीं होता है।]

अव्यय, आसन्न, अदूर, अधिक और संख्या—इनका ग्रहण क्यों है ? ब्राह्मणाः पञ्च [यहाँ ब्राह्मण, सूत्रोक्त किसी में नहीं आता है। अतः समास नहीं होता है।] संख्येय अर्थ में हो—इसका क्या प्रयोजन है ? अधिका विंशतिः गवाम् [गायों की बीस संख्या अधिक है। यहाँ संख्येय द्रव्य अर्थ नहीं अपि तु संख्या अर्थ है। अतः समास नहीं होता है।] ॥ २५ ॥

दिशाओं के नाम = दिङ्नाम, दिशाओं के नामवाचक सुबन्त शब्दों का, अन्तराल = मध्य भाग वाच्य रहने पर, समास होता है, और वह बहुव्रीहि समास होता है। सूत्र द्वारा०—दक्षिणस्याश्च पूर्वस्याश्च दिशोः यत् अन्तरालम्—सा दक्षिणपूर्वा दिक् [दक्षिण और पूरब की दिशाओं [illegible] भागवाली दिशा। प्रस्तुत सूत्र से समास करके विभक्ति का लोप कर देने पर दक्षिणापूर्वा बनता है 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इस नियम से पूर्वपद का पुम्वद्भाव = ह्रस्व करने पर 'दक्षिणपूर्वा' रूप बनता है।] [illegible] समास [illegible]मा [उत्तरस्याश्च पश्चिमायाश्च दिशोः यद् अन्तरालम्—इस विग्रह में समास के बाद पूर्ववत् प्रक्रिया करने [illegible]रूप बनता है। उत्तर दिशा और पश्चिम दिशा की मध्य भागवाली दिशा] पश्चिमदक्षिणा [पश्चिमायाश्च दक्षिणस्याश्च दिशोर्यद् अन्तरालम्—इस विग्रह में समास होता है। पूर्ववत् प्रक्रिया है। दक्षिण दिशा और पश्चिम दिशा की मध्यभागवाली दिशा]।

* सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः * (म० भा०)। नामग्रहणं रूढ्यर्थम्, इह मा भूत्—ऐन्द्रयाश्च कौबेर्याश्च दिशोर्यदन्तरालमिति ॥

**४५०. तत्र तेनेदमिति सरूपे ॥ २७ ॥ (८४६)**

'तत्र' इति सप्तम्यन्तं गृह्यते। 'तेन' इति तृतीयान्तम्। सरूपग्रहणं प्रत्येकमभिसम्बध्यते। तत्रेति सप्तम्यन्ते सरूपे पदे तेनेति च तृतीयान्ते इदमित्येतस्मिन्नर्थे समस्येते, बहुव्रीहिश्च समासो भवति। इतिकरणश्चेह विवक्षार्थो लौकिकमर्थमनुसारयति। ततो ग्रहणं प्रहरणं कर्मव्यतीहारो युद्धं च समासार्थं इति सर्व-

**न्यासः**

**पुंवद्भाव इति।** स पुनः 'स्त्रियाः पुंवत्' इति योगविभागेन सिध्यतीति वेदितव्यम्। **नामग्रहणं रूढ्यर्थमिति।** लोके ये रूढा दिक्शब्दास्तत्परिग्रहार्थमित्यर्थः। **ऐन्द्रयाश्च कौबेर्याश्चेति।** नेमौ रूढिशब्दौ, किं तर्हि ? यौगिकौ—इन्द्रस्येयमैन्द्री, कुबेरस्येयं कौबेरी। 'तस्येदम्' इत्यण् ॥ २६ ॥

**तत्र तेनेदमिति सरूपे। इतिकरण इत्यादि।** समासादभिमतेऽर्थे यदि लौकिकी विवक्षा भवति, एवं समासोऽयमिष्यते तस्माद्विवक्षार्थमितिकरणोऽत्र क्रियते। विवक्षार्थं इतिकरणो यमर्थं प्रतिपादयति तं दर्शयितुमाह—**लौकिकमर्थमनुसारयतीति।** अनुगमयति प्रबोधयतीति यावत्। स पुनर्लौकिकोऽर्थो ग्रहणादिरिति दर्शयन्नाह—**तत इत्यादि।** यस्मादितिकरणो लौकिकमर्थमनुसारयति ततो हेतोर्ग्रहणादिरिति सर्वं लभ्यते।

**पदमञ्जरी**

भूदित्येवमर्थः। अतस्तदर्थोऽप्ययमारम्भः। कबभावार्थं च 'शेषाद्विभाषा' इत्यत्र शेषाधिकारविहितस्य बहुव्रीहेर्ग्रहणम्। 'अनेकमन्यपदार्थे' इत्यत्रैव शेषग्रहणमनुवर्त्तते, तेनात्र कप्न भवति। 'सर्वनाम्नो वृत्तिमात्रे' (म० भा०) इति मात्रग्रहणाद् 'विभाषा दिक्समासे' इति यदा सर्वनामसंज्ञा नास्ति तदापि भवति ॥ २६ ॥

**तत्र तेनेदमिति सरूपे ॥ इतिकरण इत्यादि।** ततः समासाल्लौकिकस्य यदि विवक्षा भवति—एवमर्थं समासो भवति, नान्यार्थमित्येवमर्थं सूचयितुमितिशब्द इत्यर्थः, तेन किं सिद्धं भवतीत्याह—**लौकिकमर्थमिति।** कः पुनरसौ लौकिकोऽर्थ इत्याह—**ततश्चेत्यादि।** एतदेव विवृणोति—**यत्तत्रेत्यादि।** गृह्यतेऽस्मिन्[illegible] ग्रहणम्=केशादि, प्रहरणम्=दण्डादि, कर्मव्यतीहारः=परस्परग्रहणं परस्परप्रहरणं च। स [illegible]त। तिष्ठद्गुप्रभृतिषु पाठेनाव्ययत्वात्। नन्वत्र युद्धस्यान्यपदार्थत्वात् पूर्वेणैव सिद्धम्, न; वैयधि[illegible]ण्यादेकशेषप्रसङ्गाच्च। तथा हि—ग्रहणप्रहरणे च केशादीनां सहविवक्षितत्वादेकविभक्तित्वाच्चैकशेषः

**भावबोधिनी**

* वृत्तिमात्र = हर वृत्ति में सर्वनाम स्त्री शब्दों का पुंवद्भाव कहना चाहिये। * [इस वार्त्तिक के द्वारा पूर्वपद के स्त्रीलिंग का पुंल्लिग के समान रूप हो जाता है।]

[सूत्र में] नाम—इसका उल्लेख रूढ दिशावाचकों का ग्रहण करने के लिये है, यहाँ न हो—ऐन्द्रयाश्च कौबेर्याश्च दिशोः यत् अन्तरालम् [ऐन्द्री = पूर्व दिशा और कौबेरी उत्तर दिशा का अन्तराल। यहाँ यौगिक शब्द है रूढ़ नहीं है। अतः समास नहीं होता है।] ॥ २६ ॥

'तत्र' इससे सप्तम्यन्त शब्दरूप का [illegible] है और 'तेन' इससे तृतीयान्त शब्दरूप का। सरूपग्रहण का प्रत्येक के साथ सम्बन्ध होता है। 'तत्र [illegible]म्यन्त सरूप [समानरूपवाले] पदों का और 'तेन'—इससे तृतीयान्त सरूप पदों का 'इदम् = यह' इस [illegible]स होता है, और वह बहुव्रीहि समास होता है। इस सूत्र में 'इति' शब्द विवक्षार्थ है, यह लौकिक अर्थ का[illegible]कराता है। इससे ग्रहण' 'प्रहरण' 'कर्मव्यतीहार' और 'युद्ध'—यह समास का अर्थ है—यह सब 'इति' शब्द के प्रयोग के बल से प्राप्त होता है। जो तत्र = सप्तम्यन्त से निर्दिष्ट है वह यदि 'ग्रहण' होता है, और 'तेन' = तृतीयान्त से निर्दिष्ट है वह यदि 'प्रहरण' होता है, जो 'इदम्' इससे निर्दिष्ट है वह यदि युद्ध होता है। उदा०—केशेषु केशेषु च गृहीत्वा इदं युद्धं प्रवृत्तम्—केशाकेशि [एक दूसरे के केशों को पकड़

मितिकरणाल्लभ्यते। यत्तत्रेति निर्दिष्टं ग्रहणं चेत्तद्भवति, यत्तेनेति निर्दिष्टं प्रहरणं चेत्तद्भवति, यदिदमिति निर्दिष्टं युद्धं चेत्तद्भवति। केशेषुकेशेषु च गृहीत्वा इदं युद्धं वृत्तं केशाकेशि। कचाकचि। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं वृत्तं दण्डादण्डि। मुसलामुसलि। 'इच् कर्मव्यतीहारे' [५।४।१२७] इति इच् समासान्तः, स चाव्ययम्। 'अन्येषामपि दृश्यते' [६।३।१३५] इति पूर्वपदस्य दीर्घत्वम्।

सरूपग्रहणं किम्? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं वृत्तम्॥

## ४५१. तेन सहेति तुल्ययोगे॥ २८॥ (८४८)

'सह' इत्येतच्छब्दरूपं तुल्ययोगे वर्तमानं 'तेन' इति तृतीयान्तेन सह समस्यते, बहुव्रीहिश्च समासो भवति। सह पुत्रेणागतः सपुत्रः। सच्छात्रः। सकर्मकरः।

### न्यासः

तत्तत्रेत्यादिनाऽनन्तरोक्तमर्थं विस्पष्टीकरोति। गृह्यतेऽस्मिन्निति ग्रहणम्=केशादि। प्रहरन्त्यस्मिन्निति प्रहरणम्=मुसलादि। कर्मव्यतीहार इति परस्परग्रहणम्, परस्परप्रहरणञ्चेतिकरणादेव लभ्यत इति वेदितव्यम्। स्वरूपविधिरत्रेतिकरणादेव न भवतीति वेदितव्यम्। दण्डैश्च दण्डैश्चेति करणे तृतीया। स चाव्ययमिति। तिष्ठद्गुप्रभृतिषु पाठादव्ययीभावः; 'अव्ययीभावश्च' इत्यव्ययसंज्ञाविधानात्। सरूपमिति। 'समानस्य ज्योतिर्जनपद' इत्यादिना सभावः॥ २७॥

तेन सहेति तुल्ययोगे॥ तुल्ययोगे वर्तमानमित्यादि। तुल्ययोगः=समानसम्बन्धः। तं यदा सहशब्दो

### पदमञ्जरी

प्राप्तोऽनेन वचनेन बाध्यते। कथम्? न समूहविवक्षायां बहुव्रीहिसंज्ञा, समूहश्चैकशेषे नोपपद्यते। ननु चासत्यस्मिन्पूर्वयोगेनैव परत्वादेकशेषो बाधिष्यते? न शक्यते बाधितुम्; अन्तरङ्ग एकशेषः बहुव्रीहिश्चान्यपदार्थापेक्षत्वाद्बहिरङ्गः॥ २७॥

तेन सहेति तुल्ययोगे॥ तुल्ययोग इति। तुल्ययोगः=समानसम्बन्धः। सपुत्र इति। 'वोपसर्जनस्य'

### भावबोधिनी

जो युद्ध हुआ हो वह] कचाकचि [कचेपु कचेपु च गृहीत्वा इदं युद्धं प्रवृत्तम्। एक दूसरे के बालों को पकड़ [illegible] जो युद्ध हुआ हो] दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तम् [दोनों ओर से डंडों से प्रहार करके जो युद्ध हुआ हो] [illegible] [मुसलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम्। दोनों ओर से मुसलों से प्रहार करके जो युद्ध हुआ हो।] यहाँ [illegible] कर्मव्यतीहारे' (पा० सू० ५।४।१२७) इससे इच् समासान्त प्रत्यय होता है, वह अव्यय हो जाता है। 'अन्येषामपि दृश्यते' (पा० सू० ६।३।१३५) इससे पूर्वपद का दीर्घ होता है;

सरूपग्रहण का क्या फल है? हलैश्च मुसलैश्च प्रहृत्य इदं युद्धं प्रवृत्तम्। [हलों और मुसलों से परस्पर प्रहार करके यह युद्ध हुआ। यहाँ हल और मूसल समानरूपवाले नहीं हैं। अतः समास नहीं होता है।]

**विमर्श**—'तत्र तेन इदं सरूपे—' इस सूत्र में 'तत्र' यह सप्तम्यन्त का और 'तेन' यह तृतीयान्त शब्द का बोधक है। 'सरूप' कहने से इनका दो बार प्रयोग होना सिद्ध [illegible] 'इदम्' यह अर्थ का बोधक है। 'इति' शब्द विवक्षित अर्थ का बोध कराने के लिये है। काशिकाकार के अनुसार सूत्र द्वा[illegible] के साथ 'ग्रहण' और तृतीयान्त के साथ 'प्रहरण' इनकी प्रतीति होती है और कर्मव्यतीहार=एक दूसरे का [illegible] युद्ध की प्रतीति भी होती है।

'ग्रहण' शब्द में अधिकरण अर्थ में ल्युट् है 'गृह्य[illegible]सन्न, अदूर केशादि। इसी प्रकार 'प्रहरति अस्मिन् इति 'प्रहरणम् = मुसलादि' यह अर्थ है। यहाँ ध्यान देने की बात[illegible] समास भाष्य में इसके अर्थ को सीमित नहीं किया गया है। परन्तु उत्तरवर्ती व्याख्याकारों ने 'प्रहरण' और 'ग्रहण' तक सीमित कर दिया है॥ २७॥

'सह' यह शब्दरूप जो 'तुल्ययोग = समान सम्बन्ध अर्थ में वर्तमान = प्रयुक्त है, उसका 'तेन' = इस तृतीयान्त के साथ समास होता है और वह 'बहुव्रीहि' होता है। उदा०-सह पुत्रेण आगतः=सपुत्रेण आगतः [पुत्र के साथ

तुल्ययोग इति किम् ? 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।'

विद्यमानैरेव दशभिः पुत्रैर्भारं वहतीत्यर्थः । कथं सकर्मकः, सलोमकः, सपक्षक इति ? न ह्यत्र तुल्ययोगो गम्यते, किं तर्हि ? विद्यमानता । प्रायिकं 'तुल्ययोगे' इति विशेषणम्, अन्यत्रापि समासो दृश्यते ॥

**न्यासः**

द्योतयति तदासौ तत्र वर्त्तते । सपुत्र इति । सह पुत्रेणेति विग्रहः कर्त्तव्यः । 'सहयुक्तेऽप्रधाने' इति तृतीया । 'वोपसर्जनस्य' इति सहस्य सभावः । अत्र सपुत्र आगतो देवदत्त इति देवदत्तस्य पुत्रस्य चागमनेन तुल्यसम्बन्धः सहशब्देन द्योत्यते । अथ कथं पुनः सकर्मक इत्यादौ स्यात् ? कथञ्च न स्यादित्याह—**न ह्यत्रेत्यादि । प्रायिकमिति ।** असर्वविषयमित्यर्थः । कुतः पुनः प्रायिकत्वमस्य लभ्यते ? इतिकरणात् । ननु चान्यदितिकरणस्य प्रयोजनमस्ति, किं तत् ? सहशब्दः स्वरूपपदार्थको यथा गम्येत; अन्यथा ह्यर्थनिर्देशोऽयं विज्ञायेत । ततश्च साकं सार्द्धमित्यादयोऽपि समस्येरन् ? नैवं ब्रूमः—इह सूत्रे य इतिकरणस्ततो लभ्यत इति, किं तर्हि ? पूर्वसूत्राद् योऽनुवर्त्तते तत इति ॥ २८ ॥

**पदमञ्जरी**

इति सभावः । नन्वत्र पिता प्रधानमन्यपदार्थोऽभिधेयः, सत्यम्; व्यधिकरणयोः प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः, कबभावार्थं च । उक्तश्चात्र कबभावः । **दशभिः पुत्रैरिति ।** इत्थम्भूतेत्यर्थः । **प्रायिकमिति ।** ज्ञापकात्, यदयं 'विभाषा साकाङ्क्षे' 'छन्दस्यनेकमपि साकाङ्क्षम्', 'पूर्वादिनिः', 'सपूर्वाच्च', 'सपूर्वायाः प्रथमायाः', 'विभाषा सपूर्वस्य' इति विद्यमानार्थेऽपि समासं निर्दिशति, तज्ज्ञापयति—प्रायिकं विशेषणमिति ॥ २८ ॥

**भावबोधिनी**

अ[illegible] 'सहयुक्तेऽप्रधाने' (पा० सू० २।३।१९) से तृतीया विभक्ति होती है । प्रस्तुत सूत्र से समास विभक्तिलोप कर[illegible] 'वोपसर्जनस्य' (पा० सू० ६।३।८२) से 'सह' का 'स' आदेश हो जाता है । यहाँ आगमन क्रिया के साथ [illegible] पुत्र का एक ही प्रकार का सम्बन्ध है । अतः समास होता है । 'स' आदेश वैकल्पिक है । अतः पक्ष में 'सहपुत्रः' यह दूसरा रूप भी होता है ।] सच्छात्रः [छात्रेण सह । छात्र के साथ गुरु आदि आये] । सकर्मकरः [कर्मकारेण सह—यह विग्रह है ।]

तुल्ययोग = समान सम्बन्ध रहने पर ही—इसका क्या फल है ? 'सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ।।' यहाँ सह = विद्यमान ही दशों पुत्रों के साथ गधी बोझा ढोती है । [अतः समास नहीं होता है ।] सकर्मकः, समलोकः, सपक्षकः—इनमें कैसे समास होता है, क्योंकि इनमें तुल्ययोग प्रतीत नहीं होता है; तो क्या अर्थ है ? विद्यमान होना । [अर्थात् कर्म का विद्यमान होना, लोगों का विद्यमान होना और पक्ष का विद्यमान होना । अतः यहाँ समान सम्बन्ध = तुल्ययोग न होने से समास नहीं होन[illegible]ये ?] 'तुल्ययोग में' = समान सम्बन्ध में --यह विशेषण प्रायिक है, अन्यत्र भी समास [होता है, ऐसा] देखा ज[illegible]

**विमर्श**—प्रस्तुत सूत्र में 'तुल्य[illegible]शेषण सर्वत्र लागू नहीं होता है—इसमें प्रमाण है 'इति' का प्रयोग । 'सह इति' यहाँ 'इति' के प्रयोग से[illegible] स्वरूप बोधक हो जाता है । इसके अतिरिक्त 'विभाषा सपूर्वस्य' (पा० सू० ४।१।३७) 'सपूर्वायाः प्रथमाया[illegible]पा० सू० ८।१।२६) 'पूर्वादिनिः' (पा० सू० ५।२।८६) 'सपूर्वाच्च' (पा० सू० ५।२।८७) आदि सूत्रों में पाणिनिकृत 'विद्यमान' अर्थवाची 'सह' के साथ समास देखा गया है । अतः इन निर्देशों के द्वारा अन्यत्र भी समास होना संभव है । यहाँ बहुव्रीहि समास का विवेचन समास होता है ॥ २८ ॥

## ४५२. चार्थे द्वन्द्वः ॥ २९ ॥ (६०१)

'अनेकम्' इति वर्तते। अनेकं सुबन्तं चार्थे वर्त्तमानं समस्यते, द्वन्द्वसंज्ञश्च समासो भवति। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। तत्र समुच्चयान्वाचययोरसामर्थ्यान्नास्ति समासः। इतरेतरयोगे समाहारे च समासो विधीयते। प्लक्षश्च न्यग्रोधश्च प्लक्षन्यग्रोधौ। धवश्च खदिरश्च पलाशश्च धवखदिरपलाशाः। वाक्च त्वक्च वाक्त्वचम्। वाग्दृषदम्।

द्वन्द्वप्रदेशाः—'द्वन्द्वे च' [१।१।३१] इत्येवमादयः॥

### न्यासः

चार्थे द्वन्द्वः॥ कः पुनरयं चार्थो नामेत्याह—समुच्चयाऽन्वाचयेत्यादि। समुच्चितिः=समुच्चयः। साधनमेकं क्रियां वा प्रति क्रियासाधनानामात्मरूपभेदेन चीयमानताऽनेकत्वमिति यावत्। स पुनस्तुल्यबलानामनियतक्रमयौगपद्यानामेव भवति, यथा—गामश्वं पुरुषं पशुश्चाहरहर्नयमानो वैवस्वतस्तृप्तिं नोपयातीति। अन्वाचयोऽपि यत्रैकस्य प्राधान्यम्, इतरस्याप्रधान्यम्, तदनुरोधेनान्वाचीयमानता, यथा—भो वटो भिक्षामट गाञ्चानयेति। इतरेतरयोगः समाहारश्च समुच्चयस्यैव प्रभेदः। स एव हि परस्परापेक्षाणामवयवभेदानुगत इतरेतरयोगः, यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्यं कर्त्तव्यम्। उभावपि तत्कार्यं प्रति परस्परापेक्षौ। तथा हि तदेकस्याप्यभावे न क्रियते। अवयवप्रधानश्चायमिति द्वित्वाद् द्विवचनं भवति। परस्परापेक्षाणामेव तिरोहितावयवभेदः समाहारः; यथा—छत्रोपानहमिति। अत्रापि कस्याश्चित् क्रियायां छत्रादेः परस्परापेक्षत्वम्। संहतिप्रधानत्वाच्चैकवचनम्। यदि तर्हि समुच्चयान्वाचयावपि चार्थौ तदा तयोरपि समासः प्राप्नोतीत्यत आह—तत्रेत्यादि।

### पदमञ्जरी

चार्थे द्वन्द्वः॥ समुच्चयेत्यादि। यदा परस्परनिरपेक्षाः पदार्था एकस्मिन्प्रतिसम्बन्धिनि समुच्चीयन्ते तदा समुच्चयः, यथा—"अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदी" वोपसर्ज[illegible] यथा सुरायाः न तृप्यति तथा यमो गवादीन्नयमान इत्यर्थः। अत्र नयतिक्रियायामेकस्यां गवादी[illegible]ः, गम्यमानत्वाच्च च-शब्दस्याप्रयोगः। एवं राज्ञो गौश्चाश्वश्चेति द्रव्ये द्रव्ययोः, रक्तः शुक्लश्चेति द्रव्के[illegible]ोः, रक्तः पटः कुण्डलं चेति गुणे द्रव्ययोः समुच्चय इत्यादि द्रष्टव्यम्। यदानेकस्य प्राधान्यात्तदनुरोधेन [illegible] चीयते तदान्वाचयः, यथा—भिक्षामट गाञ्चानयेति। अत्र ह्यदर्शनादनानयन्नपि गामटत्येव भिक्षाम्, अनटे[illegible]

### भावबोधिनी

'अनेकमन्यपदार्थे' (पा० सू० २।२।२४ सूत्र से 'अनेकम्' इसकी अनुवृत्ति होती है। 'च' के अर्थ में विद्यमान अनेक सुबन्त शब्दों का समास होता है और इस समास का नाम = संज्ञा द्वन्द्व होता है। (१) समुच्चय, (२) अन्वाचय, (३) इतरेतरयोग और (४) समाहार—ये चार 'च' के अर्थ होते हैं। इनमें असामर्थ्य के कारण समुच्चय और अन्वाचय अर्थों में समास नहीं होता है। इतरेतरयोग और समाहार में समास का विधान किया जाता है। [इतरेतरयोग चार्थ में समास का ] उदा०—प्लक्षश्च न्यग्रोधश्च, धव[illegible]रश्च पलाशश्च—इस विग्रह में [इतरेतरयोग में] प्लक्षन्यग्रोधौ [पिलखुआ और पीपल] धवखदिरपलाशाः। [illegible] सूत्र द्व[illegible] में समास का उदा०—] वाक् च त्वक् च—वाक्त्वचम् [वाणी और चमड़ी। समास के बाद टच् = अ सम[illegible]य होता है। वाक् च दृषद् च—वाक्दृषदम् [वाणी और पत्थर। यहाँ भी समासान्त प्रत्यय होता है।] [illegible]आसन्न, अदू[illegible] [illegible]य समास

द्वन्द्व के प्रयोगस्थल 'द्वन्द्वे च' (पा० सू० १।१।३१) आदि [illegible] घटित सूत्र] हैं।

विमर्श—'च' के चार अर्थ हैं—(१) समुच्चय, (२) अन्वाचय, (३) इतरेतरयोग, (४) समाहार। परस्पर निरपेक्ष अनेक पदार्थों का आवृत्त एक क्रिया पद में क्रमशः अन्वय होना 'समुच्चय' कहा जाता है। जैसे—ईश्वरं गुरुं च

**न्यासः**

समुच्चये तावत् परस्परानभिसम्बन्धा एव गवादयो नयनादिभिः सम्बध्यमानाः समुच्चीयन्त इत्यसामर्थ्यात् सत्यपि चार्थे तस्मिन् न भवति समासः। अन्वाचयेऽप्येकं सापेक्षं नेतरत्, यथा—पूर्वोक्त उदाहरणे। तत्र हि गवानयनं भिक्षाटनमपेक्षते, न तु भिक्षाटनं गवानयनम्; विनापि तेन तदनुष्ठानात्। स यदि गां पश्यति तदा तामप्यानयति, न चेत् भिक्षामेवाटतीत्यन्तरापेक्षारहिते चार्थे न भवति समासः। **इतरेतरयोगे समाहारे च विधीयत इति।** तत्र सर्वेषां सामर्थ्यस्य विद्यमानत्वात्। **वाक्त्वचम्, वाग्दृषदमिति।** 'द्वन्द्वाच्चुदषहान्तात् समाहारे' इति टच् समासान्तः। 'जातिरप्राणिनाम्' इत्येकवद्भावः॥ २९॥

**पदमञ्जरी**

भिक्षां न गामानयति, अटन्नपि नान्विष्य गामानयति। इतरेतरयोगस्तु परस्परापेक्षाणामवयवभेदानुपगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सति भवति, यथा—देवदत्तयज्ञदत्ताभ्यामिदं कार्यमिति। तथैकापायेऽपि तद्भवनि, उद्भूतावयवभेदत्वाच्च द्विवचनबहुवचने भवतः, तादृशानामेवावयवतिरोधानसंहतिरूपेणान्वये तत्समाहारः, यथा—छत्रोपानहमिति, संहतिप्रधानत्वात्त्वेकवचनम्। **तत्रेत्यादि।** स्यादेतत्—समुच्चये परस्परानपेक्षत्वेऽपि गवादीनामेकक्रियाद्वारकं सामर्थ्यं दध्योदनादिवदस्त्येवेति, तन्न युक्तम्; दध्योदनादावेकत्वात् क्रियायाः। इह तु कर्मभेदात्क्रिया भिद्यते, तथा च 'समुच्चयेऽन्यतरस्याम्' इत्यत्र भ्राष्ट्रमट मठमटेत्यादिकं कर्मभेदनिबन्धनं क्रियाभेदमाश्रित्योदाहरिष्यते। अन्वाचये त्वप्रधानमेव चार्थे वर्तते, न प्रधानमित्यनेकस्य पदस्य चार्थे वृत्त्यभावादपि समासाभावः। इह पटुश्चासौ खञ्जश्चेत्येकस्मिन्धर्मिण्यनेकधर्मसमुच्चयाच्चार्थसद्भावात्समानाधिकरणयोरपि द्वन्द्वसंज्ञाप्रसङ्गः, ततश्च 'द्वन्द्वे घि' इति नियमः स्यात्, विशेषणमित्यादिना तु तत्पुरुषकरणे खञ्जपटुरित्यपि सिद्ध्यति ? नैष दोषः; एकसंज्ञाधिकाराद्विशेषविहितत्वात्तत्पुरुषसंज्ञैव भविष्यति, अन्यथा नीलं च तदुत्पलं चेत्यादावपि द्वन्द्वः स्यात्। यद्वा—'शेष' इति वर्तते, अतो विशेषणमित्यत्रोपयुक्तत्वान्न भवि[illegible]सामानाधिकरण्याभावे तु द्वन्द्व एव—पटुखञ्जावागताविति।

**भावबोधिनी**

भजन[illegible]जन क्रिया में पहले ईश्वर का अन्वय होता है बाद में गुरु का। अतः एक साथ अन्वय न होने के [illegible]समास नहीं होता है। जहाँ किसी एक क्रिया पद में एक का आनुषङ्गिक होते हुये और दूसरे का विषय [illegible]न्वय होता है तब 'अन्वाचय' कहा जाता है। यहाँ भी एक साथ अन्वय न होने के कारण समास नहीं होता है।

परस्पर-सापेक्ष समुदितों का एक क्रिया पद में जहाँ अन्वय होता है वहाँ इतरेतरयोग = परस्पर साहचर्य अर्थ होता है। दोनों का साहित्य सूचित करने के लिये इसमें दो चकारों का प्रयोग होता है। जैसे—धवश्च खदिरश्च छिन्धि = धवखदिरौ छिन्धि। एक साथ ही छेदन क्रिया में धव और खदिर का अन्वय होता है। इसलिये यहाँ समास होता है। जब समूह अर्थ प्रतीत होता है तब 'समाहार' होता है। यहाँ एक साथ ही एक क्रिया में अन्वय होने के कारण समास होता है। जैसे—संज्ञा च परिभाषा च—अनयोः समाहारः—संज्ञापरिभाषम्। साहित्य की प्रतीति कराने के लिये दो चकारों का प्रयोग होता है। [illegible] समूह एक होता है और उसका कोई लिङ्ग नहीं होता है। अतः नपुंसकलिङ्ग एकवचन का प्रयोग किया जाता है[illegible]

साहित्य और द्रव्य इन दोनों में [illegible]नता है और किसकी उपसर्जनता ? इतरेतरयोग में साहित्य उपसर्जन और द्रव्य प्रधान होता है अतः द्रव्य[illegible]न और लिङ्ग आदि होते हैं। परन्तु समाहार में द्रव्य उपसर्जन और साहित्य प्रधान होता है अतः एकवचन [illegible] लिङ्ग ही होता है।

नीलं च तदुत्पलं च यहाँ भी चद्व[illegible] प्रयोग होता है और एकार्थीभाव है, अतः द्वन्द्व होना चाहिये ? इस शंका का समाधान यह है कि 'विशेषणं विशेष्येण बहुलम्' (पा० सू० २।१।५७) इससे सामानाधिकरण्य में विहित तत्पुरुष संज्ञा द्वारा द्वन्द्व संज्ञा का बाध हो जाता है। अतः कर्मधारय तत्पुरुष ही होता है॥ २९॥

## ४५३. उपसर्जनं पूर्वम् ॥ ३० ॥ (६५४)

'समासे' इति वर्त्तते। उपसर्जनसंज्ञकं समासे पूर्वं प्रयोक्तव्यम्। पूर्ववचनं परप्रयोगनिवृत्त्यर्थम्।

**न्यासः**

उपसर्जनं पूर्वम् ॥ पूर्ववचनं परप्रयोगनिवृत्त्यर्थमिति। ननु च परप्रयोगविपर्ययो लोके न दृष्ट एव,

**पदमञ्जरी**

प्लक्षन्यग्रोधाविति। चशब्दस्याव्ययत्वेऽपि तदर्थे विधीयमानस्य द्वन्द्वस्य स्वभावादेव लिङ्गसंख्यायोगः। कथं पुनरत्र द्विवचनम्, यावता शब्दपौर्वापर्यादर्थाभिधानेऽपि पौर्वापर्यम्, ततश्च प्लक्षशब्दः सहार्थेन निवृत्तः न्यग्रोधशब्दः उपस्थितः, एक एवार्थस्तस्यैकत्वादेकवचनमेव प्राप्नोति, तथा च 'आद्यन्तौ टकितौ' इति क्रमेण प्रतीतिमङ्गीकृत्य यथासंख्यमित्यस्य प्रवृत्तिः, न च क्रमेण द्वयोरर्थयोः प्रतीतौ द्विवचनं भवति; यथा वा वाक्ये प्लक्षश्च न्यग्रोधश्चेति। अत्र न्यग्रोधार्थप्रतीतिदशायां प्लक्षार्थस्याप्रतीतिरेव कारणम्? अस्तु तर्हि युगपदधिकरणवचने द्वन्द्वः। किमिदं युगपदधिकरणवचन इति? अधिकरणं वर्तिपदार्थः, अधिकरणे युगपद्वचनं युगपदधिकरणवचनम्, तत्र द्वन्द्वो भवति। केन पुनर्युगपद् द्वयोर्वचनम्? एकैकेन पदेन। एतदुक्तं भवति—यावतां पदानां द्वन्द्वो यदि तावतामन्योऽन्यार्थाभिधानं युगपद्भवत्येवं द्वन्द्वो भवतीति। अत्र हि द्विवचनबहुवचनान्यथानुपपत्तिरेव प्रमाणम्; विग्रहे चापि दर्शनात्। विग्रहे खल्वपि युगपद्वचनता दृश्यते—प्रमित्रयोर्वरुणयोः (ऋ० ७.६६.१), द्यावाचिदस्मै पृथिवी नमेते (ऋ० २.१२.१३) इति; किं पुनः समासे, यत्र चान्याचान्या च शक्तिः प्रादुर्भवति? कथं पुनः प्लक्षशब्देन न्यग्रोधाभिधानम्, तेन वा तस्य? साहचर्यादिति। यद्वा तद्वा निमित्तं भवतु, यद्यपि च लोकव्यवहारे केवलस्य प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं न दृष्टं न्यग्रोधशब्दस्य वा प्लक्षाभिधायित्वम्, द्वन्द्वावयवानां त्वनेकार्थाभिधायित्वं न केवलानामित्यदोषः। नियतविषयाश्चापि शब्दार्था भवन्ति, यथा—भ्रातृशब्दस्यैकशेष एव स्वसरि वृत्तिः, पुत्रशब्दस्य दुहितरि। एतेनैतदपि निरस्तम्—एकेनोक्तत्वात्तस्यार्थस्य परस्य प्रयोगो नोपपद्यत इति।

कथं द्वन्द्वावयवानामेव परस्परसन्निधानादेषा शक्तिर्वह्निसन्निधाविव घृते द्रवता, नो ख[illegible]वोपसर्ज[illegible]द्वी[illegible] भवति, यदि तर्हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थः, बहुत्वाद्बहुवचनं प्राप्नोति? नात्र चत्वा[illegible]हीत[illegible]र्थाः, किं तर्हि? याभ्यामेवात्रैको द्व्यर्थस्ताभ्यामेवापरोऽपि। स्यादेतत्—उभयोरत्र पर्यायत्वे यथा प्लक्षन्य[illegible] न्यग्रोधाविति द्विर्वचने प्रतीतिः, एवं प्लक्षन्यग्रोधावित्यत्रापि प्राप्नोति, तन्न; युगपदुत्पादात्। तद्यथा[illegible] रक्षणोर्युगपद्विस्फारितयोः पुरोवर्तिन्यर्थद्वये युगपदेका प्रतीतिर्जन्यते। तथेहापि द्रष्टव्यम्। ननु यदा प्लक्षशब्दो न तदा न्यग्रोधशब्दः, यदा न्यग्रोधशब्दो न तदा प्लक्षशब्दः इति कथमत्र युगपद्व्यापारः? स्मृतिस्थयोर्युगपद्व्यापाराददोषः। पदानि हि श्रुतमात्राणि स्वं स्वमर्थं स्मारयन्ति, पश्चादाकाङ्क्षासन्निधियोग्यत्वेषु परामृष्टेषु स्मृतिस्थान्यभिदधति, तस्यामेव स्मृतौ युगपदारोहात्सम्भवत्येव युगपद्व्यापारः। या च सा पदार्थानां स्मृतिः सा क्रमभाविनीति तत्क्रमेणैव यथासंख्यादिव्यवस्था युगपदभिधानेऽप्युपपद्यते। तदेवं युगपदधिकरणवचने द्वन्द्व इति स्थितम्। इहैकविंशतिर्द्वाविंशतिरिति, यद्ययं द्वन्द्वः स्याद् एकं च विंशतिश्चेतीतरेतरयोगे द्विवचनबहुवचनप्रसङ्गः, समाहारे च 'स नपुंसकम्' इति नप[illegible]ङ्गः, अत एव एकाधिका विंशतिरेकविंशतिरिति शाकपार्थिवादित्वात्समासः क्रियते? नैवं शक्यम्, [illegible]सूत्र द्वा[illegible]ङ्गः[illegible]वचनद्वन्द्वेऽन्धकवृष्णिषु संख्या' इति पूर्वपदप्रकृतिस्वरो न स्यात्। तस्माद् द्वन्द्व एवायम्। स स[illegible]मासन्न, अद्व[illegible]रेतरयोगे, अनभिधानात्। नपुंसकत्वन्तु 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' (चान्द्रपरि० ७३) इति[illegible]य समास ॥ २९ ॥

उपसर्जनं पूर्वम् ॥ अनियमो हि स्यादिति। यद्यपि [illegible]प्रयोगो लोके न दृष्टः परपुरुषापराधात्तु

**भावबोधिनी**

'समासे' इसकी अनुवृत्ति होती है। समास में उपसर्जन संज्ञावाले का पूर्व में प्रयोग करना चाहिये। पर में प्रयोग को रोकने के लिये 'पूर्वं' का विधान है। अन्यथा अनियम होने लगेगा। अर्थात् किसका प्रयोग पहले हो और •

